# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

[ त्रैमासिकी ]




प्रधानसम्पादकः

श्रीकुबेरनाथशुक्लः, एम० ए०,

व्याकरणाचार्य.

सहायकसंपादकः

श्रीव्रजवल्लभद्विवेदो दर्शनाचार्यः





वार्षिकम्

७॥)

प्रत्यङ्कम्

१॥=)

# विषय-सूची



## सम्पादकीयम्



## ग्रन्थाः

# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयपत्रिका

१. एषा देशे विदेशे च लब्धप्रसारा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठभाद्रमार्गफाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्तेः समालोचना-प्रवृत्तेरुद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां सरस्वतीभवनस्य काशिकराजकीयसंस्कृतमहाविद्यालयस्य च विदुषामन्येषां च लेखकाना मौलिकविचारपूर्णा अनुसन्धानप्रधाना अन्य-विधाश्चोपयोगिनो निबन्धाः प्रकाश्यन्ते।

५. उपर्युक्तप्रकारा एव निबन्धाः प्रकाशनार्थं प्रेषणीयाः।

६. फुलस्केपपरिमितेषु पत्रेष्वेकस्मिन् पार्श्व एव पर्याप्तं रिक्तं स्थानं (मार्जिन) दत्त्वा सुस्पष्टं शोभनाक्षरैर्लिखिता निबन्धा ग्राह्या भविष्यन्ति।

७ निबन्धे संशोधनाधिकारः सम्पादकायत्तः।

८ अस्वीकृता निबन्धाः प्रत्यावर्तनव्ययप्राप्तौ सत्यामेव परावर्तिताः स्युः।

९. लेखकैः प्रकाशितनिबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः।

१० पत्रिकायाः प्रत्यङ्कं विशिष्टानां हिन्दीसंस्कृताङ्गलग्रन्थानां समालोचनाः प्रकाश्यन्ते।

११. लेखकैः प्रकाशकैश्च समालोचनार्थं सम्पादकपार्श्वे ग्रन्थस्य द्वे प्रती प्रेषणीये।

१२. अस्या वार्षिकं मूल्यं सार्द्धसप्तरूप्यकाणि प्रत्यङ्कं चाणकद्वयन्यूनं रूप्यक-द्वयं वर्तते।

१३. पत्रिकायाश्चतुर्थपञ्चमषष्ठवर्षीया अङ्का अर्धमूल्येन प्राप्तुं शक्यन्ते।

१४. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः–"सम्पादक, सारस्वती सुषमा, राजकीयसंस्कृतमहाविद्यालय, बनारस २" इति संकेतेन विधेयः।

# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

६ वर्षः { ज्येष्ठभाद्रौ २०११ { १-२ अङ्कौ


## श्रुतिविमर्शः

### कौषीतकिब्राह्मण आचारविचाराः

अथवा

### कौषीतकिब्राह्मणपर्यालोचनम्


डाक्टरमङ्गलदेवशास्त्री, भूतपूर्वप्रधानाचार्यः, रा० सं० म०, काशी।


निधानं यद्धि शक्तीनां सर्वासामन्ततो मतम्।
आत्मरूपेण सर्वेषां भाति यत्तदुपास्महे॥
निर्मलं शाश्वतं शान्तमवाङ्मनसगोचरम्।
विद्यते यन्महत्तेजस्तन्मे नित्यं प्रकाशताम्॥

नानाविधज्ञानविज्ञानप्रतिपादकत्वेनातिगभीरं सुविस्तृतं च खलु वैदिकं वाङ्मयमिति नाविदितं विदुषाम्। तस्यैव तत्तद्भागक्रमेण विचारणीयान् विवेचनीयांश्च विषयानधिकृत्य प्रबन्धमालारूपेण प्रवृत्तोऽयं श्रुतिविमर्शो नाम महानिबन्धः। तस्यैवैतस्य महानिबन्धस्य **ऐतरेयपर्यालोचने** नाम प्रथमे निबन्धे ऐतरेयारण्यकवर्जमैतरेयब्राह्मणगताः, द्वितीये च **ऐतरेयारण्यकपर्यालोचने** नाम निबन्धे ऐतरेयारण्यकगता रीति-नीति-स्वर्ग-यज्ञस्वरूप-तत्त-देवतास्वरूप-तत्तत्पदार्थविज्ञानादिविषयका विचाराः सङ्गृहीताः स्पष्टीकृताश्च पूर्वमस्माभिः।

अस्मिन् पुनः कौषीतकिब्राह्मणपर्यालोचने नाम तृतीये निबन्धे ऋग्वेदीय कौषीतकि-ब्राह्मणमधिकृत्य तादृशा एव विचाराः सग्रथ्यन्तेऽस्माभिः ।

अस्मिन् हि ब्राह्मणे त्रिंशदध्यायाः । अत एव "त्रिंशच्चत्वारिंशतोर्ब्राह्मणे सज्ञाया डण्" (पाणिनि० ५।१।६२) इत्यस्य सूत्रस्य "त्रिंशदध्यायाः परिमाणमेषा ब्राह्मणाना त्रैंशानि ब्राह्मणानि" इत्यस्मिन्नुदाहरणे त्रैंशानि ब्राह्मणानीत्यनेनास्य कौषीतकिब्राह्मणस्यैव ग्रहणमिति विदुषा मतम् ।

खेदस्यायं विषयो यदद्य यावद् ब्राह्मणस्यास्य किमपि भाष्य विवरण वा नैव मुद्रि-तम् । उपलभ्यते परं विनायकेन विदुषा निर्मित प्रसन्नगम्भीर तद्भाष्य[1] हस्तलिखित यत्र तत्र हस्तलिखितप्राचीनग्रन्थालयेषु । तथैव ए०बी०कीथनामकेन विपश्चिता कृत तस्य इङ्ग्लिशभाषान्तरमपि नाविदित विदुषाम् । विषमस्थलेषु प्रायेण तयोरेव साहाय्येन लिखि ताभिः क्वचित्क्वचित् स्वोपज्ञाभिरपि काभिश्चिट्टिप्पणीभि. समुपेत पर्यालोचनमिद प्रस्तु-तीक्रियते ।

यद्यपि "कर्मचोदना ब्राह्मणानि" (आपस्तम्बयज्ञपरिभाषासूत्रम् ३२) इत्याद्युक्ते-र्ब्राह्मणत्वेन कौषीतकिब्राह्मणग्रन्थस्यापि विधिप्रतिपादनमेव मुख्यो विषयः, तथापि प्रस्तुतेऽस्मिन् पर्यालोचने ग्रन्थस्य तस्य मुख्यप्रतिपाद्यविषयमपहाय, प्रथमे निबन्ध इव, प्रायेणार्थवादेषु निबद्धाः प्रसङ्गागतास्तदानीन्तनरीतिनीत्यादिपरिचायका एव विषया. क्रमेण सगृहीता विमृष्टाश्च नून विदुषा मनस्तोषायेतिहासादिविषयकज्ञानवृद्धये च भवेयुरिति नो विश्वासः ।

तस्मिन्नेतस्मिन् पर्यालोचने क्रमेणोपनिबद्धा विषया एते—

(१) वाङ्मनसयोः स्वरूप महिमा च ।

(२) जीवने समुन्नते· श्रमस्य च महिमा ।

(३) सत्यभाषणादिसदाचारस्य ज्ञानस्य च प्रशसा, पाप्मनो निन्दा च ।

---

१ तस्यादिमं पद्यद्वयमेव पठ्यते—"विश्वोत्पत्तिनिदानमादिपुरुष सर्वेश्वरं साक्षिण, धर्मब्रह्मविधानवेदवदन ब्रह्माण्डकोट्यन्तरम् । मीमासायुगमानस स्मृतिपद भक्तानुकम्पास्पद, श्रद्धाशुद्धधिया स्मरामि वरद श्रीरामचन्द्राह्वयम् ॥ १ ॥ विद्यावदातप्रथितोरुकीर्तनश्रीमाधवस्वामिगुरो प्रसादत । कौषीतकिब्राह्मण-भाष्यमादरात् करोमि माध्यन्दिनकौथुमानुगम् ॥ २ ॥"

(४) सम्पत्तेर्महत्त्वं दारिद्र्यस्य निन्दा च ।

(५) दानमातिथ्यं च ।

(६) लौकिका दृष्टान्ताः ।

(७) यज्ञस्य महिमा स्वरूपं च, तथार्त्विज्यम् ।

(८) देवानां सामान्येन, तत्तद्देवानां पितॄणां गन्धर्वाणां रक्षसां देवासुराणां स्वर्गादिलोकानां च वर्णनम् ।

(९) अग्न्यादिपदार्थविज्ञानम् ।

(१०) मनुष्यस्य पश्वादेश्च स्वभावादिवर्णनम् ।

(११) प्रकीर्णकम् ।

## ( १ ) वाङ्मनसयोः स्वरूपं महिमा च

ऐतरेयब्राह्मण ऐतरेयारण्यक इव चास्मिन्नपि ब्राह्मणे वाङ्मनसयोः स्वरूपं महिमा च विविधरूपेण यत्र तत्र श्रूयते । तद्यथा—

**अथो वाग्वै सार्पराज्ञी । वाग्घि सर्पतो राज्ञी । ( कौ० ब्रा० २७।४ )**

वाग्घि सर्पतः प्राणिजातस्य राज्ञी । वाचा हि प्राणिजातं सनाथं भवति । तथा चोक्तं बृहदारण्यकोपनिषदि ( ४।३।५ )—"अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किंज्योतिरेवायं पुरुष इति । वागेवास्य ज्योतिर्भवतीति । वाचैवायं ज्योतिषास्ते ।" काव्यादर्शे तु सुतरां स्पष्टीकृतोऽयमर्थः । तथा हि—"वाचामेव प्रसादेन लोकयात्रा प्रवर्तते ॥ इदमन्धतमः कृत्स्नं जायेत भुवनत्रयम् । यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥" ( १।३-४ )

**उदीच्यां दिशि प्रज्ञाततरा वागुद्यते । उदञ्च उ एव यन्ति वाचं शिक्षितुम् । यो वा तत आगच्छति तस्य वा शुश्रूषन्त इति ह स्माह । एषा हि वाचो दिक् प्रज्ञाता । ( कौ० ब्रा० ७।६ )**

तदत्र स्मृतिपथमायाति काशिकायां ( १।१।७५ ) जयादित्येन समुद्धृतं प्राचीनं पद्यमेतत्—"प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा । विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती ॥"

शालातुरीयस्य भगवतः पाणिनेराचार्यस्य उदग्देशाभिजनत्व प्रसिद्धमेव। प्राचीन-काले तक्षशिलाया विश्वविद्यालयस्य ख्यातिः सुदूरदेशदेशान्तरेष्वपि प्रसृतासीत्।

**एतद्ध वा एक वाचोऽनन्ववसितं पाप्मनो यन्निरुक्तम्। तस्मान्निरुक्तमनुब्रूयात्। ( कौ० ब्रा० ११।१ )**

अनन्ववसितम्। असबद्धम्। पाप्मन उच्चारणदोषेण। निरुक्त स्पष्टम्।
उच्चैर्निरुक्तमनुब्रूयात्प्रातरनुवाकम्—इत्येवात्र प्रकृतम्।

**जुष्टो वाचो भूयासं जुष्टो वाचस्पतेः। देवि वाग! यत्ते वाचो मधुमत्तमं तस्मिन्नो अद्य धात्। स्वाहा सरस्वत्यै।**

**( कौ० ब्रा०१०।६ )**

जुष्टः सेवितः। प्रीतिपात्रमिति यावत्। कृष्णयजुःसहितायामपि श्रूयते—"जुष्टो वाचो भूयास जुष्टो वाचस्पतये देवि वाक्। यद्वाचो मधुमत्तस्मिन् मा धाः स्वाहा सरस्वत्यै॥" ( ३।१।१०।१ )

**पुरुषः सर्वा वाचो वदति, एकैकामितरे पशवः। ( कौ० ब्रा० ३०।७ )**

सर्वा वाचा वदति। विविधपदार्थविषया वाचो वदतीति विनायकभाष्ये।

**रुचिता वै वाक् स्वयम्। ( कौ० ब्रा० १४।५ )**

रुचिता दीप्तिमती।

**वागनुष्टुप्। ( कौ० ब्रा० ५।६ )**

चतुष्पदा पूर्णा वागनुष्टुब् भवति। गायत्र्युष्णिहौ त्रिपदे इत्यपूर्णे। इय पूर्णा। ( विनायकः )।

**वागनुष्टुप्। वाचा यज्ञस्तायते। ( कौ० ब्रा० ७।६ )**

**वाग्दीक्षा। वाचा हि दीक्षते। प्राणो दीक्षितः। वाचा वै दीक्षया देवाः प्राणेन दीक्षितेन सर्वान् कामानुभयतः परिगृह्यात्मन्न-दधत। तथो एवैतद् यजमानो वाचैव दीक्षया प्राणेन दीक्षितेन सर्वान् कामान् उभयतः परिगृह्यात्मन्धत्ते। ( कौ० ब्रा० ७।१ )**

**वाग्वा इन्द्रः। न ह्यृते वाचः पवते धाम किञ्चन। ( कौ० ब्रा० २।७ )**

**वाग्वै पथ्या स्वस्तिः। ( कौ० ब्रा० ७।६ )**

**वाग्वै विश्वामित्रः। वाचा यज्ञस्तायते। ( कौ० ब्रा० १०।५ )**

वाचो विश्वामित्रत्वे हेतुरुच्यते—वाचा यज्ञस्तायत इति। यतो विश्वस्य कल्याणाथ यज्ञो वाचा तायते ततो वाग्वै विश्वामित्र इति भाव.।

**वाग्वै विश्वामित्रो। वाचैव तत्सर्वतो यज्ञ तन्वते। ( कौ० ब्रा० २६।३ )**

**वाग्वै सरस्वती। ( कौ० ब्रा० ५।२ )**

**वाग्वै सरस्वती। वाचा वा इदं स्वदितमन्नमद्यते। ( कौ० ब्रा० १२।८ )**

वाचो जिह्वा स्थानम्। रसनेन्द्रियस्यापि जिह्वा स्थानम्। तेन वाचाद्यत इत्युक्तम्—इति विनायकः।

**वाग्वै होता। ( कौ० ब्रा० १३।६ )**

**वाचं ह वा एतदाप्याययन्ति यद् वाचंयमा आसत आपीनां वाचमभ्यासिक्तामन्तत ऋध्नवामेति। ( कौ० ब्रा० २७।६ )**

ऋध्नवाम प्राप्नवाम। वाच. सयमेन आपीना पुष्टा वाग्भवतीत्यभिप्राय·।

**वाचं ह वा एतद्भूतान्याप्याययन्ति यद्वाचंयमानि शेरते, आपीनां वाचमव्या(भ्या)सिक्ता प्रथमत ऋध्नवामेति।**

**( कौ० ब्रा० ११।८ )**

आपीनाम्। रात्रौ शयनेन यो विश्रमस्तेन पुष्टाम्। अभ्यासिक्ताम् आभिमुख्येनासिक्ताम्। अव्यासिक्ताम् इति पाठे तु अव्याक्षिप्तामित्यर्थः। ऋध्नवाम समर्धयाम। भूतानि ( पशवो मनुष्या वयासि ) रात्रौ यद्वाचयमानि शेरते तद्वाच. परिपुष्ट्यर्थमेवेति भाव.।

**वाचा यज्ञस्तायते। ( कौ० ब्रा० ७।६ )**

**वीर्यवतीमाश्रितां देवेषु वाचमुद्यासम्। ( कौ० ब्रा० २८।१ )**

उद्यासम्। प्राप्यासम्।

**सोऽयं पुरुषो यः प्राणिति वापानिति वा। न तत्प्राणेन नापानेनाहेति प्राणिषं वापानिषं वेति। वाचैव तदाह। तत्प्राणापानौ वाचमपीतो वाङ्मयौ भवतः। अथ यच्चक्षुषा पश्यति न तच्चक्षुषाहेत्यद्राक्षमिति। वाचैव तदाह। तच्चक्षुर्वाचमप्येति वाङ्मयं भवति। अथ**

यच्छ्रोत्रेण शृणोति न तच्छ्रोत्रेणाहेत्यश्रौषमिति। वाचैव तदाह। तच्छ्रोत्रं वाचमप्येति वाङ्मयं भवति। अथ यन्मनसा सङ्कल्पयते न तन्मनसाहेति समचीक्लृपमिति। वाचैव तदाह। तन्मनो वाचमप्येति वाङ्मयं भवति। अथ यदङ्गैः सुशीमं वा दुःशीमं वा स्पृशति न तदङ्गैराहेति सुशीमं वा दुःशीमं वास्प्राक्षमिति। वाचैव तदाह। तत्सर्वं आत्मा वाचमप्येति वाङ्मयो भवति। तदेतदृचाभ्युदितम्—"नेन्द्रादृते पवते धाम किञ्चन" (ऋ० ९।६९।६) इति। वाग्वा इन्द्रो न ह्यृते वाचः पवते धाम किञ्चन। (कौ० ब्रा० २।७)

वाचमपीतः। वाङ्मयो वाक्प्रधानो भवत.। सुशीम सुप्रापम्। दुःशीम दुःप्रापम्।

एतद्ध वा एकमक्षरं त्रयी विद्या प्रतिप्रति। (कौ० ब्रा० ६।१२)

एतदक्षरम्। ओ३मित्यक्षरम्। प्रतिप्रति। प्रतिनिधिरूप प्रतीकरूप वा।

ब्रह्म वै प्रणवः। (कौ० ब्रा० ११।४)

शुद्धः प्रणवः स्यात्प्रजाकामानाम्। मकारान्तः प्रतिष्ठाकामानाम्। मकारान्तः प्रणव. स्यादिति हैक आहुः। शुद्ध इति त्वेव स्थितः। मीमांसितः प्रणवोऽथात इह शुद्ध इह पूर्ण इति। शुद्ध एव प्रणवः स्याच्छस्त्रानुवचनयोर्मध्य इति ह स्माह कौषीतकिः, तथा संहितं भवति। मकरान्तोऽवसानार्थे, प्रतिष्ठा वा अवसानम्, प्रतिष्ठित्या एव (कौ० ब्रा० ११।५)

मकारान्तः प्रणवः स्यादिति। नित्यकर्मणीति शेष। सहित पूर्वोत्तरसहितम्। शुद्धोऽनुनासिकेन मकारेण रहित इत्यर्थः। तु० "सव्यञ्जन. सानुस्वार. शुद्धो वापि स्वरोऽक्षरम्" इति ऋग्वेदप्रातिशाख्ये। शुद्धोऽनुस्वारेण रहित इति हि तत्र व्याख्यानम्।

एष ह वै यज्ञस्य व्यृद्धं समर्धयति य एताभिर्व्याहृतिभिः प्रायश्चित्तिं करोति। सर्वं ह वा उ स वेद य एता व्याहृतीर्वेद। तद्यथा ह वै दारुणः श्लेष्मसंश्लेषणं स्यात् परिचर्मण्यं वैवमेवैता व्याहृतयस्त्रय्यै विद्यायै संश्लेषिण्यः। (कौ० ब्रा० ६।१२)

तदाहुर्यदृचा होता होता भवति यजुषाध्वर्युरध्वर्युः साम्नो-

द्गातोद्गाता केन ब्रह्मा ब्रह्मा भवतीति । यमेवामुं त्रय्यै विद्यायै तेजोरसं प्राबृहत्तेन ब्रह्मा ब्रह्मा भवति । ( कौ० ब्रा० ६।११ )

तेजोरस भूर्भुवःस्वरितिव्याहृतिरूपमित्यर्थः ।

प्रजापतिस्तपोऽतप्यत । स तपस्तप्त्वा प्राणादेवेमं लोकं प्राबृहत् । अपानादन्तरिक्षलोकम् । व्यानादमुं लोकम् । स एताँस्त्रींल्लोकानभ्यतप्यत । सोऽग्निमेवास्माल्लोकादसृजत । वायुमन्तरिक्षलोकात् । आदित्यं दिव' । स एतानि त्रीणि ज्योतींष्यभ्यतप्यत । सोऽग्नेरेवर्चोऽसृजत । वायोर्यजूंषि । आदित्यात्सामानि । स एतां त्रयीं विद्यामभ्यतप्यत । स यज्ञमतनुत । स ऋचैवाशंसत् । यजुषा प्रातरत् । साम्नोदगायत् । अथैतस्या एव त्रय्यै विद्यायै तेजोरसं प्राबृहदेतेषामेव वेदानां भिषज्यायै । स भूरित्यृचा प्राबृहत् । भुव इति यजुषाम् । स्वरिति साम्नाम् । ( कौ० ब्रा० ६।१० )

प्राबृहत् वर्द्धितवान् । प्रातरत् अत्यन्त विस्तीर्णवान् । तेजोरस सारम् ।

सर्वं ह वा उ स वेद य एता व्याहृतीर्वेद । तद्यथा ह वै दारुणः श्लेष्मसश्लेषणं स्यात् परिचर्मण्यं वा । एवमेवैता व्याहृतयस्त्रय्यै विद्यायै संश्लेषण्यः । ( कौ० ब्रा० ६।१२ )

( वज्रो वै वषट्कारः । ) एते एव वषट्कारस्य प्रियतमे तनू यदोजश्च सहश्च । ( कौ० ब्रा० ३।५ )

प्रियतमे तनू निर्भर्त्सनशक्ती । ( विनायक. ) ।

न ह वा ऋक् छन्देण यातयामा भवति, नानुवचनेन । वषट्कारेणैव सा यातयामा भवति समानेऽहन् । ( कौ० ब्रा० २२।१ )

वज्रो वै वषट्कारः । ( कौ० ब्रा० ३।५ )

वषट्कारेण ह वा ऋग्यातयामा भवति समानेऽहन् । ( कौ० ब्रा० ८।६ )

वज्रो वै हिङ्कारः । वज्रेणैव तद्यजमानस्य पाप्मानं हन्ति । (कौ० ब्रा० ३।२)

वज्रो वै हिङ्कारः वज्रेणैव तद् यजमानस्य पाप्मानं हन्ति । उच्चैर्निरुक्तमनुब्रूयात् । ( कौ० ब्रा० ११।१ )

वज्रो हिङ्कारः । प्रतिकूलवर्जने व्यवहारात् । निरुक्त स्पष्टम् । ( विनायकः )

**प्रतिष्ठा वै शंयोर्वाकः । ( कौ० ब्रा० ३।८ )**

**प्रतिष्ठा वै सूक्तवाकः । ( कौ० ब्रा० ३।८ )**

**प्राणा वै स्तवः । ( कौ० ब्रा० ८।३ )**

**ब्रह्म वै जपः । ( कौ० ब्रा० ३।७ )**

**अमृतं वा ऋक् । अथो ब्रह्म वा ऋक् । ( कौ० ब्रा० ७।१० )**

**एतत्परिचरणावितरौ वेदौ । ( कौ० ब्रा० ६।११ )**

एतत्परिचरणौ । एतस्य बह्वृचवेदस्य परिचरणौ । स्वाधारमस्माद् वेदाल्लभेते इत्युपजीविनाविति भावः । एतदेवाधस्ताद्विशेषतो व्याख्यायते ।

**एतत्परिचरणावितरौ वेदौ । अत्र च भूयिष्ठा होत्रा आयत्ता भवन्तीति । ऋग्भिर्ग्रहा गृह्यन्ते । ऋक्षु सामानि गीयन्ते ।**

**( कौ० ब्रा० ६।११ )**

एतत्परिचरणौ । एतस्य बह्वृचस्य परिचरणभूतौ । अत्र ऋग्वेदे । होत्रा होतृकर्माणि होत्रका ऋत्विजो वा ।

**प्राणा वै छन्दांसि । ( कौ० ब्रा० ७।९ )**

**अतिच्छन्दा वै प्रजापतिः । ( कौ० ब्रा० २३।८ )**

**ज्योतिर्वै गायत्री । तमः पाप्मा रात्रिः । तेन तज्ज्योतिषा तमः पाप्मानमपघ्नन्ति । ( कौ० ब्रा० १७।६ )**

गायत्री ज्योतिरग्नेर्जातत्वात् । तमः पाप्मा रात्रि. । तमोहेतुत्वात्तमस. पाप्महेतुत्वात् परम्परासम्बन्धादिति विनायकभाष्ये ।

**ब्रह्म वै गायत्री । क्षत्रं त्रिष्टुप् । ( कौ० ब्रा० ३।५ )**

**पशवो वै जगती । जागताः पशवः । ( कौ० ब्रा० ३०।२ )**

**एकादशाक्षरा वै त्रिष्टुप् । त्रैष्टुभ इन्द्रः । ( कौ० ब्रा० ३।२ )**

**क्षत्रं वै त्रिष्टुप् । ( कौ० ब्रा० ७।१० )**

इन्द्रस्य त्रिष्टुबिति संहिताश्रुतेः । ( विनायकः ) ।

**क्षत्रस्यैवैतच्छन्दो यत्त्रिष्टुप । ( कौ० ब्रा० १०।५ )**

**बलं वै वीर्यं त्रिष्टुप्।** ( कौ० ब्रा० ७।२ )

**पञ्चपदा पङ्क्तिः। पाङ्क्तो यज्ञः। पाङ्क्ताः पशवः। पाङ्क्तः पुरुषः।** ( कौ० ब्रा० १३।२ )

पाङ्क्तो यज्ञः। यजमानश्चत्वार ऋत्विज इत्येवं पञ्चावयवो यज्ञः। पाङ्क्ताः पशवः। चतुर्भिः पादैर्मुखेन च योगात् पाङ्क्ताः पशवः। पाङ्क्तः पुरुषः। तदुक्तमैतरेयब्राह्मणे— "पाङ्क्तोऽयं पुरुषः पञ्चधा विहितो लोमानि त्वङ् मांसमस्थि मज्जा" ( २।१४ )।

**मनसा हि मनः प्रीतम्, मनसा हि मनः प्रीतम्।** ( कौ० ब्रा० १०।६ )

मनःप्रसादस्य मुख्यं कारणं स्वविचारा एवेति भावः। अथवा वास्तविकी मनःप्रीतिर्भावाश्रिता एव भवति, वाङ्मात्रेण सा कर्तुं न शक्यत इति भावः। तदेतत्प्रपञ्चितमस्माभिः स्वकीय रश्मिमालायाः—"सुखस्य कारणं स्वान्तम्" ( १३ ) इत्यस्मिन्नधिकरणे, 'भावसंशुद्धिः', 'मनःप्रसादः' इत्याख्ययोः प्रकरणयोश्च।

**मनो वा अग्रणीर्भवत्येषां प्राणानाम्।** ( कौ० ब्रा० १७।७ )

तदत्र द्रश्यतां माध्यन्दिनशुक्लयजुर्वेदस्य चतुस्त्रिंशेऽध्याये—"तन्मे मनः शिवसंकल्पमस्तु" इत्येतत्प्रकरणम्।

**मनो वा एतद्यदपरिमितम्। प्रजापतिर्वै मनः। यज्ञ उ वै प्रजापतिः। स्वयं वै तद्यज्ञो यज्ञस्य जुषते यन्मनो मनसः।** ( कौ० ब्रा० २६।३ )

**वाचि च वै मनसि चेदं सर्वं हितम्।** ( कौ० ब्रा० ६।३ )

## ( २ ) जीवने समुन्नतेः श्रमस्य च महिमा

"कृधी न ऊर्ध्वाञ्चरथाय जीवसे" ( ऋग्० १।३६।१४ ), "भद्रादभि श्रेयः प्रेहि" ( ऐतरेयब्राह्मणे १।१३ ), "इन्द्र इच्चरतः सखा" ( ऐतरेयब्रा० ७।१५ ) इत्येवं शतशः स्थलेषु श्रुतिषु समुन्नतेः श्रमस्य च महत्त्वमुद्घोष्यते। अस्मिन् ब्राह्मणेऽपि तन्महत्त्वं स्वकीयया कयाचिदसाधारण्या शैल्या प्रतिपाद्यते। तथा हि—

**अगर्तस्कन्द्यं रोहस्य रूपं स्वर्ग्यम्।** ( कौ० ब्रा० ११।४ )

अगर्तस्कन्द्यमारोहस्य स्वर्ग्यं रूपम्। गर्तस्कन्दरहितमेवारोहणं जीवने प्रशस्तं मन्यत इति भावः।

**ऊर्ध्व वा उ वयं संवत्सरं रोहामः। ( कौ० ब्रा० २६।१ )**

संवत्सरं संवत्सरमिति कृत्वा संवत्सरशो वा जीवने समुन्नत्या एव मानवैः प्रयतनीयमिति भावः। तथा चोक्तमस्माभिरेव रश्मिमालायाम्—"उत्तरोत्तरमुत्कर्षि जीवनं शाश्वतं हि नः। अस्पृष्टं तमसा चापि मोहरूपेण सर्वथा॥" ( २।७ )

**कामान् ध्यायन्ते, यत्कामा भवन्त्ययं नः कामः समृध्यतामिति स उ हैभ्यः कामः समृध्यते। ( कौ० ब्रा० २७।६ )**

तथा च श्रूयते गोपथब्राह्मणेऽपि—"स मनसा ध्यायेत्—यद्वा अहं किञ्चन मनसा ध्यास्यामि तथैव तद् भविष्यति। तद्ध स्म तथैव भवति।" ( १।१।६ ) इति।

**द्वन्द्वं वै वीर्यम्। ( कौ० ब्रा० ८।७ )**

एकाक्यपेक्षया द्वौ वीर्यवन्तौ। ( विनायकः )। कस्यापि कार्यस्य सिद्धावन्यस्य साहाय्यमपेक्ष्यत एवेति निष्कर्षः।

**यथा तु प्रायणं तथोदयनम्। ( कौ० ब्रा० ३०।१ )**

प्रायणं प्रारम्भः। उदयनं समाप्तिः।

**मितं ह वै मितेन जयत्यमितममितेन। ( कौ० ब्रा० १०।१ )**

प्रयत्नानुसारेणैव फलस्य प्राप्तिर्भवतीति तात्पर्यम्।

**वाजी हि वाजी।...वोढा हि वाजी। जिष्णुर्हि वाजी। ( कौ० ब्रा० १७.४ )**

तथा च श्रूयते ऐतरेयब्राह्मणे—"वहति ह वै वह्निर्धुरो यासु युज्यते" ( ६।१८ )।

**अन्तो गतिः। ( कौ० ब्रा० २६।१४ )**

तदुच्यते—"प्रारब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम्।" अथवा—"प्रारभ्य तूत्तमजना न परित्यजन्ति।" इति।

**अन्तो वै क्षयः। ( कौ० ब्रा० ८।१ )**

क्षयो निवासस्थानम्। कार्यं समाप्यैव विश्रमोऽपेक्षणीय इति भावः।

**एतीव वा अन्तं गत्वा। कश्यङ् हि तत इयात्। ( कौ० ब्रा० २६।१४ )**

पान्थोऽन्तं गत्वा पश्चादेतीव। आगन्तुकामो गतं निवृत्तमिति मन्यते। ( विनायकः )

**क्षियतीव वा अन्तं गत्वा। कश्यङ् हि तत इयात्। ( कौ० ब्रा० २६।१५ )**

ध्रियतीव निवसतीव । गमनस्य निवृत्तेः ।

**तिष्ठतीव वा अन्तं गत्वा । कम्यङ् हि तत इयात् । ( कौ० ब्रा० २०।४ )**

कार्यान्ते गत्वा मनुष्यस्तिष्ठतीव । पश्चात् किञ्चिदञ्चित्वोद्दिश्य तत इयात् ।

**नीव वा अन्तं गत्वा नृत्यति । कम्यङ् हि तत इयात् ।**

**( कौ० ब्रा० २०।४ )**

कार्यस्यान्त गत्वा मनुष्यो निनृत्यतीव नर्तनमिव करोति । प्रसन्नतावशादिति भावः । "पश्चात् किञ्चिदपूर्वमञ्चन्नुद्दिश्य तत. स्थानादियात् । हि निश्चये । अन्त गत्वा नृत्यतीव पुनरग्रे कार्यमारभत इत्युक्त भवति" इति विनायकः ।

**श्रियतीव वा अन्तं गत्वा । कम्यङ् हि तत इयात् ।**

**( कौ० ब्रा० २६।१५ )**

श्रियतीव तत्स्थानमाश्रयतीव ।

**' दण्डोपानहं दक्षिणा । तदभयस्य रूपम् । ( कौ० ब्रा० ४।३ )**

दण्डोपानहमिति । दण्डश्चोपानहौ च समाहारे द्वन्द्व. ।

**रसो वा उदर्कः । ( कौ० ब्रा० ११।५ )**

उदर्कः समाप्तिः । तच्छ्रूयतेऽत्रैव ब्राह्मणे—"नीव वा अन्त गत्वा नृत्यति" ( कौ० ब्रा० २०।४ ) ।

## ( ३ ) सत्यभाषणादिसदाचारस्य ज्ञानस्य च प्रशंसा पाप्मनो निन्दा च

"अश्रद्धामनृतेऽदधाच्छ्रद्धा सत्ये प्रजापतिः" ( यजु० १६।७७ ), "सा मा सत्योक्तिः परि पातु विश्वतः" ( ऋग्० १०।३७।२ ), "तमसो मा ज्योतिर्गमय" ( बृहदारण्यकोपनिषद् १।३।२८ ), "अपैतु सर्व मत्पापम्" ( अथर्व० १०।१।१० ), "मा मा प्रापत्पाप्मा" ( अथर्व० १७।१।२६ ) इत्येवं श्रुतिषु यत्र तत्र सत्योक्तेर्ज्ञानस्य च स्पृहणीयता, अनृतस्य पाप्मनश्च परिवर्जनीयता प्रतिपाद्यते । तदनुसारमेवास्मिन् ब्राह्मणेऽपि तादृशा अर्था यत्र तत्र साक्षाद्रूपेणासाक्षाद्रूपेण वा प्रतिपाद्यन्ते स्वकीयया विशिष्टपद्धत्या । तथा हि—

**रात्र्या उ शीर्षन् सत्यं वदति । स यदि ह वा अपि तत ऊर्ध्वं**

**मृषा वदति, सत्यं हैवास्योदितं भवति। रात्र्या उ हि शीर्षन् सत्यं वदति। अह्न उ शीर्षन् सत्यं वदति। स यदि ह वा अपि तत ऊर्ध्वं मृषा वदति, सत्यं हैवास्योदितं भवति। अह्न उ हि शीर्षन् सत्यं वदति। ( कौ० ब्रा० २।८ )**

शीर्षन् शिरसि। मुख इति यावत्।

**सत्यमयो ह वा अमृतमयः। संभवति य एवं वेद। ( कौ० ब्रा० २।८ )**

सभवति। समृद्धिमाप्नोतीति भावः।

**स यः सत्यं वदति स दीक्षित इति ह स्माह। ( कौ० ब्रा० ७।३ )**

**ज्योतिर्वै जागरितम्, तमः पाप्मा रात्रिः। तेन तज्ज्योतिषा तमः पाप्मानं तरन्ति। ( कौ० ब्रा० १७।६ )**

तेन ज्योतिषा। जागरणेन। तथा हि श्रूयते—"यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति" ( ऋग्० ५।४४।१४ )। तथा—"भूत्यै जागरणम्। अभूत्यै स्वपनम्" ( यजु० ३०।१७ )।

**तमः पाप्मा रात्रिः। तज्ज्योतिषा तमः पाप्मानमपघ्नन्ति।**

**( कौ० ब्रा० १७।६ )**

**अथो द्वयं वा इदं सर्वं स्नेहश्चैव तेजश्च। तदुभयमहोरात्राभ्यामात्तम्। ( कौ० ब्रा० १७।५ )**

"अथो द्वय वा इद सर्वं प्रेक्षावतो द्वयमीप्सित स्नेहश्चैव तेजश्च। तदुभयमहोरात्राभ्यामात्तम्। वर्तमाने क्तः। आप्यते।" इति विनायकभाष्यम्।

अत्र रघुवशमहाकाव्ये दृश्यता पद्यमेतत्—"भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम्। अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः॥" ( १।१६ )।

**ईश्वरो विवक्तारं भ्रेषोऽन्वेतोः। ( कौ० ब्रा० २७।१ )**

भ्रेषो नियमत्यागो विवक्तार भ्रशवाचिनमन्वेतोः पराभवाय अन्वेतुमीश्वरः समर्थः।' नियमभ्रेषकारी ( वि ) वक्ता पराभव प्राप्नोतीति निन्दा। ( विनायकः )। अन्वेतोरित्यत्र—"ईश्वरे तोसुन्कसुनौ" ( पाणिनि० ३।४।१३ ) इति तुमर्थे तोसुन्प्रत्ययः।

## कौषीतकिब्राह्मणपर्यालोचनम्

**न ह वा अव्रतस्य देवा हविरश्नन्ति । तस्मादुपवसति । ( कौ० ब्रा० ३।१ )**

**तस्य व्रतमन्नमेवेच्छमानं न प्रत्याचक्षीतेति । ( कौ० ब्रा० ६।८ )**

तस्य ईशाननामकस्य सहस्राक्षस्य । ईशानोऽन्नम् । तदेव नामात्र सहस्राक्षस्य महादेवस्य प्रजापतिना कृतमिति सन्दर्भः ।

**तस्य व्रतमार्द्रमेव वासः परिदधीतेति । ( कौ० ब्रा० ६।२ )**

तस्य भवनामकसहस्राक्षस्य । भव आपः । तदेव नामात्र सहस्राक्षस्य महादेवस्य प्रजापतिना कृतमिति सन्दर्भः ।

**तस्य व्रतमुद्यन्तमेवैनं नेक्षेतास्त यन्तं चेति । ( कौ० ब्रा० ६।६ )**

तस्य महतो देवस्य सहस्राक्षस्य । महान् देव आदित्य. । तदेव नामात्र सहस्राक्षस्य महादेवस्य प्रजापतिना कृतमिति सन्दर्भः । एनमादित्यम् ।

**तस्य व्रतं ब्राह्मणमेव न परिवदेदिति । ( कौ० ब्रा० ६।४ )**

तस्य पशुपतिनामकस्य सहस्राक्षस्य । पशुपतिर्वायुः । तदेव नामात्र सहस्राक्षस्य महादेवस्य प्रजापतिना कृतमिति सन्दर्भ. ।

**तस्य व्रतं विमूर्त्तमेव नाश्नीयात्, मज्जानं चेति । ( कौ० ब्रा० ६।७ )**

तस्य रुद्रनामकस्य सहस्राक्षस्य । रुद्रश्चन्द्रमाः । तदेव नामात्र सहस्राक्षस्य महादेवस्य प्रजापतिना कृतमिति सन्दर्भ. ।

**तस्य व्रतं सत्यमेव वदेत्, हिरण्यं च बिभृयादिति । ( कौ० ब्रा० ६।६ )**

तस्याशनिनामकस्य सहस्राक्षस्य । अशनिरिन्द्रः । तदेव नामात्र सहस्राक्षस्य महादेवस्य प्रजापतिना कृतमिति सन्दर्भः ।

**तस्य व्रतं सर्वमेव नाश्नीयादिति । ( कौ० ब्रा० ६।३ )**

तस्य शर्वनामकस्य सहस्राक्षस्य । शर्वोऽग्निः । तदेव नामात्र सहस्राक्षस्य महादेवस्य प्रजापतिना कृतमिति सन्दर्भः ।

**तस्य व्रतं स्त्रिया एव विवरं नेक्षेतेति ( कौ० ब्रा० ६।५ )**

तस्य उग्रनामकस्य सहस्राक्षस्य । उग्रो देव ओषधयो वनस्पतय. । तदेव नामात्र सहस्राक्षस्य महादेवस्य प्रजापतिना कृतमिति सन्दर्भः ।

## ( ४ ) संपत्तेर्महत्त्वं दारिद्र्यस्य निन्दा च

"हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आ वह ।। श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् । ( श्रीसूक्ते १,३ ) इत्येव खलु श्रियः सम्पत्तेर्वा माहात्म्यमनेकधा श्रूयते श्रुतिशतेषु । "अशनाया वै पाप्मामतिः" ( ऐतरेय ब्राह्मणे २।२ ) इत्यादिप्रकारेण च क्षुधोपलक्षितदारिद्र्यस्य पाप्मत्वमुद्घोष्यते । अयमेवार्थोऽत्रापि ब्राह्मणे स्पष्टतया प्रतिपाद्यते । तद्यथा—

**अन्नं वै श्रेष्ठी भजते । ( कौ० ब्रा० ५।५ )**

श्रेष्ठ नाम धनं गुणाश्चास्य सन्तीति श्रेष्ठी । स सर्वान् भोजयित्वान्नं भजते—इति विनायकः । अथवा यः श्रेष्ठी स एव स्वसमीहितमाप्नोतीति भावः ।

**एकस्था वै श्रीः । ( कौ० ब्रा० १८।६ )**

"एकस्था वै श्रीः । एकस्मिन् स्वामिनि श्रीरितरे सेवकाः ।" (विनायकभाष्यम्) ।

**तिष्ठन् वै वीर्यवत्तमः, तिष्ठन्वा उ श्रुतवदनतमः । ( कौ० ब्रा० २८।१ )**

श्रुतवदनतमः । यस्य वदनं कथनमतीव सरलतया परैः श्रोतुं शक्यते ।

**प्रतिष्ठा वै निधनम् । ( कौ० ब्रा० २६।३ )**

**बल एव तद्वीर्येऽन्ततः पशुषु च प्रतितिष्ठन्ति । ( कौ० ब्रा० १७।६ )**

**यं वै श्रेष्ठ्युपह्वयते स उपहूत इति ह स्माह । ( कौ० ब्रा० २८।६ )**

श्रेष्ठी मुख्यः । इति ह स्माह । इत्याह स्म सर्वलोकः ।

**सर्वं वै तद्यत्सहस्रम् । ( कौ० ब्रा० ११।७ )**

## ( ५ ) दानमातिथ्यं च

"सर्वो वा एष जग्धपाप्मा यस्यान्नमश्नन्ति", "अशितवत्यतिथावश्नीयात् यज्ञस्य सात्मत्वाय यज्ञस्याविच्छेदाय तद् व्रतम्" ( अथर्व० ६।७।८, ६।८।८ ) इत्येवमनेकधा दानस्यातिथ्यस्य च महिमा श्रुतिषु गीयते । अस्मिन्नपि ब्राह्मणे तयोः श्रैष्ठ्यप्रतिपादनपराः श्रुतयो दृश्यन्ते । तद्यथा—

**यो वा अन्नं विभजत्यन्ततः स भजते । ( कौ० ब्रा० ३।६ )**

लोक इति शेषः ।

**यो ह वै न सर्वं ददाति सर्वं ददानीति ब्रुवन् गर्तपत्यमेव तद्धीयते प्र वा मीयत इति ह स्माह। सहस्रं वैनमवरुन्ध इति ह स्माह कौषीतकिः। सर्वं वै तद्यत्सहस्रम्। ( कौ० ब्रा० २५।१४ )**

धीयते आश्रयति। प्रमीयते वा। पत्यमिति—"कृत्यल्युटो बहुलम्" ( पाणिनि० ३।३।११३ ) इति यत्। धी मी धातू दिवादी आत्मनेपदिनौ। '' अवरुन्धे आवृणुते। ( विनायकः )।

**रिरिचान इव वा एतस्यात्मा भवति यः सर्वं ददाति। ( कौ० ब्रा० २५।१५ )**

रिरिचान इति कानच्प्रत्ययान्त रूपम्।

**शिरो वा एतद्यज्ञस्य यदातिथ्यम्। ( कौ० ब्रा० ८।१ )**

आतिथ्यम्। आतिथ्येष्टिः।

## ( ६ ) लौकिका दृष्टान्ताः

प्रतिपादयितुमिष्टानामर्थानाम्, विशेषतश्च गूढार्थानामप्रसिद्धार्थाना वा स्पष्टीकरणार्थं दृष्टान्तानामुपयोगः प्रायेण सर्वशास्त्रेषु सुप्रसिद्धः। बुद्ध्यतिशयमप्राप्ता अपि दृष्टान्ताना साहाय्येन दुरूहमपि तत्तदर्थं झटित्यवगन्तुमर्हन्ति। अत एवैतरेयब्राह्मण इवात्रापि तत्तत्प्रसङ्गेन नैके दृष्टान्ताः प्रयुक्ता दृश्यन्ते। तात्कालिकसामाजिकादिपरिस्थितेरवगमाय नून तेषामुपयोगितेति दृष्ट्याधस्तात्ते सगृह्यन्ते। तथा हि—

**तद्यथा गाधाभ्यां तीर्थाभ्यां समुद्रमतीयात् तादृक् तत्। ( कौ० ब्रा० ३।६ )**

अतीयात्। एकतः प्रविश्यान्यतो निःसरेत्। ( विनायकः )।

**तद्यथा गिरिशिखराद् गर्तमभिप्रस्कन्देदेवं तत् ' । ( कौ० ब्रा० २६।१ )**

अत्युच्चादतिनीचे पतन विशेषेण दुरूहरूप दुर्घटरूप चेति भावः।

**तद्यथा चतुःसमृद्धमेवं तत्। ( कौ० ब्रा० ८।२ )**

तद्यथा चतुर्भिः समृद्ध भवति किञ्चिदेव तत्।

**तद्यथा जाताय स्तनमुपदध्यादेवं तत्। ' ' यदा वै वर्धतेऽतिस्तनो वै तदा। ( कौ० ब्रा० १३।२ )**

अतिस्तनः। अतिक्रान्तौ स्तनौ येन सः।

**तद्यथान्यस्य सन्तमन्यस्मै हरेदेवं तत्।** ( कौ० ब्रा० १२।६ )

**तद्यथा पद्भ्यां क्षिप्रमध्वानमन्वियात् तादृक् तत्।** ( कौ० ब्रा० २।६ )

**तद्यथा भयेऽतिमुच्य मृत्युं यथातिमुमुचान एव।** ( कौ० ब्रा० १५।५ )

तद्यथा भये सति अतिमुच्य मृत्युमतिक्रम्य। अतिमुमुचान एव। अतिमुक्त एव। मुमुचान इति लिटः कानच्।

**तद्यथाभिर्ग्रासमन्नमद्यादेवं तत्।** ( कौ० ब्रा० २२।८ )

तद्यथाभिरङ्गुलीभिर्ग्रासमन्नमद्यादेव तत्।

**तद्यथाभ्यागारमभि निनर्त पुनः पुनः पाप्मानं निर्हण्यादेवमेव।** ( कौ० ब्रा० १७।८ )

तद्यथाभ्यागारं गृहाभिमुखमभ्यस्त निनृत(?) पुनः पुनः क्रियमाण पाप्मानं निर्हण्यादमङ्गलं निर्हत्य मङ्गलं कुर्यादेवमेव। ( विनायकः )।

**तद्यथा महाराजः पुरस्तात् सैनानीकानि प्रत्युह्याभयं पन्थानमन्वियादेवमेव** ‥। ( कौ० ब्रा० ५।५ )

सैनानीकानि। सेनानीकेषु भवानि तुरगकरिरथप्रभृतीनि। प्रत्युह्य प्रापय्य।

**तद्यथा राजानं वा राजमात्रं वा श्रान्तं वेश्म प्रपादयेयुरेवमेव** । ( कौ० ब्रा० २७।६ )

राजानं सार्वभौमं राजमात्रं वेति विनायकभाष्ये। अन्ये तु राजमात्रं राजप्रतिनिधिमित्यर्थं इत्याहुः।

**तद्यथा वंशेन वा मर्त्येन वा गर्तं संक्रामेदेवं** ‥। ( कौ० ब्रा० ११।४ )

वंशेन यष्ट्यादिना। मर्त्येन अन्यकरावलम्बनेन।

**तद्यथाविदमित्याविर्नष्टं कुर्यादेवं तदाविष्कामान् करोत्यापमिति।** ( कौ० ब्रा० १।५ )

नष्टं पदार्थं यथा 'अविदम्' इत्येव ब्रुवन्नर आविष्करोति तथैव 'आपम्' इति ब्रुवन् कामानाविष्करोतीत्यर्थः।

**तद्यथा व्राजबाहुभ्यां परिजिग्रहीष्यन्नन्तरेणातिमुच्येत तादृक् तत्।** ( कौ० ब्रा० २।६ )

( सावशेषम् )

# वैदिकच्छन्दःसङ्कलनम्

श्रीयुधिष्ठिरमीमांसकः, प्राच्यविद्याप्रतिष्ठानम्, मोतीझील, काशी ।

आर्या मान्याः श्रोत्रिया विपश्चिद्वराः, विदितप्रायमेव भवता वैदिकच्छन्दसा विस्तरः । येषु ग्रन्थेषु वैदिकच्छन्दसा प्रपञ्चः प्रपञ्च्यते, नहि तेषु सर्वाणि छन्दांसि समाननामानि समानपरिमाणानि च विद्यन्ते । विद्यते हि केषुचिद् ग्रन्थेषु केषाञ्चित् समानाक्षराणा नाम-भेदः, असमानाक्षराणा च समान नाम । अपि च केषुचिच्छन्दोग्रन्थेषु छन्दसामल्पीयांस एवावान्तरभेदा निर्दिश्यन्ते, अपरेषु बहिष्ठाः । नैतावदेव, अपि तु केचन वैदिकविद्वांसः कस्यचिन्मन्त्रस्य किञ्चिल्लक्षणमाश्रित्य छन्दोनाम निर्दिशन्ति, अपरेऽपर लक्षणमाश्रित्य नामान्तरमाचक्षते । तत्रैकस्यैव मन्त्रस्य छन्दोनाम्नि भेद दृष्ट्वा कृतधियोऽपि विभ्राम्यन्ति किं पुनरकृतधियः । अत एवात्र समुपलभ्यमानेभ्यो वैदिकच्छन्दःप्रतिपादकेभ्यो ग्रन्थेभ्य-श्छन्दसा सर्वोऽपि प्रपञ्चः सगृह्य प्रकाश्यते ।

आसन् पुरा लक्षणत उद्देशतश्च वैदिकच्छन्दःप्रतिपादका भूमिष्ठा ग्रन्थाः, ये प्रायेणा-धुना कालकवलिताः । केवल तेषु पञ्चषा एव ग्रन्थाः कथञ्चिदवशिष्टाः सम्प्रत्युपलभ्यन्ते । तेषामय सक्षिप्तः परिचयः—

## १-पिङ्गलसूत्रम्

ग्रन्थोऽय तत्रभवता पिङ्गलाचार्येण वैयाकरणशिरोमणेः [1]पाणिनेरनुजेनाष्टभिरध्यायै-र्निबद्धः । अत्र हि भगवता पिङ्गलेन ज्येष्ठभ्रातुः कृतिमनुसृत्य वैदिकाना लौकिकाना

---

१. तथा च सूत्र्यते भगवता पिङ्गलनागेन पाणिन्यनुजेन—"क्वचिन्नवकाश्चत्वार" [छन्द सूत्रे ३।३३] इति—षड्गुरुशिष्यविरचिता ऋक्सर्वानुक्रमणीटीका, पृ०–७० । ज्येष्ठभ्रातृभिर्विहिते व्याकरणेऽनुजस्तत्र भगवान् पिङ्गलाचार्य । द्र०पाणिनीयनाम्ना प्रसिद्धाया शिक्षाया शिक्षाप्रकाशटीकाया प्रारम्भे (तत्र भगवता पाणिनिना प्रणीतानि मूलानि शिक्षासूत्राण्यस्माभिराचार्यापिशलिचन्द्रगोमिविरचितशिक्षासूत्रै सह प्रकाशितानि ) । एतद्विषयेऽस्मदीय —"सस्कृत व्याकरणशास्त्रका इतिहास" नामा ग्रन्थोऽप्यवश्य द्रष्टव्य [पृ० १३२, १६०] ।

चोभयेषा छन्दसा लक्षणानि सूत्रितानि । अतोऽय ग्रन्थो लोकवेदसाधारणः । अत एवोच्यते—

'याष्षट् पिङ्गलनागाद्यैश्छन्दोविचितयः कृताः ।
तासा पिङ्गलनागीया सर्वसाधारणी तु सा ।। इति ।

अत्र द्वितीयाध्यायमारभ्य चतुर्थाध्यायस्य सप्तमसूत्रपर्यन्त वैदिकच्छन्दासि प्रपञ्च्यन्ते ।

तत्रभवतः पिङ्गलनागस्य ग्रन्थोऽय लोक एतादृशीं प्रतिष्ठा प्रसिद्धिं च जगाम, येनाद्य हिन्दीभाषाया तत्तत्प्रान्तीयासु च बह्वीषु प्राकृतभाषासु पिङ्गलशब्दश्छन्दःशास्त्रस्य पर्यायता लब्धवान् ।

## २–ऋक्प्रातिशाख्यम्

अयं ग्रन्थो भगवता शौनकेन प्रोक्तः । अत्र हि दाशतय्याः शिक्षा छन्दो व्याकरण च प्रोच्यते । एतस्य षोडशसप्तदशाष्टादशेषु त्रिषु पटलेषु ऋग्वेदस्य छन्दसा लक्षणानि निरूप्यन्ते ।

## ३–ऋक्सर्वानुक्रमणी

इयमनुक्रमणी शौनकशिष्येण ²तत्रभवता कात्यायनेन निबद्धा । अत्र हि छन्दसा लक्षणानि, अखिलस्यर्ग्वेदस्य प्रत्यृच छन्दासि च निर्दिश्यन्ते ।

## ४–निदानसूत्रम्

ग्रन्थमिम भगवान् पतञ्जलिर्जग्रन्थ । अय हि महाभाष्यकारात् पतञ्जलेः प्राचीनः । अयमेव च योगसूत्राण्यपि सूत्रयाञ्चकारेति केचन प्रतिजानते । अत्र हि प्रथमप्रपाठकस्यादिमेषु नवसु खण्डेषु छन्दसा लक्षणानि निबद्धानि । सूत्रमिद छन्दोगाना विद्यते, अतोऽत्र प्राधान्येन सामवेदीयच्छन्दसा लक्षणानि निरुच्यन्ते ।

## ५–उपनिदानसूत्रम्

इमा लघुपुस्तिका सामवेदस्य पदकारो भगवान् गार्ग्यः पुस्तकयाञ्चकार । इदमपि सूत्र

१ लवपुरत ( लाहौरत ) प्रकाशितस्य निदानसूत्रस्य भूमिकाया [ पृ० २५ ] कुतश्चिन्निर्दिष्ट श्लोक ।

२. "ननु च एको हि शौनकाचार्यशिष्यो भगवान् कात्यायन " इति षड्गुरुशिष्यविरचितसर्वानुक्रमणी-टीकारम्भे ।

छन्दोगानामेव । अत्र हि प्राथमिकेषु त्रिष्वध्यायेषु छन्दसा लक्षणानि लक्ष्यन्ते, अपरेषु सामवेदस्य प्रत्यृच छन्दांसि निर्दिश्यन्ते ।

### ६–जानाश्रयी छन्दोविचितिः

इय छन्दोविचितिर्जनाश्रयेण केनचिद् विदुषा विरचिता । अत्र वैदिकच्छन्दसा नामोद्देश एव वर्तते । ग्रन्थोऽय दक्षिणापथे तिरुपतिनगरे मुद्रितः ।

### छन्दसामन्ये ग्रन्थाः

वैदिकच्छन्दःप्रतिपादका ये षड् ग्रन्थाः पुरस्तान्निर्दिष्टास्त एवेदानीमुपलभ्यन्ते । इतोऽन्ये बहवो वैदिकच्छन्दोनिरूपका ग्रन्थाः पुरा आसन्, ये खल्विदानीं नाम्नाऽपि न स्मर्यन्ते । वैदिकवाङ्मय इमे पुराणाश्छन्दःशास्त्रप्रतिपादका आचार्या नाम्ना स्मर्यन्ते—

### १–यास्कः

आसीद् भगवान् यास्क. कस्यचिच्छन्दोग्रन्थस्य रचयितेति भगवतः पिङ्गलनागस्य– "उरोबृहतीति यास्कस्य" [३।३०] इति सूत्रेण सूच्यते । ऋक्प्रातिशाख्यस्य टीकाकार उव्वटोऽपि- "सर्वैश्छन्दोविचित्यादिभिः पिङ्गलयास्कसैतवप्रभृतिभिर्यत्सामान्येनोक्त लक्षणम्" [ ऋक्प्राति० काशीस० पृ० १७ ] इत्यत्र छन्दोविचितकार यास्क सस्मार । निदानसूत्रान्तर्गतच्छन्दो विचितेर्भाष्यकारो हृषीकेशापरनामा पेट्टाशास्त्री यास्कविरचिता तैत्तिरीयसर्वानुक्रमणीमष्टादशकृत्व उज्जहार, तत्रैव—"द्वितीयश्चेत् स्कन्धोग्रीवी क्रौष्टुकेः, उरोबृहती वा स्यात्" इति सूत्रद्वयमुद्धृतवान् । एतेनेदमपि स्पष्टीभवति यद् ऋक्सर्वानुक्रमणीवद् यास्कीयतैत्तिरीयसर्वानुक्रमण्यामपि छन्दसा लक्षणानि प्रतिमन्त्र छन्दसा निर्देशश्चासीदिति ।

### २–क्रौष्टुकिः

छन्दोविचितिकार भगवन्त क्रौष्टुकि पिङ्गलनागः–"स्कन्धोग्रीवी क्रौष्टुकेः" [३।२६] इति सूत्रे निर्दिदेश । यास्कोऽपि तैत्तिरीयसर्वानुक्रमण्याम्—"द्वितीयश्चेत् स्कन्धोग्रीवी क्रौष्टुके." इत्यत्र सस्मार ।

### ३–तण्डी

छन्दःसूत्रकारमाचार्यतण्डिन भगवान् पिङ्गलः—"सतोबृहती तण्डिनः" [ ३।३१ ] इत्यस्मिन् सूत्रे उदाजहार ।

### ४–सैतवः

छन्दःशास्त्रकारं सैतवनामानमाचार्यमृक्प्रातिशाख्यस्य भाष्यकार उव्वटः स्मृतवान् [द्र० यास्कप्रकरण उद्धृत वचनम्] पिङ्गलाचार्योऽपि सैतवाचार्यं द्विः [५।१८, ७।१०] सस्मार ।

### ५–काश्यपः

भगवन्त छन्दःसूत्रकारं काश्यपं "सिंहोन्नता काश्यपस्य" [७।९] इति लौकिकच्छन्दः प्रकरणे पिङ्गलः स्मरति । काश्यपीय छन्दःसूत्र किं केवलं लौकिकच्छन्दःप्रतिपादकमुतोभय प्रतिपादकमिति न शक्यते याथातथ्येन वक्तुम् ।

पिङ्गलच्छन्दःशास्त्रस्य भाष्यकारो यादवप्रकाशो भाष्यसमाप्तौ छन्दःशास्त्रवंशप्रतिपादकमिमं श्लोकमाह—

'छन्दोज्ञानमिदं भवाद्भगवतो लेभे सुराणां गुरुः
तस्माद् दुश्च्यवनस्ततोऽसुरगुरुर्माण्डव्यनामा ततः ।
माण्डव्यादपि सैतव स्ततः पिङ्गलः
तस्येदं यशसा गुरोर्भुवि धृतं प्राप्यास्म [द]।द्यै. क्रमात् ॥

तदनुसारमिमेऽपि छन्दःसूत्रकाराः स्मर्यन्ते—

**६–भवः = शिवः**

**७–सुरगुरुः = बृहस्पतिः**

**८–दुश्च्यवनः = इन्द्रः**

**९–असुरगुरुः = शुक्रः**

### १०–माण्डव्यः

एषु माण्डव्य भगवान् पिङ्गलोऽपि—"अन्यत्र रातमाण्डव्याभ्याम्" [७।३४] इत्यस्मिन् सूत्रे सस्मार ।

### ११–रातः

पिङ्गलाचार्येण—"अन्यत्र रातमाण्डव्याभ्याम्" [७।३४] इत्यस्मिन् सूत्रे कश्चिच्

१ पण्डितभगवद्दत्तविरचित "वैदिक वाङ्मयका इतिहास" नामा ग्रन्थो द्रष्टव्य [ब्राह्मणारण्यकभाग पृ० २४६]।

## वैदिकच्छन्दःसंकलनम्

छन्दःशास्त्रकारो रातनामाऽऽचार्य. स्मर्यते। किं "पदेषु पदैकदेशा." [ महाभाष्य ] इति न्यायेनाऽऽजीगर्तिः शुनःशेप' कृत्रिमो वैश्वामित्रो देवरातः [ द्र० ऋक्सर्वा० ] स्मर्यत उतान्य इति न शक्यते वक्तुम्।

इमे सर्वेऽप्याचार्या. पिङ्गलाचार्यात् तज्ज्येष्ठभ्रातुः पाणिनेश्च पुरातनाः। ऋक्सर्वानुक्रमणीकारः कात्यायनः पाणिने. समकालिक. किञ्चिदूर्ध्वकालिको वा। भारतीयैतिहासिककाल-गणनानुसार भगवान् पाणिनिर्विक्रमात् सप्तविंशतिशतेभ्यः प्राक्कालिकः। एतच्चास्माभि. स्वकीये "सस्कृत व्याकरणशास्त्रका इतिहास" नाम्नि ग्रन्थे निपुणतरमुपपादितम्।

## कृत्रिमैका सर्वानुक्रमणी

अस्त्येका शुक्लयजुषः सर्वानुक्रमणी। सा काण्वमाध्यन्दिनशाखाभेदाद् द्विधा भक्ता। एतस्या. कर्ता भगवान् कात्यायन इत्येके प्रतिजानते। पर नैषा कात्यायनविरचितर्क्सर्वानुक्रमणीवत् प्राचीना सुसस्कृता च। तत्रैते हेतवः—

१ माध्यन्दिनसहिताभाष्यकार उव्वटः स्वभाष्यारम्भे यजुषामृष्यादिनिर्देशविषय आह—

गुरुतस्तर्कतश्चैव तथा शातपथश्रुतेः।
ऋषीन् वक्ष्यामि मन्त्राणा देवता छान्दस च यत्॥ इति।

अत्रोव्वटेन सर्वानुक्रमण्या अनुल्लेखान्नासीत्तत्काल इयमिति सम्यक् शक्यत ऊहितुम्, अन्यथा ऋष्यादिनिर्देशे तत्साहाय्य परित्यज्य गुरुतर्कशातपथश्रुत्यादीन् न निरदेक्ष्यत्, यद्वा प्राधान्येन तस्या नामाग्रहीष्यत्।

२ अस्त्येका माध्यन्दिनीया वासिष्ठी शिक्षा ( काशीतः प्रकाशिते शिक्षासग्रह इय मुद्रिता )। तस्या अयमाद्यः श्लोक'—

अथ शिक्षा प्रवक्ष्यामि वसिष्ठस्य मत यथा।
सर्वानुक्रममुद्धृत्य ऋग्यजुषोस्तु लक्षणम्॥ इति।

अत्र खलु ग्रन्थकृता ऋग्यजुषा निर्देशे कस्यचित् सर्वानुक्रमस्यानुक्रमण प्रतिज्ञातम्। तत्र चास्याः शिक्षाया विद्यमानाया याजुषसर्वानुक्रमण्याः सह समेलने क्रियमाणे प्रायेण भेदोप-

ग्रहाद् विस्पृष्ट ज्ञायते यन्नैषा सा सर्वानुक्रमणी या वासिष्ठशिक्षाया स्मर्यत इति । अतोऽप्यस्या. शुक्लयाजुषसर्वानुक्रमण्या अर्वाचीनत्व व्यक्त चोत्यते ।

३. अपरश्चाय हेतुः—अस्याः शुक्लयाजुषसर्वानुक्रमण्या आद्येषु चतुर्ष्वध्यायेषु प्रतिमन्त्रमृषिदैवतच्छन्दासि निरुच्य पञ्चमे छन्दसा लक्षणानि निर्दिष्टानि। तानि चर्क्सर्वानुक्रमणीतः शब्दश सगृहीतानि। तत्रर्क्सर्वानुक्रमण्या छन्दसामुद्देशानन्तरम्—"आद्ये तु सप्तवर्गे पादविशेषात् संज्ञाविशेषास्ताननुक्रामन्त एवोदाहरिष्यामः" इत्युक्तम् । तत 'उपरिष्टात् प्रत्यृच छन्दोनिदशाद्युक्तसूत्रे भविष्यत्कालिकी क्रियोपपद्यते । अस्या याजुषसर्वानुक्रमण्यामप्येतत्सूत्रमृक्सर्वानुक्रमणीवदेव पठ्यते, पर तत्र भविष्यत्कालिकी क्रिया न समञ्जसा । यतो ह्यस्या याजुषसर्वानुक्रमण्या प्रतिमन्त्र छन्दसा निरूपण पुरस्तादेव कृतम् , अतस्तत्र—"अनुक्रामन्त एवोदाहरिष्यामः" इत्यस्य स्थाने "अनुक्रामन्त एवोदाहृताः" इत्येव पाठेन भवितव्यम् । अपि चास्यामाद्येषु चतुर्ष्वध्यायेष्वसकृन्निर्दिष्टाना दैव्यादीना छन्दसा लक्षणानि न क्वचिन्निर्दिष्टानि । अतोऽपि ज्ञायते नैषा याजुषसर्वानुक्रमणी भगवतः कात्यायनस्य कृतिरिति । अत एवास्या अस्मिन् छन्द.सकलने निर्देशोऽस्माभिर्न कृत इति ।

## छन्दोलक्षणम्

ऋक्सर्वानुक्रमण्या छन्दोलक्षणमेवमुच्यते—"यदक्षरपरिमाण तच्छन्दः" [ उपो० ] इति। अथर्वबृहत्सर्वानुक्रमण्यामपि—"छन्दोऽक्षरसख्याव्यवच्छेदकमुच्यते" [उपो०] इत्युक्तम् । अनयोरयमर्थः—मन्त्राक्षराणामियत्ताबोधक छन्दो भवति, अर्थाद् यस्य पदस्य श्रवणमात्रेण मन्त्राक्षरपरिज्ञान भवति तदेव छन्दः। अर्थापत्त्येदमाकूत भवति–यस्य पदस्य प्रयोगेण मन्त्राक्षराणामियत्ताया यथावज्ज्ञान न भवति न तद्वास्तविक छन्दोनाम भवितुमर्हति ।

## छन्दसां संक्षेपः

प्राधान्येन गायत्री उष्णिग् अनुष्टुब्-बृहती पङ्क्ति त्रिष्टुब् जगत्यः सप्तैव वैदिकच्छन्दासि। अस्य सप्तकस्यापि द्वौ भेदौ स्तः । एको यत्राक्षरगणनैव प्राधान्येनाश्रीयते । अपरो यत्राक्षरगणनया सह पादविभागो मुख्यत्वेनाश्रीयते । तत्र प्रथमस्य दैवी-आसुरी प्राजापत्या

---

१ प्राचीनेषु निरुक्तादिग्रन्थेषु अग्रे वक्ष्यमाण उपरिष्टाच्छब्देन निदिश्यते, न त्वधस्ताच्छब्देन । एव पूर्वनिदिष्ट च पुरस्तादधस्ताद्वा शब्दाभ्याम्, न तूपरिष्टाच्छब्दात् ।

आर्षी याजुषी-साम्नी-आर्ची ब्राह्मीत्यष्टौ भेदाः ( निदानसूत्रे प्राथमिकानि दैव्यादीनि चत्वार्येव छन्दांसि निर्दिष्टानि न त्वपराणि याजुषादीनि ) । अपरस्य पादविशेषात् सञ्ज्ञाविशेषाः । तदुक्तं कात्यायनेन—"आद्ये तु सप्तवर्गे पादविशेषात् सञ्ज्ञाविशेषः" [ ऋग्सर्वा० उपो० ] इति ।

दैव्यादीनि छन्दांसि पादविभागरहितेषु याजुषमन्त्रेष्वेवोपयुज्यन्त इति केषाञ्चिन्मतम् । तच्च प्राचीनच्छन्दःशास्त्रापर्यालोचनमूलकमेव । अथर्ववेदीयबृहत्सर्वानुक्रमण्या सामवेदीयोपनिदानसूत्रेषु च पादबद्धानामृचामपि तादृशच्छन्दसामसकृन्निर्देश उपलभ्यते । तथाहि अथर्ववेदीयाष्टादशकाण्डे चतुर्थसूक्ते सर्वेऽप्येकोननवतिः पादबद्धा ऋक्सञ्ज्ञका मन्त्रा. सन्ति । तदुक्तं बृहत्सर्वानुक्रमण्याम्—

"एकोननवतिश्चैव यमेषु विहिता ऋचः" इति ।

अथर्ववेदीयपञ्चपटलिकायामप्येव पठ्यते—

एकषष्टिश्च षष्टिश्च सप्ततिस्त्र्यधिकात् परः ।
एकोननवतिश्चैव यमेषु विहिता ऋचः ॥ इति ।

तत्रैतासु कासाञ्चिदृचा बृहत्सर्वानुक्रमण्यामेव छन्दांसि निर्दिश्यन्ते—

| | | |
|---|---|---|
| अथर्व० | १८, ४, २७ | याजुषी गायत्री । |
| ,, | १८, ४, ६७ | द्विपदार्च्यनुष्टुप् । |
| ,, | १८, ४, ७१ | आसुर्यनुष्टुप् । |
| ,, | १८, ४, ७२–७४ | आसुर्यः पङ्क्तयः । |
| ,, | १८, ४, ७५ | आसुरी गायत्री । |
| ,, | १८, ४, ८१ | प्राजापत्यानुष्टुप् । |
| ,, | १८, ४, ८२ | साम्नी बृहती । |
| ,, | १८, ४, ८५ | आसुरी बृहती । |

एवमुपनिदानसूत्रेऽपि–"'भगो न चित्रम्' [ सा० पू० ५।२।२।३ ] इति त्रिपदाऽऽसुरी गायत्री" [ पृ० १२ ] इत्येव दैव्याद्यन्तर्गतमासुरीगायत्रीच्छन्दो निर्दिश्यते । "ऋच्यध्यूढं साम गीयते" इति वचनात् "भगो न चित्रम्" इत्यस्य सामसंहितान्तर्गतस्य मन्त्रस्यर्क्त्वं विस्पष्टम् । तदेवं पादबद्धास्वृक्षु दैव्यादीन्यक्षरच्छन्दांसि न प्रवर्तन्त इति वचनमज्ञानविजृम्भितमेव ।

दैव्यादीनि छन्दांसि प्रथमसप्तकस्यैव सन्ति नोत्तरयोः ( उत्तरौ सप्तकावग्रे वक्ष्येते )। निदानसूत्रे तु द्वितीयसप्तकस्यापि दैव्यादयो भेदा निरूप्यन्ते ।

"एकाक्षरं वै देवानामवमं छन्द आसीत्, सप्ताक्षरं परम्" इति, "नवाक्षरमसुराणा-मवमं छन्द आसीत् पञ्चदशाक्षरं परम्" [ताण्ड्य० १२।१३।२७] इति च ब्राह्मणमपि प्रथम-सप्तकस्यैव दैव्यादिविभागे प्रमाणम् । परन्तु दैवं छन्द एकाक्षरप्रभृत्युत्तरमेकैकाक्षरवृद्ध्या सप्ताक्षरपर्यन्तं वर्द्धते । आसुरं च पञ्चदशप्रभृत्युत्तरमेकैकाक्षरह्रासेन नवाक्षरपर्यन्तं ह्रसति । तदेवं वृद्धिह्रासौ न सम्यगुपपद्येते । यथा तु निदानसूत्र उत्तरसप्तकस्यापीमे भेदाः स्वीकृता-स्तथेमौ वृद्धिह्रासौ सम्यगुपपद्येते । तथा हि—दैवं छन्द एकाक्षरप्रभृति द्वयोः सप्तकयोर्वर्धमान-नश्चतुर्दशसंख्यापर्यन्तं वर्धते, आसुरं च पञ्चदशप्रभृति द्वयोः सप्तकयोर्ह्रसमानो द्विसंख्या-पर्यन्तं ह्रसति ।

जगत्यनन्तरमतिजगती-शक्करी-अतिशक्करी-अष्टि - अत्यष्टि - धृति - अतिधृतीनां द्वितीयः सप्तको वर्गः । इमान्यतिच्छन्दांसीत्युच्यन्ते । तदनन्तरं कृति-प्रकृति-आकृति-विकृति संकृति-अभिकृति-उत्कृतीनां तृतीयः सप्तको वर्गः । अनयोः सप्तकयोर्निदानसूत्रे नामान्तराणि सन्ति । ऋक्सर्वानुक्रमण्या तृतीयो वर्गो न निर्दिश्यते ।

तत्र गायत्री चतुर्विंशत्यक्षरा । उत्तरोत्तरं प्रतिच्छन्दश्चत्वार्यक्षराणि वृद्धिमापद्यन्ते । तदेवमुत्कृतिसंज्ञकं परमं छन्दश्चतुरुत्तरशताक्षरं भवति ।

निदानसूत्र-उपनिदानसूत्र ऋक्प्रातिशाख्य-जानाश्रयीछन्दोविचितिषु चतुरक्षरमारभ्या विंशत्यक्षरं पञ्च गायत्र्याः प्राञ्चि छन्दांसि निरूप्यन्ते, परं तत्रैषां नाम्नि विसंवाद उपलभ्यते ।

निदानसूत्र-ऋक्प्रातिशाख्ययोः पूर्वोक्तानां सर्वेषामपि (गायत्र्याः प्राचाम्, त्रयाणां सप्त-कानां च ) द्व्यूनानां छन्दसां हर्षिकादीनि संज्ञान्तराणि निर्दिष्टानि । तत्र निदानसूत्रे पुनरिमानि कृत्यादीनि हर्षिकादीनि च द्विधा विभज्यन्ते—पूर्णाक्षराणि, एकाक्षरन्यूनानि च । तत्र पूर्णा-क्षराणि कृत्यादीनि कृतसंज्ञकानि, एकाक्षरन्यूनानि कृत्यादीनि त्रेतासंज्ञकानि, द्व्यक्षरोनानि च हर्षिकादीनि द्वापरसंज्ञकानि, तेष्वेकाक्षरोनानि कलिच्छन्दांस्यभिधीयन्ते ।

दैव्यादीनि छन्दांसि विहायान्यानि सर्वाण्यपि छन्दांसि नियमत उत्तरोत्तरं चतुरक्षरं वृद्धिमापद्यन्ते ।

निदानसूत्र-ऋक्प्रातिशाख्य-ऋक्सर्वानुक्रमणीषु केचन बार्हतादयः प्रगाथा अपि निर्दि

श्यन्ते। प्रकर्षेण ग्रथन गान वा प्रगाथ इति हि तस्य यौगिकोऽर्थः। यत्र हि समुदाये नियमेन द्वे द्वे छन्दसी विद्येते ( क्वचित्त्रीण्यपि, यथा—आनुष्टुभे प्रगाथे ) तत्रादिच्छन्दोऽनुरोधेन तस्य तस्य प्रगाथस्य सज्ञा क्रियते। तदुक्त भगवता पाणिनिना—"'सोऽस्यादिरिति छन्दसः प्रगाथेषु" ( अष्टा० ४।२।५५ ) इति। यथा—बृहतीसतोबृहत्योर्बार्हतः प्रगाथः, एव सर्वत्र।

एतेषा सर्वेषामपि छन्दसा विस्तरो यथालक्षण यथाशास्त्र च द्रष्टव्यम्। अत्र तु प्राङ्निर्दिष्टेभ्य' पञ्च ग्रन्थेभ्यो यथालक्षण प्रतिच्छन्दः पादाक्षरसख्या निर्दिश्यते। तद्भेदेन च गायत्र्यादीना येऽवान्तरभेदाः सपद्यन्ते तेषा निदर्शनमेवास्माकं मुख्योऽभिप्रायः। अतोऽत्र छन्दसा लक्षणानि नोच्यन्ते. न चात्र किञ्चिदप्यलक्षणमुच्यते। अत एतेषा लक्षणानि यथाशास्त्र वेदितव्यानि।

यथालक्षणं यथाशास्त्र च बहुधा सशोधितेऽप्यस्मिन् छन्दःसकलने दृष्टिदोषादनवधानादज्ञानाद्वा क्वचिदन्यथा लेखो भवेत्तद् विपश्चिद्वर्यैः सशोधनीयमिति प्रार्थये। यतो हि—

गच्छतः स्खलन क्वापि भवत्येव प्रमादतः।<br>
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥

इति हि महाजनपरिगृहीतः पन्था.।

इतोऽग्रे यथाक्रम छन्दःप्रपञ्चो द्रष्टव्यः—

---

सोऽस्यादिरिति सूत्रवृत्तौ जयादित्य आह—"प्रगाथशब्द क्रियानिमित्तक क्वचिदेव मन्त्रविशेषे वर्तते। यत्र द्वे ऋचौ प्रग्रथनेन तिस्र क्रियन्ते स प्रग्रथनात् प्रकर्षगानाद्वा प्रगाथ इत्युच्यते" इति।

इदमत्रावधेयम्—अस्ति हि द्विविध प्रगाथ। एक ऋक्साम्नोर्ऋक्षु श्रूयमाण, अपर सामगाने। तत्रर्क्षु नहि क्वचिदपि द्वे ऋचौ तिस्र क्रियन्ते। सामगाने तु—"यद्योन्या गायति तदुत्तरयोर्गायति" इति ब्राह्मण वचनेन प्रतिसामगान तिस्र ऋचोऽपेक्ष्यन्ते। तदर्थं साम्न उत्तरार्चिके प्रायेण तृच एव पठ्यन्ते, परन्तु यत्र क्वचिदुत्तरार्चिके द्वृच श्रूयन्ते तत्र सामगाननियमस्यान्यथानुपपत्त्या द्वयोर्ऋचो केषाञ्चित् पदाना पुनराश्रयणेन तयोरेवर्चोस्तिस्र ऋच सपाद्यन्ते। अयमपि प्रगाथनाम्ना व्यवह्रियते। अस्य विस्तर सामवेदीयब्राह्मणेषु मीमासाया नवमेऽध्याये च द्रष्टव्य। पाणिनिसूत्रे स्मृत प्रगाथस्तु प्राथमिक ऋक्षु श्रूयमाण एव। अत' सामगान उपयुज्यमानस्य प्रगाथस्यात्र ग्रहण जयादित्यस्याज्ञानमूलकमेव।

# अथ वैदिकच्छन्दसां

| | अक्षराणि | पिङ्गल० | ऋक्प्राति० |
|---|---|---|---|
| गायत्र्याः प्राक्छन्दांसि | ४ | × | मा |
| | ८ | × | प्रमा |
| | १२ | × | प्रतिमा |
| | १६ | × | उपमा |
| | २० | × | समा |
| गायत्र्यादिप्रथमसप्तकम् | २४ | गायत्री | पि |
| | २८ | उष्णिक् | ङ्ग |
| | ३२ | अनुष्टुप् | ल |
| | ३६ | बृहती | व |
| | ४० | पङ्क्तिः | दे |
| | ४४ | त्रिष्टुप् | व |
| | ४८ | जगती | |
| अतिजगत्यादिद्वितीयसप्तकम् | ५२ | अतिजगती | पि |
| | ५६ | शक्करी | ङ्ग |
| | ६० | अतिशक्करी | ल |
| | ६४ | अष्टिः | व |
| | ६८ | अत्यष्टिः | दे |
| | ७२ | धृतिः | व |
| | ७६ | अतिधृतिः | |
| कृत्यादितृतीयसप्तकम् | ८० | कृति· | पि |
| | ८४ | प्रकृति· | ङ्ग |
| | ८८ | आकृतिः | ल |
| | ९२ | विकृतिः | व |
| | ९६ | सकृतिः | दे |
| | १०० | अभिकृतिः | व |
| | १०४ | उत्कृतिः | |

## प्रपञ्चः

| निदान० | उपनिदान० | जानाश्रयी० | ऋक्सर्वा० |
|---|---|---|---|
| कृति. | उक्तम् | उक्तम् | × |
| प्रकृतिः | अत्युक्तम् | अत्युक्तम् | × |
| सकृतिः | मध्या | मध्यमम् | × |
| अभिकृतिः | प्रतिष्ठा | प्रतिष्ठा | × |
| उत्कृतिः (आकृतिः, पा०) | सुप्रतिष्ठा | सुप्रतिष्ठा | × |
| पि | पि | पि | पि |
| ङ्ग | ङ्ग | ङ्ग | ङ्ग |
| ल | ल | ल | ल |
| व | व | व | व |
| दे | दे | दे | दे |
| व | व | व | व |
| विधृति. | पि | पि | पि |
| शक्करी | ङ्ग | ङ्ग | ङ्ग |
| अष्टिः | ल | ल | ल |
| अत्यष्टिः | व | व | व |
| अहः ( महना ) | दे | दे | दे |
| सरित् | व | व | व |
| सम्पा | | | |
| सिन्धुः | पि | पि | × |
| सलिलम् | ङ्ग | ङ्ग | × |
| अम्भः | ल | ल | × |
| गगनम् | व | व | × |
| अर्णवः | दे | दे | × |
| आपः | व | व | × |
| समुद्रः | | | × |

# विराट्

| गायत्र्याः प्राचां विराजः | | |
|---|---|---|
| अक्षराणि | ऋक्प्राति० | निदान० |
| २ | हर्षीका | हर्षीका |
| ६ | सर्षीका | सर्षीका (शर्षीका) |
| १० | मर्षीका | मर्षीका (सर्षीका) |
| १४ | सर्वमात्रा | सर्वमात्रा |
| १८ | विराट् | विराट् |

| प्रथमसप्तकस्य विराजः | | |
|---|---|---|
| अक्षराणि | ऋक्प्राति० | निदान० |
| २२ | (ता)राट् | राट् |
| २६ | विराट् | सम्राट् |
| ३० | स्वराट् | विराट् |
| ३४ | सम्राट् | स्वराट् |
| ३८ | स्ववशिनी | स्ववशनी |
| ४२ | परमेष्ठी | परमेष्ठा |
| ४६ | प्रतिष्ठा | अन्तस्था |

| निदानसूत्रानुसारं | गायत्र्याः प्राश्चिच्छन्दांसि | | | | | प्रथमसप्तकच्छन्दांसि | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| छन्दोनामानि | कृतिः | प्रकृतिः | सकृतिः | अभिकृति | उत्कृतिः | गायत्री | उष्णिक् | अनुष्टुप् | बृहती | पङ्क्तिः | त्रिष्टुप् | जगती |
| कृतच्छन्दसामक्षराणि | ४ | ८ | १२ | १६ | २० | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |
| त्रेताच्छन्दसामक्षराणि | ३ | ७ | ११ | १५ | १९ | २३ | २७ | ३१ | ३५ | ३९ | ४३ | ४७ |
| छन्दोनामानि | हर्षीका | सर्षीका | मर्षीका | सर्वमात्रा | विराट् | राट् | सम्राट् | विराट् | स्वराट् | स्ववशनी | परमेष्ठा | अन्तस्था |
| द्वापरच्छन्दसामक्षराणि | २ | ६ | १० | १४ | १८ | २२ | २६ | ३० | ३४ | ३८ | ४२ | ४६ |
| कलिच्छन्दसामक्षराणि | १ | ५ | ९ | १३ | १७ | २१ | २५ | २९ | ३३ | ३७ | ४१ | ४५ |

| छन्दांसि | | गायत्री | उष्णिक् | अनुष्टुप् | बृहती | पङ्क्तिः | त्रिष्टुप् | जगती |
|---|---|---|---|---|---|---|---|---|
| दैवी | छ | १ | २ | ३ | ४ | ५ | ६ | ७ [1] |
| आसुरी | न्द | १५ | १४ | १३ | १२ | ११ | १० | ९ [1] |
| प्राजापत्या | | ८ | १२ | १६ | २० | २४ | २८ | ३२ |
| आर्षी | सा | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |
| याजुषी | म | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| साम्नी | क्ष | १२ | १४ | १६ | १८ | २० | २२ | २४ |
| आर्ची | रा | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ |
| ब्राह्मी | णि | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ |

१ एकाक्षर वै देवानामवम छन्द आसीत्, सप्ताक्षर परमम्।
नवाक्षरमसुराणामवम छन्द आसीत्, पञ्चदशाक्षरं परमम्॥ [ ताण्ड्य० १२।१३।२७ ]

# छन्दांसि

| द्वितीयसप्तकस्य विराजः | | | तृतीयसप्तकस्य विराजः | | |
|---|---|---|---|---|---|
| अक्षराणि | ऋक्प्राति० | निदान० | अक्षराणि | ऋक्प्राति० | निदान० |
| ५० | प्रत्नम् | प्रत्नम् | ७८ | अर्णः | अर्णः |
| ५४ | अमृतम् | अमृतम् | ८२ | अशः | अशः |
| ५८ | वृषा | वृषा | ८६ | अम्भः | अम्भः |
| ६२ | शुक्रम् | जीवम् | ९० | अम्बु | अम्बु |
| ६६ | जीवम् | तृप्तम् | ९४ | वारि | वारि |
| ७० | पय | रसम् | ९८ | आपः | आपः |
| ७४ | तृप्तम् | शुक्रम् | १०२ | उदकम् | उदकम् |

| द्वितीयसप्तकच्छन्दांसि | | | | | | | तृतीयसप्तकच्छन्दांसि | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| विधृतिः | शक्करी | अष्टिः | अत्यष्टिः | अंहः | सरित् | सम्पा | सिन्धुः | सलिलम् | अम्भः | गगनम् | अर्णवः | आपः | समुद्रः |
| ५२ | ५६ | ६० | ६४ | ६८ | ७२ | ७६ | ८० | ८४ | ८८ | ९२ | ९६ | १०० | १०४ |
| ५१ | ५५ | ५९ | ६३ | ६७ | ७१ | ७५ | ७९ | ८३ | ८७ | ९१ | ९५ | ९९ | १०३ |
| प्रत्नम् | अमृतम् | वृषा | जीवम् | तृप्तम् | रसम् | शुक्रम् | अर्णः | अशः | अम्भः | अम्बु | वारि | आपः | उदकम् |
| ५० | ५४ | ५८ | ६२ | ६६ | ७० | ७४ | ७८ | ८२ | ८६ | ९० | ९४ | ९८ | १०२ |
| ४९ | ५३ | ५७ | ६१ | ६५ | ६९ | ७३ | ७७ | ८१ | ८५ | ८९ | ९३ | ९७ | १०१ |

| विधृतिः | शकरी | अष्टिः | अत्यष्टिः | अंहः | सरित् | सम्पा |
|---|---|---|---|---|---|---|
| ८ | ९ | १० | ११ | १२ | १३ | १४ |
| ८ | ७ | ६ | ५ | ४ | ३ | २ |
| ३६ | ४० | ४४ | ४८ | ५२ | ५६ | ६० |
| ५२ | ५६ | ६० | ६४ | ६८ | ७२ | ७६ |

गायत्र्यादिजगत्यन्ताना दैव्यादयो भेदा पिङ्गलऋक्प्रातिशाख्यनिदानोपनिदानसूत्रेषु समाना दृश्यन्ते। याजुष्यादयो भेदा निदानसूत्रवर्जमन्येषु समाना। निदानसूत्रे याजुष्यादयो न सन्ति। विधृत्यादिसम्पान्ताना दैव्यादयो भेदा निदानसूत्र एव समुपलभ्यन्ते॥

## गायत्र्याः

| पादाक्षरसंख्या | पूर्णाक्षरसंख्या | पिङ्गल० |
|---|---|---|
| ८ \| ८ \| ८ | २४ | गायत्री |
| ७ \| ७ \| ७ | २१ | पादनिचृत् |
| ६ \| ८ \| ७ | २१ | अतिपादनिचृत् |
| ६ \| ७ \| ८ | २१ | वर्धमाना |
| ८ \| ६ \| ८ | २२ | × |
| ८ \| ७ \| ६ | २१ | प्रतिष्ठा |
| ६ \| ९ \| ९ | २४ | वाराही |
| ९ \| ९ \| ६ | २४ | नागी |
| १२ \| ८ | २० | द्विपाद् विराट् |
| ११ \| ११ \| ११ | ३३ | त्रिपाद् विराट् |
| ६ \| ६ \| ६ \| ६ | २४ | चतुष्पात् |
| ७ \| १० \| ७ | २४ | यवमध्या |
| ९ \| ६ \| ९ | २४ | पिपीलिकमध्या |
| ५ \| ६ \| ६ \| ६ | २३ | शङ्कुमती |
| ६ \| ६ \| ७ | १९ | × |
| ७ \| ६ \| ७ | २० | × |
| ५ \| ५ \| ५ \| ४ \| ६ | २५ | × |
| ५ \| ५ \| ५ \| ५ \| ६ | २६ | × |
| ५ \| ५ \| ५ \| ५ \| ५ | २५ | × |
| ६ \| ७ \| ११ | २४ | × |
| ८ \| १० \| ७ | २५ | × |
| १२ \| १२ | २४ | × |
| १० \| १० | २० | × |
| ९ \| ९ | १८ | × |
| ८ \| ८ | १६ | × |
| ८ | ८ | × |

## प्रपञ्चः

| ऋक्प्राति० | ऋक्सर्वा० | निदान० | उपनिदान० |
|---|---|---|---|
| गायत्री | गायत्री | गायत्री | गायत्री |
| पादनिचृत् | पादनिचृत् | × | पादनिचृत् |
| × | × | × | × |
| वर्धमाना | वर्धमाना | × | वर्धमाना |
| '' (एकेषाम्) | × | × | × |
| × | प्रतिष्ठा | × | प्रतिष्ठा |
| × | × | × | × |
| × | × | × | × |
| × | × | × | × |
| × | × | × | × |
| चतुष्पात् | × | चतुष्पात् | चतुष्पात् |
| यवमध्या | यवमध्या | × | × |
| × | × | × | × |
| × | × | × | शङ्कुमती |
| अतिनिचृत् | ह्रसीयसी | × | × |
| अतिनिचृत् | अतिनिचृत् | × | × |
| पदपङ्क्तिः | पदपङ्क्ति | × | × |
| भुरिक्पदपङ्क्ति | पदपङ्क्तिः | × | × |
| भुरिक्पदपङ्क्तिः | × | × | × |
| उष्णिग्गर्भा | उष्णिग्गर्भा | × | × |
| भुरिग्गायत्री | × | × | × |
| द्विपदा | × | × | × |
| × | × | × | विराट् |
| × | × | × | स्वराट् |
| × | × | द्विपदा | द्विपदा |
| × | × | × | एकपदा |

एतेन गौडपादीयकारिकाभिनववृत्तिकृदुक्तं शून्यत्वस्य ज्ञानरूपत्वं प्रत्युक्तम्। तत्र प्रमाणानि च व्याख्यातानि। शून्यत्वदृष्टेः पारमार्थिकत्वं तु विषयपारमार्थिकत्वेन। यदि शून्यत्वं ज्ञानरूपमेव स्यात्तदा विज्ञानवादशून्यवादयोर्भेदो दुरुपपादः स्यात्।

अद्वैतवादे परमार्थतत्त्वं सच्चिदानन्दरूपं ब्रह्म नित्यविज्ञानस्वरूपम्, निरधिष्ठानिकाया ग्राह्यकल्पनायाः शून्यत्वकल्पनाया वाऽसम्भवात्। एषां मते सर्वे विज्ञानातिरिक्ता भावा अनिर्वाच्यमायाकार्यत्वेनानिर्वाच्या। विज्ञानं तु सद्रूपतया निर्वाच्यम्। अत एवाध्यासभामत्याम्—"प्रत्यक्पदमनिर्वाच्यदेहेन्द्रियादिप्रतिकूलत्वेन सत्त्वेन निर्वाच्यतयाऽऽत्मनि प्रयुज्यते" इत्युक्तम्। एतन्मते भावानां सत्त्वमनिर्वाच्यं बाध्यं च। तदुक्तं खण्डने—"एवं सति सौगतब्रह्मवादिनोरयं विशेषो यदादिमः सर्वमेवानिर्वचनीयं वर्णयति। तदुक्तं भगवता लङ्कावतारे—"बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते। अतो निरभिलाप्यास्ते निस्स्वभावाश्च देशिताः॥" इति। विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसद्भ्यां विलक्षणं ब्रह्मवादिनः संगिरन्ते" इति।

२ शून्यवादे ग्राह्यग्राहकयोर्द्वयोरपि सांवृतं सत्त्वम्।

अद्वैतवादे तु ग्राहकस्य पारमार्थिकं सत्त्वं ग्राह्यस्य तु व्यावहारिकं प्रातिभासिकं च।

३ शून्यवादिमते शून्यत्वस्य सत्त्वादिनाऽनिर्वाच्यत्वेन निरधिष्ठानैव सर्वा कल्पना। यद्यपि सा न दृष्टचरी, तथापि युक्तिबलात् सर्वशून्यत्वसिद्धौ स्वीकर्तव्या भवतीति।

अद्वैतिमते सत्त्वेन निर्वाच्यस्य विज्ञानस्य कल्पनाधिष्ठानत्वम्, कल्पनायाः सदधिष्ठानिकाया एव दृष्टत्वात्।

४. शून्यवादिमते प्रागुक्तानिर्वाच्यसर्वशून्यत्वरूप एव मोक्षः। अद्वैतिमते तु मोक्षनिवृत्त्युपलक्षितः प्रकाशमानानन्दरूपविज्ञानात्मरूपः।

५. सर्वशून्यत्ववादे नैरात्म्यभावना मोक्षोपायः। अद्वैतवादिमते त्वैकात्म्यभावनेति भेदः।

६. सौगतयोरपि प्रागुक्तयोर्निरीश्वरवादः। अद्वैतवादे तु व्यावहारिकमीश्वरसत्त्वम्।

७. शून्यवादोऽसत्कारणतावादत्वेन श्रुतौ श्रुतः—"तद्धैक आहुरसदेवेदमग्र आसीदिति। कथं नु खलु सौम्यासतः सञ्जायेत" इति। तथा चात्मतत्त्वविवेकान्त उदयनाचार्यः—

## वादत्रयविमर्शः

"अथार्थाभावः, यमाश्रित्य वेदान्तद्वारमात्रोपसहारः शून्यत्वनैरात्म्यसमुत्थान च, तत्प्रतिपादनार्थम्—'असदेवेदमग्र आसीत्' इत्यादि। तद्धानाय—'अन्ध तमः प्रविशन्ति ये के चात्महनो जनाः' इत्यादि" इति।

अद्वैतवादस्तु सत्कारणतावादत्वेन—"सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यादिश्रुतिषु श्रुतः।

## सौगतब्रह्मवादयोः पार्थक्यम्

तदित्थ सौगतब्रह्मवादिनोर्भेदे सुमहति सिद्धे यत्तयोरैक्यप्रसाधनाय कारिकाचयमुपन्यस्यन्ति—"अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः। चलस्थिरोभयाभावैरावृणोत्येव बालिश.॥ कोट्यश्चतस्र एतास्तु ग्रहैर्यासा सदाऽऽवृतः। भगवानाभिरस्पृष्टो येन दृष्टः स एव सः॥ [ माण्डू० अलात० ८२–८३ ], न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्। चतुष्कोटिविनिर्मुक्त तत्त्व माध्यमिका विदुः॥ [ माध्य० का० ] चतुष्कोटिविनिर्मुक्तमद्वैतिना विज्ञानम्, तादृशमेव माध्यमिकाना शून्यत्वमिति न कोऽपि भेदः" इति, तदपि तात्पर्यद्वयानवबोधात्। तथा हि—अस्ति नास्तीत्यादि प्रागुक्तकारिकाद्वयात्प्राक्—

अजमनिद्रमस्वप्न प्रभात भवति स्वयम्।
सकृद् विभातो ह्येवैष धर्मो धातुस्वभावतः॥

सुखमाव्रियते नित्य दुःख विव्रियते सदा।
यस्य कस्य च धर्मस्य ग्रहेण भगवानसौ॥

इति कारिमाद्वय वर्तते। तथा च नित्यस्वप्रकाशरूप आत्मा प्रकृतः च स चलस्थिरोभयाभावैः, अस्तीति, नास्तीति, अस्ति नास्तीति, नास्ति नास्तीति वा कोटिचतुष्टयैरावृतत्वात् सुखरूपेण न गृह्यते, किन्तु दुःखरूपेण गृह्यत इति कारिकाचतुष्टयस्य समानार्थः। सर्वाः कल्पना नित्यस्वप्रकाशसुखरूपस्यात्मन आवरणभूता इति तात्पर्यम्। न त्वात्मनोऽनिर्वाच्यत्वम्, सद्रूपत्वाभ्युपगमात्। इद च तद्भाष्यदर्शनेन सुग्रहमिति तत एव ज्ञेयम्। "न सन्नासन्" इत्यादिमाध्यमिककारिकायास्तु चतुष्कोटिविनिर्मुक्तस्य शून्यत्वस्यानिर्वाच्यत्वे तात्पर्यमिति भेदः। शून्यत्वस्य यथा न ज्ञानरूपत्व तथा प्रागेवोपपादितम्।

## शून्यवादखण्डनम्

गौडपादकारिकासु च शून्यवादिमत प्रत्याख्यातमपि—

सतो हि मायया जन्म युज्यते न तु तत्त्वतः ।
तत्त्वतो जायते यस्य जात तस्य हि जायते ॥
असतो मायया जन्म तत्त्वतो नैव युज्यते ।
वन्ध्यापुत्रो न तत्त्वेन मायया वाऽपि जायते ॥
[ अद्वैतप्रकरण० २७–२८ ]

व्याख्यात च भाष्यकृद्भिः—"असद्वादिनामसतो भावस्य मायया तत्त्वतो वा न कथञ्चन जन्म युज्यते, अदृष्टत्वात् । न हि वन्ध्यापुत्रो मायया तत्त्वतो वा जायते, तस्मादत्रासद्वादो दूरत एवानुपपन्न इत्यर्थ." इति । शून्यवादे कार्यकारणभावो नोपपद्यत इति विवर्त्तवाद एव सदधिष्ठानककल्पनारूप आश्रयणीय इति तत्तात्पर्यम् ।

तत् सिद्ध शून्यवादविज्ञानवादाभ्या विलक्षण एवाद्वैतवाद औपनिषद इति कृतं पल्लवितेन ।

दुर्दर्शमतिगम्भीरमज साम्य विशारदम् ।
विचार्यपदमद्वैत नमस्कुर्मो यथाबलम् ॥

---

# स्थविरधर्मपर्यायः

श्रीशान्तिभिक्षुशास्त्री, शान्तिनिकेतनम् ।

तथागतस्य देशित तस्य शिष्यगणस्यानुदेशित च हीनयानमहायानभेदेन भिन्ना निकायाः स्वस्वत्रिपिटके समाम्नासिषुः । तत्र चरित्रपर्यालोचनया विज्ञायते यद् बौद्धधर्मस्य प्रत्नतम रूप स्थविराणा निकाये विद्यते । वैराग्यप्रवणो हि परमादिमो बौद्धधर्मो गच्छता कालेनानुरागप्रवणो जातः । ससारवैमुख्य सत्त्वानुरागे परिणतम् । सहजानि सरलानि धर्मवचनानि लालित्ये निगूहितानि विद्यमानान्यपि दृष्टिपथाद् विप्रकृष्टानि सजातानि । इम रुचिपरिवर्तन मनसि कृत्वैवोक्तम्—"भविष्यन्ति भिक्षवोऽनागतेऽध्वनि ये ते सूत्रान्तास्तथागतभाषिता (तान्) न शुश्रूषिष्यन्ति । ये पुनस्ते सूत्रान्ताः कविकृताः काव्यमयाश्चित्राक्षराश्चित्रव्यञ्जना बाह्याः श्रावकभाषितास्तेषु भाष्यमाणेषु शुश्रूषिष्यन्ति । एव सूत्राणा तथागतभाषितानामन्तर्धान भविष्यति" [सयुत्तनिकाय, २।२६७][1] इति । स्थविराणा कृते वय परम कृतवेदिनो यते लालित्यविमुखाः सन्तः प्रत्नतर बौद्धवाङ्मय विनैव सुबहुप्रक्षेप साम्प्रतमपि परिपालयन्ति ।

पूर्व स्थविरैरेव नागसेनप्रमुखैः प्रबलैर्यत्नैः सिद्धान्ताना पद्धतिकरण समारब्धम् । तत्र स्थविराणा दर्शने धर्मे च यानि प्रमुखानि तत्त्वानि, तेषा हृदयोपस्थापनायात्र यत्नः क्रियते । प्रत्नतरे बौद्धधर्मदर्शनतत्त्वे विज्ञाते क्रमेण विपरिणत रूप विज्ञातु सुकर भविष्यति ।

विषयप्रतिपादनमिह सर्वत्रागमस्य वा प्राचार्याणा वचनाना वानुवादमुखेन विधीयते । न क्वचिदप्यत्र खण्डनमण्डलमारोच्यते । न हि स्वमोकः प्रहायानिकेतसारिणा ग्रामेऽ-

---

१ इह येषा ग्रन्थानामुद्धरणानि ते पालिटेक्स्टसोसायटीमुद्रिता विज्ञेया । परम् अभिधम्मत्थसगह इति ग्रन्थः कोसम्बी-सस्कृतो महाबोधिसोसायटी (सारनाथ) मुद्रितो विज्ञातव्य । अस्य निर्देशे दण्डत पूर्व परिच्छेदाङ्क परतश्चानुच्छेदाङ्को विज्ञेय । धम्मपदस्य गाथाक्रमाङ्क एव निदिष्ट ।

किञ्चास्मिन्निबन्धे बहुतरोऽश पालिच्छायारूप । छायाकरणे वाक्यसन्धिर्बहुत्र नादृत । गाथाना छायासु छन्दोलक्षणानुसरण यद्यनायासेन जात तर्हि कृतम् , अन्यथा माध्यस्थ्यमवलम्बितम् ।

सस्तवमकुर्वाणाना कामैर्विरक्तानामनागताध्वचिन्तया विप्रमुक्ताना मुनीना तत्त्वचर्चायामस्ति क्वापि विगृह्य कथाया अवसरः। तत्रेह प्रतिपिपादयिषितस्य विषयस्याय मातृकोद्देशः—१. सर्वधर्मनिर्देशः—मूलतत्त्वानि निर्वाण च, २. सर्वधर्मलक्षणम्—पुद्गलनैरात्म्यम्, ३. सर्वसस्कृतधर्मलक्षणम्—अनित्यता-दुःखता अनात्मता, ४. निर्वाणलक्षणम्, ५. कालः आकाश च, ६. चित्तसन्ततिः, ७. नामरूपप्रतिसन्धानम्, ८. गतिभेदः, ९. ससारस्वरूपम्, १०. निःसरणम्, ११. शरण चेति। एकादशभिर्मातृकाभिर्विषय निरूप्य पश्चात् सिंहावलोकितन्यायेन विषयसमीक्षणमप्यारोचयिष्यामः।

## १. सर्वधर्मनिर्देशः—मूलतत्त्वानि निर्वाणं च

सर्वाणीमानि भूतानि न किमप्येक तत्त्व प्रतीत्य जायन्ते प्रत्युत बहूनि तत्त्वानि प्रतीत्य जायन्ते। तेषामेतेषा बहूना तत्त्वाना पञ्च राशयः पञ्च स्कन्धा नाम। तद्यथा, रूपस्कन्धः—पृथिव्यप्तेजवायूना चतुर्णा भूताना प्रपञ्चः। वेदनास्कन्धः—सुखानुभवस्य, दुःखानुभवस्य, अदुःखासुखानुभवस्य च प्रपञ्चः। सज्ञास्कन्धः—सविकल्पकज्ञानप्रपञ्चः। सस्कारस्कन्धः—चैतसिकधर्मप्रपञ्चः। विज्ञानस्कन्धः—चित्तप्रपञ्चः। स्कन्धेभ्यो व्यतिरिक्त निर्वाणम्। षड्भिरेतैर्वर्गैः सर्वतत्त्वसग्रहः।

अथवा चतुर्भिरेव सर्वसग्रहः। तद्यथा—चित्त चैतसिक रूप निर्वाण च। वेदनास्कन्धस्य सज्ञास्कन्धस्य चात्र चैतसिकेष्वन्तर्भावो वेदितव्यः[1]।

अथवा त्रिभिरेव सर्वसग्रहः। तद्यथा—चित्त स्थूलरूप (=पञ्चेन्द्रियाणि, पञ्चार्थाश्च) धर्मधातुश्च। धर्मधातौ सूक्ष्मरूपचैतसिकधर्मनिर्वाणानामन्तर्भावो वेदितव्यः[2]। यथा वा—रूपम्, अरूपम्, निर्वाणं चेति।

अथवा द्वाभ्यामेव सग्रहः। असस्कृत (=निर्वाण) सस्कृत (=स्कन्धप्रपञ्चः) च।

अथवैकेनैव धर्मा इति पदेन सर्व निर्देष्टु शक्यते।

## २. सर्वधर्मलक्षणं—पुद्गलनैरात्म्यम्

सर्वे धर्मा अनात्मानः[3]। अत्र नास्ति कश्चिदात्मा सत्त्वो वा। "यथेषा च प्रतीत्य, अक्ष च प्रतीत्य, चक्राणि च प्रतीत्य, रथपञ्जर च प्रतीत्य रथ इति' ' व्यवहारः।" एवमेव

---

१ अभिधम्मत्थसगह १।१। २ अभिधम्मत्थसगह ७।४१। ३. धम्मपद २७६।

रूपं च प्रतीत्य, वेदना च प्रतीत्य, संज्ञा च प्रतीत्य, संस्काराश्च प्रतीत्य विज्ञानं च प्रतीत्य ''' [ आत्मा ] इति व्यवहारः। परमार्थतः पुनरत्र पुद्गलः ( = आत्मा ) नोपलभ्यते[1] ।'' स्कन्धाश्रय एव सोऽयं व्यवहारो यदिदम् 'आत्मा' इति, 'सत्त्व' इति । तथा चागमः—

यथा हि अङ्गसभारा होति सद्दो रथो इति ।
एवं खन्धेसु सन्तेसु होति सत्तो ति सम्मुति[2] ।।
[यथा ह्यङ्गसभाराद् भवति शब्दो रथ इति ।
एवं स्कन्धेषु सत्सु भवति सत्त्व इति संवृतिः ।।]

तदिदं पुद्गलनैरात्म्यं ( = अनात्मत्वं ) सर्वधर्मानुगतमेकं लक्षणम् ।

## ३. सर्वसंस्कृतधर्मलक्षणम्—अनित्यता-दुःखता-अनात्मता

सर्वे संस्कृतधर्मा नाम पञ्च स्कन्धाः । तेऽनित्या दुःखा अनात्मानः । संस्कृतधर्माणामनित्यताया तारतम्यमपि भवति । ''तत्रोत्पादस्थितिभङ्गवशेन क्षणत्रयमेकचित्तक्षणं नाम । सप्तदश चित्तक्षणानि रूपधर्माणामायुः[3] ।'' तथा च महद्धि रूपक्षणं यस्मिन् सप्तदश चित्तक्षणान्युत्पद्य निरुध्यन्ते । एतत्क्षणतारतम्यमागमानुसारमाचार्यैर्व्यवस्थापितम् । विद्यते चागमे प्रतिपाद्यते चागमे चित्तापेक्षया रूपतत्त्वस्य स्थिरता । तथा हि—''वरम् अश्रुतवान् पृथग्जन इमं चातुर्महाभूतिकं कायमात्मत उपगच्छेत् । न त्वेव चित्तम् । तत्कस्य हेतोः ? दृश्यतेऽयं कायः एकमपि वर्षं तिष्ठन् वर्षशतमपि तिष्ठन् भूयोऽपि तिष्ठन् । यच्च खल्वेतद् उच्यते चित्तमिति विज्ञानमिति तद् रात्र्याश्च दिवसस्य चान्यदेवोत्पद्यतेऽन्यदेव निरुध्यते[4] ।''

## ४. निर्वाणलक्षणम्

''निर्वाणं पुनर्लोकोत्तरसंख्यातं चतुर्मार्गज्ञानेन साक्षात्कर्तव्यं मार्गफलानामालम्बनभूतं वानसंख्यातायास्तृष्णाया निष्क्रान्तत्वान्निर्वाणमिति प्रोच्यते । तदेतत् स्वभावत एकविधमपि

---

१ मिलिन्दपञ्ह, पृष्ठ २८ ।

२ संयुत्तनिकाय, १ । १३१, इदं मिलिन्दप्रश्नेऽपि [ २८ तमे पृष्ठे ] उद्धृतम् ।

३ अभिधम्मत्थसंगह ४।८ ।

४ संयुत्तनिकाय, २।९४–९५ ।

सोपादिशेषनिर्वाणधातुः, निरुपादिशेषनिर्वाणधातुश्चेति द्विविध भवति कारणपर्यायेण । तथा शून्यम्, अनिमित्तम्, अप्रणिहित चेति त्रिविध भवत्याकारभेदेन ।

[1]पदमच्युतमत्यन्तमसंस्कृतमनुत्तरम् ।
निर्वाणमिति भाषन्ते वानमुक्ता महर्षयः ॥

तत्र पृथग्जनः ( =साधारणो लोकः ) सयोजनबद्धो भवति । सयोजनानि नाम रागादयः क्लेशाः । आर्यः सयोजनमुक्तो भवति । तत्राप्यस्ति तारतम्यम् । तथा हि—दृष्टि-विचिकित्साप्रहाणेन स्रोतआपन्नो भवति । रागद्वेषमोहाना तनूकरणेन सकृदागामी भवति । कामरागव्यापादयोरनवशेषप्रहाणेनानागामी भवति[2] । स्रोतआपन्नस्य भवे नाष्टम जन्म भवति । सप्तकृत्व एव स जायते[3] । सकृदागामिनः केवलमिहैकवार जन्म भवति न द्वितीयम् । अनागामी नेह मनुष्येषूत्पद्यते । स शुद्धावासदेवेषूत्पद्य तत एव निर्वाति । अनवशेषक्लेश-प्रहाणेनार्हन् नाम भवति क्षीणास्रवो लोकेऽग्रदक्षिणीयः[4] । एतेषा चतुर्णा पुद्गलाना भेदेन चत्वारो मार्गाः—स्रोतआपत्तिमार्गः, सकृदागामिमार्गः, अनागामिमार्ग , अर्हन्मार्गश्चेत्यु च्यन्ते । तेषामेव भावनया निर्वाण साक्षात्कर्तव्य भवति ।

निर्वाण निरोधरूप तृष्णाया अनवशेषनिरोध एव । तस्य द्वौ भेदौ । प्रथम जीवन मुक्तिरूप यत् सोपादिशेषनिर्वाणधातुरित्युच्यते । यतस्तस्मिन् उपादेः शेषोऽवशेषस्तिष्ठति । उपादीयते कर्मणा—इत्युपादिः । स्कन्धपञ्चकस्य नामान्तरमेवोपादिः । द्वितीय शरीरपाते यत् पुनर्जन्माभावः । तस्यैव सेयमाख्या निरुपादिशेषनिर्वाणधातुरिति । यतो न तस्मिन् उपादेः ( =पञ्चस्कन्धानाम् ) विद्यमानता ।

निर्वाणाधिगमाय मार्गः स्रोतआपत्त्यादिरूपो लब्धव्यो भवति । स यद्यनात्मानुपश्यनया लभ्यते तर्हि तत्साक्षात्कृत निर्वाण शून्यमित्युच्यते, रागादिभिः शून्यत्वात् । स यद्यनित्यतानुप-श्यनया लभ्यते तर्हि तत्साक्षात्कृत निर्वाणमनिमित्तमित्युच्यते, रागादिनिमित्ताभावात् । स यदि दुःखानुपश्यनया लभ्यते तर्हि तत्साक्षात्कृत निर्वाणमप्रणिहितमित्युच्यते, रागादि-प्रणिधिविरहितत्वात् ।

---

१ अभिधम्मत्थसगह ६।३०, ३१ ।
२ अभिधम्मत्थसगह ६।३९-४१ ।
३ सुत्तनिपात, रतनसुत्त, गाथा ६ ।
४ अभिधम्मत्थसगह ६।४२ ।

## ५. कालः, आकाशं च

आकाश वस्तुभूत नास्ति । तत् केवल परिच्छेदरूप नाम[1] । इदं रूपाणा परिच्छेद-दर्शनमात्रेण ज्ञायते ।

काल इति अध्वा इति नार्थान्तरम् । सोऽयमतीतानागतप्रत्युत्पन्नभेदेन भिद्यते । "कश्चिद् अध्वास्ति कश्चिद् नास्ति । ये सस्कारा अतीता विगता निरुद्धा विपरिणता सोऽध्वा नास्ति । ये धर्मा विपाका ये च विपाकधर्मधर्मा ये चान्यत्र प्रतिसन्धि ददति, सोऽध्वास्ति । ये सत्त्वा कालकृता अन्यत्रानुत्पन्नाः, सोऽध्वा नास्ति । ये च सत्त्वाः परिनिर्वृताः, स चाध्वा नास्ति परिनिर्वृतत्वात् ।" तथा च धर्माणा त्रिकालास्तिता नास्ति ।

"अतीतस्याध्वनोऽनागतस्य चाध्वनः प्रत्युत्पन्नस्य चाध्वनोऽविद्या मूलम् । अविद्या-प्रत्ययात् सस्काराः, संस्कारप्रत्ययाद् विज्ञानम्, विज्ञानप्रत्ययाद् नामरूपम्, नामरूपप्रत्ययात् षडायतनम् , षडायतनप्रत्ययात् स्पर्शः, स्पर्शप्रत्ययाद् वेदना, वेदनाप्रत्ययात् तृष्णा, तृष्णा-प्रत्ययाद् उपादानम् , उपादानप्रत्ययाद् भवः, भवप्रत्ययाद् जातिः, जातिप्रत्ययाद् जराकरण-शोकपरिदेवदुःखदौर्मनस्योपायासाः संभवन्ति । एवमेतस्य केवलस्याध्वनः पूर्वा कोटिर्न प्रज्ञायते ।"[2]

"यः खल्वतीतोऽध्वा, एषा पूर्वा कोटिः । इतः पूर्व "सर्वेण सर्व सर्वथा सर्वम् अविद्या नाभवदिति, एषा पूर्वा कोटिर्न प्रज्ञायते । यच्च अभूत्वा सभवति भूत्वा प्रतिविगच्छति, एषा पूर्वा कोटिः प्रज्ञायते ।"[3] तथा च सर्वेषा धर्माणा जायमानानामविद्यैव पूर्वा कोटिः । अविद्यायाः पूर्वा कोटिस्तु न ज्ञायते । "धर्मसन्ततिः सन्दधाति, अन्य उत्पद्यते, अन्यो निरुध्यते ।"[4]

## ६. चित्तसन्ततिः

धर्मेषु हेयोपादेयप्रवणतया चित्तं प्रधानम् । चित्त मनो विज्ञानमिति पर्यायाः । सर्वे धर्माः खलु "मनः पूर्वगमा मनःश्रेष्ठा मनोमयाः ।"[5] तस्यैतस्य मनसो वा चित्तस्य वा चतस्रोऽवस्थाः । तद्यथा—कस्मिंश्चिदपि भवे यत्प्रथम चित्त तत्प्रतिसन्धिचित्त नाम । यत

१ अभिधम्मत्थसगह ६।५ । २ मिलिन्दपन्ह, पृष्ठ ४९–५० ।
३ मिलिन्दपन्ह, पृष्ठ ५१ । ४ मिलिन्दपन्ह, पृष्ठ ४१ । ५ धम्मपद १ ।

इह भवेन भवं प्रति सन्दधाति तत इह प्रतिसन्धिचित्तमित्युच्यते। कस्मिंश्चिदपि भवे यत् चरम चित्त तत् च्युतिचित्त नाम। प्रतिसन्धिच्युतिचित्तयोरन्तरे तस्य तस्य भवस्याङ्गभावेन यावदायुः प्रवर्तमान चित्त भवाङ्गचित्तमित्युच्यते। एतस्य भवाङ्गचित्तस्य तत्तदालम्बने यत् प्रवर्तन तद् वीथीचित्त नाम।

प्रतिसन्धिभवाङ्गवीथयश्च्युतिरत्र तथा भवान्तरे।
पुनः सन्धिर्भवाङ्गमितीयं परिवर्तते चित्तसन्ततिः॥[१]

चित्तस्य प्राधान्यमङ्गीकृत्योच्यते चित्तस्य प्रतिसन्धिः, चित्तस्य च्युतिरित्यादि। वस्तु तस्तु नामरूप प्रतिसन्दधाति। "तत्र कतमद् नाम कतमद् रूप। यत्तत्र औदारिक ( = स्थूल ) एतद्रूपम्, ये तत्र सूक्ष्माश्चित्तचैतसिका धर्मा एतद् नाम। केन कारणेन नामैव न प्रतिसन्दधाति, रूपमेव वा। अन्योन्योपनिश्रिता इमे धर्मा एकत एवोपप॰ द्यन्ते ..[२] एवमेतद् दीर्घाध्वना सन्धावितम्।"[३]

## ७ नामरूपप्रतिसन्धानम्

"नामरूप 'प्रतिसन्दधाति। किम् एतदेव नामरूप प्रतिसन्दधाति। न खलु एतदेव नामरूप प्रतिसन्दधाति। अनेन पुनः नामरूपेण कर्म करोति शोभन वा पापक वा, तेन कर्मणा [ निर्वृत्त ] अन्यद् नामरूप प्रतिसन्दधाति। अन्यद् मरणान्तिक नाम रूपम्, अन्यत् प्रतिसन्धौ नामरूपम्। अपि च तत एव तद् निर्वृत्तम्॥[४]

## ८. गतिभेदः

गर्भे एके उत्पद्यन्ते निरयं पापकर्मिणः।
स्वर्ग सुगतिनो यन्ति परिनिर्वान्ति अनास्रवा॥[५]

तथा च दुर्गतिः सुगतिश्चेति कर्मिणा द्वे गती। तयोः प्रपञ्चः सर्वस्त्रैधातुको[६] भवति ससारः। सर्वा गतिः सास्रवा रागद्वेषमोहक्लेशसहिता। निर्वाण नाम न गतिः, तत्र क्लेशा-भावात्। अत एव तदनास्रवमित्युच्यते।

---

१ अभिधम्मत्थसगह ५।४१। २ सहैवोत्पद्यन्ते—इत्यर्थः। ३ मिलिन्दपञ्ह, पृष्ठ ४६।

४ मिलिन्दपञ्ह, पृष्ठ ४६, ४८। ५ धम्मपद १२६।

६ त्रैधातुससारविवेचनार्थं द्रष्टव्यम् [ अभिधम्मत्थसगह ५। ३–८ ]।

## स्थविरधर्मपर्यायः

### ६. संसारस्वरूपम्

त्रयाणां सन्निपाताद् गर्भस्यावक्रान्तिर्भवति। इह मातापितरौ च सन्निपतितौ भवतः। माता च ऋतुमती भवति। गन्धर्वः ( =अन्तराभवः = मृत्यूपपत्तिभवयोरन्तरे प्रवर्तमानः स्कन्धसन्तानः ) च प्रत्युपस्थितो भवति। " तमेन माता नव वा दश वा मासान् गर्भं कुक्षिणा परिभरति महता सशयेन गुरु भारम्। नवानां वा दशानां वा मासानामत्ययेन विजायते तमेन जात समान स्वकेन लोहितेन पोषयति। लोहित ह्येतद् आर्यस्य विनये यदिद मातुः स्तन्यम्।

स खलु कुमारो वृद्धिमन्वेत्य इन्द्रियाणां परिपाकमन्वेत्य पञ्चभिः कामगुणैः समर्पितः समङ्गीभूतः परिचारयति चक्षुर्विज्ञेयै रूपैरिष्टैः कान्तैः मनापैः प्रियरूपैः कामोपसहितै रञ्जनीयैः, श्रोत्रविज्ञेयैः शब्दैः, घ्राणविज्ञेयैर्गन्धैः, जिह्वाविज्ञेयै रसैः, कायविज्ञेयैः स्प्रष्टव्यैः [ मनोविज्ञेयैर्धर्मैश्च ]।

स चक्षुषा रूप दृष्ट्वा प्रियरूपे सरज्यति, अप्रियरूपे व्यापद्यते। श्रोत्रेण शब्द श्रुत्वा, घ्राणेन गन्ध घ्रात्वा, जिह्वया रसमशित्वा, कायेन स्प्रष्टव्य स्पृष्ट्वा, मनसा धर्मं विज्ञाय, प्रियरूपे सरज्यति, अप्रियरूपे व्यापद्यते। अनुपस्थितकायस्मृतिश्च विहरति परित्तचेताः। ता च चेतोविमुक्तिं प्रज्ञाविमुक्तिं यथाभूता न प्रजानाति यथास्य ते पापका अकुशला धर्मा अपरिशेषा निरुध्यन्ते। स एवमनुरोधविरोध समापन्नो या काञ्चन वेदना वेदयते सुखा वा दुःखा वा अदुःखासुखा वा, स ता वेदनामभिनन्दति, अभिवदति, अध्यवस्य तिष्ठति। तस्य ता वेदनामभिनन्दतोऽभिवदतोऽध्यवस्य तिष्ठत उत्पद्यते नन्दी। या वेदनासु नन्दी तदुपादानम्।

तस्योपादानप्रत्ययाद् भवः, भवप्रत्ययाज्जातिः, जातिप्रत्ययाद् जरामरण शोकपरिदेवदुःखदौर्मनस्योपायासा. सभवन्ति, एवमेतस्य केवलस्य दुःखस्कन्धस्य समुदयो भवति।

उपादान हि क्लेशः। भवः कर्मः। जातिजरामरणादिफल दुःखरूपम्। तथा च दुःख कर्मजम्। कर्म क्लेशजम्। क्लेशस्यैवाभिधान यदिदम् 'अविद्या' इति, 'तृष्णा' इति। कर्मण एवैतदभिधान यदिद 'सस्काराः' इति, 'भवः' इति। दुःखमेवेद सर्व यदिदमुच्यते जातिजरामरणादिकम्। तस्यैव प्रपञ्चो यदिदमुच्यते विज्ञान नामरूप षडायतन स्पर्शो वेदना चेति। एव क्लेशकर्मदुःखाना चक्र प्रवर्तते।

## १०. निःसरणम्

शीलसमाधिप्रज्ञाभिः क्लेशान् विशोधयति। विशुद्धेषु यत् कर्म भवति तदक्लिष्ट नाम, न च तत् कुशलाकुशलशुभाशुभपुण्यापुण्यदु.खसुखरूप विपाक दातु प्रभवति। तथा च दुःखात् सत्त्वो निःसरति। तदेतत्सर्व क्लेशादिशोधन कथ सपद्यते। [1]अत्रागमः—"इह तथागता लोके उत्पद्यते अर्हन् सम्यक्सम्बुद्धो विद्याचरणसम्पन्नः सुगतो लोकविद् अनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणा बुद्धो भगवान्। स धर्म देशयति आदिकल्याण मध्येकल्याण पर्यवसानकल्याण सदर्थ सव्यञ्जन केवलपरिपूर्ण परिशुद्ध ब्रह्मचर्य प्रकाशयति। त धर्म शृणोति गृहपतिवा गृहपतिपुत्रो वाऽन्यतरस्मिन् वा कुले प्रत्याजातः। स त धर्म श्रुत्वा तथागते श्रद्धा प्रतिलभते। स तेन श्रद्धाप्रतिलाभेन समन्वागत इति [2]प्रतिसञ्चिन्तति ( मनसि विमर्श करोति ) सबाधो गृहावासो रजःपथोऽभ्यवकाश. प्रव्रज्या। नेद सुकरमागारमध्यावसता एकान्तपरिपूर्णमेकान्तपरिशुद्ध शङ्खलिखित ब्रह्मचर्य चरितुम्। यन्नूनमह केश श्मश्रूण्यवहार्य, काषायाणि वस्त्राण्याच्छाद्य, अगारादनागारिक प्रव्रजेयमिति। सोऽपरेण समयेनाल्प भोगस्कन्ध प्रहाय महान्त वा भोगस्कन्ध प्रहायाल्प वा ज्ञातिपरिवर्त प्रहाय महान्त वा ज्ञातिपरिवर्त प्रहाय प्रव्रजति। स एव प्रव्रजितः समानो भिक्षूणा शिक्षासाजीवसमापन्नः

१— प्राणातिपातात् प्रतिविरतो भवति। छेदन-वध-बन्धन-विपदामोष ( =डकैती ) आलोप ( = जबरदस्ती )-सहसाकारात् प्रतिविरतो भवति। बीजग्रामभूतग्रामसमालम्भात् प्रतिविरतो भवति। दयमानः सर्वभूतानुकम्पी विहरति।

२—अदत्तादानात् प्रतिविरतो भवति। दत्तादायी दत्तप्रतिकाङ्क्षी अस्तेनेन शुचिभूतेनात्मना विहरति।

३—ब्रह्मचारी भवति विरतो ··· ग्राम्यधर्मात्।

४—मृषावादात्प्रतिविरतो भवति सत्यवादी सत्यसन्धः स्थाता प्रत्यायकोऽविसवादको लोकस्य।

५—पैशुन्यवाचः प्रतिविरतो भवति—( क ) इतः श्रुत्वा नामुत्राख्याता एषा भेदाय, ( ख )

---

१. मज्झिमनिकाय ( महातण्हसखयसुत्त, सङ्ख्या ३८ ) १।२५६–२५७।

२. प्रतिसञ्चिन्तति—इद बौद्धसंस्कृतप्रयोगानुकरणम्। एवमनुपश्यनादयोऽपि ज्ञातव्या।

अमुत्र वा श्रुत्वा नैषामाख्याताऽमीषा भेदाय। इति भिन्नाना वा सन्धाता, सहिताना वाऽनुप्रदाता, समग्रारामः समग्ररतः समग्रनन्दी समग्रकरणीं वाच भाषिता भवति।

६—परुषाया वाचः प्रतिविरतो भवति।

७—सभिन्नप्रलापात् प्रतिविरतो भवति कालवादी भूतवादी अर्थवादी धर्मवादी विनयवादी।

८—( क ) एकभक्तकः, रात्रोपरतः, विरतो विकालभोजनात्।

( ख ) नृत्यगीतवादित्रविशूकदर्शनात् प्रतिविरतो भवति।

( ग ) मालागन्धविलेपनधारणमण्डनविभूषणस्थानात् प्रतिविरतो भवति।

( घ ) उच्चैःशयनमहाशयनात् प्रतिविरतो भवति। [ एव भिक्षुजीवन तपःपरमित्युक्तम् ]।

९—( क ) १. जातरूपरजत २ आमकधान्य - ३ आमकमास - ४. स्त्रीकुमारिका - ५ दासीदास - ६. अजेडक - ७ कुक्कुटशूकर - ८. हस्तिगवाश्ववडवा - ९ क्षेत्रवस्तुप्रतिग्रहणात् प्रतिविरतो भवति। [ अर्थात् केवल धर्मसग्रह करोति, अर्थसग्रह न करोति ]।

( ख ) दौत्यप्रहितगमनानुयोगात् प्रतिविरतो भवति [अर्थात् राजनीतौ न लिप्तो भवति]।

( ग ) क्रयविक्रयात्, तुलाकूटकास्यकूटमानकूटात्, उत्कोटन ( =कुटिलवृत्ति )-वञ्चन-निकृति ( =छल ) साचियोगात् प्रतिविरतो भवति। [ अर्थात् वाणिज्यवृत्तिं न करोति ]।

[ एव भिक्षोः क्षत्रियवैश्यवृत्त्या जीवन प्रतिषिद्धम्। परिग्रहराहित्य च प्रतिपादितम् ]

१०—स सतुष्टो भवति। तद्यथापि वा पक्षी शकुनो येन येनैव ( = यत्र यत्रैव ) डयते सपत्रभार एव डयते। एव भिक्षुः कायपरिहारिकेण चीवरेण कुक्षिपरिहारिकेण पिण्डपातेन येन येनैव प्रक्राम्यति समादायैव प्रक्राम्यति।

सोऽनेनार्येण शीलस्कन्धेन समन्वागतोऽध्यात्ममनवद्यसुख प्रतिसवेदयते।

स चक्षुषा रूपम्, श्रोत्रेण शब्दम्, घ्राणेन गन्धम्, जिह्वया रसम्, कायेन स्प्रष्टव्यम्, मनसा धर्म विज्ञाय न निमित्तग्राही भवति, नानुव्यञ्जनग्राही[1]। सोऽभिक्रान्ते प्रतिक्रान्ते, आलो-

---

१. एतेन इन्द्रियसवर प्रोक्त।

क्रिते विलोकिते, समिञ्जिते प्रसारिते, अशिते पीते खादिते स्वदिते, उच्चारस्रावकर्मणि, गते स्थिते निषण्णे सुप्ते जागरिते भाषिते तूष्णींभावे च सम्प्रजानकारी भवति[1]। विविक्त शयनासन भजति, अरण्य वृक्षमूल पर्वत कन्दरा गिरिगुहा श्मशान वनप्रस्थमभ्यवकाश पलालपुञ्जम्[2]। स पश्चाद्भक्त पिण्डपातप्रतिक्रान्तो निषीदति पर्यङ्कमाभुज्य, ऋजु काय प्रणिधाय, परिमुखीं स्मृतिमुपस्थाप्य[3]। सोऽभिध्यायाः, व्यापाददोषात्, स्त्यानमिद्धात्, औद्धत्यकौकृत्यात्, कुशलेषु धर्मेषु विचिकित्सायाश्च चित्त परिशोधयति[4]। इमानि पञ्च नीवरणानि प्रहाय विविक्त कामैरकुशलैश्च धर्मैः 'ध्यानमुपसपद्य विहरति[5]। स रूपे शब्दे गन्धे रसे स्प्रष्टव्ये धर्मे प्रियरूपे न सरज्यति, अप्रियरूपे न व्यापद्यते। उपस्थितकायस्मृतिश्च विहरत्यप्रमाणचेताः। ता च चेतोविमुक्ति प्रज्ञाविमुक्ति यथाभूता प्रजानाति। यथास्य ते पापका अकुशला धर्मा अपरिशेषा निरुध्यन्ते। स एवमनुरोधविरोधपरिहीणो या काचिद् वेदना वेदयते सुखा वा, दुःखा वा, अदुःखासुखा वा, स ता वेदना नाभिनन्दति नाभिवदति नाध्यवस्य तिष्ठति। तस्य ता वेदनामनभिनन्दतोऽनभिवदतोऽनध्यवस्य तिष्ठतो या वेदनासु नन्दी सा निरुध्यते। तस्य नन्दीनिरोधादुपादाननिरोध, उपादाननिरोदाद् भवनिरोध., भवनिरोधाज्जातिनिरोधः, जातिनिरोधाच्छोकपरिदेवदुःखदौर्मनस्योपायासा निरुध्यन्ते। एव केवलस्य दुःखस्कन्धस्य निरोधो भवति।"

## ११. शरणम्

बहु वै शरण यान्ति पर्वताश्च वनानि च।
आरामवृक्षचैत्यानि मनुष्या भयतर्जिताः॥
नैतत्खलु शरण क्षेम नैतच्छरणमुत्तमम्।
नैतच्छरणमागम्य सर्वदुःखात् प्रमुच्यते॥
यश्च बुद्ध च धर्म च सङ्घ च शरण गतः।
चत्वारि चार्यसत्यानि सम्यक् पश्यति प्रज्ञया॥

---

१ एतेन स्मृतिसप्रजन्य प्रोक्त।
२ एतेन विवेक ( एकान्तवास ) प्रोक्त।
३ ए तेन योगाभ्यासस्य काल, आसन चोपदिष्टे।
४. क्रमेण पञ्च नीवरणप्रहाणोपदेश।
५ ध्यानप्रपञ्चस्तु नात्र निदिश्यते बहु विस्तृतत्वात्।

## स्थविरधर्मपर्यायः

दुःख दुःखसमुत्पाद दुःखस्य च अतिक्रमम् ।
आर्यं चाष्टाङ्गिक मार्गं दुःखोपशमगामिनम् ॥
एतत्खलु शरण क्षेममेतच्छरणमुत्तमम् ।
एतच्छरणमागम्य सर्वदुःखात् प्रमुच्यते ॥ [ धम्मपद १८८–१९२ ]

यो धर्मं पश्यति स मा ( =बुद्ध ) पश्यति[1] । यः प्रतीत्यसमुत्पाद पश्यति स धर्मं पश्यति[2] । तथा च "धर्मस्य शास्ता" इति कृत्वा बुद्धस्य पूजा न तु बुद्धस्ता पूजा गृह्णातीति कृत्वा तस्य पूजा । तथा चाह शारिपुत्रः—

पूज्यमाना असमसमाः सदेवमानुषैश्च ते ।
नासादयन्ति सत्कार बुद्धानामेष धर्मता ॥

बोधिवृक्षमूल एव तथागतस्य सादना ( =परिग्रहभावः ) प्रहीणा । किं पुनः परिनिर्वृतस्य[3] । यथा मनुष्या उष्णाभितप्ताः परिदाहपीडितास्तालवृन्तेन वात निर्वर्त्योष्णा निर्वापयन्ति परिदाहमुपशमयन्ति, एवमेव देवमनुष्यास्तथागतस्य परिनिर्वृतस्य [ पूजादिकम् ] अनासाद्यमानस्यैव धातु च ज्ञानरत्न च पूजयित्वा कुशल निर्वर्त्य तेन कुशलेन त्रिविधाग्नि सतापपरिदाह निर्वापयन्ति, उपशमयन्ति[4] । एव परिनिर्वृतस्य तथागतस्य पूजादिक चित्तप्रसादनहेतुकत्वादेव सफल भवति । बुद्धपरिनिर्वाणानन्तर बुद्धस्य प्रतिनिधिभूतो धर्म एव । तथा च भगवानेवाह—"यो मया धर्मश्च विनयश्च देशितः प्रज्ञप्तः स ममात्यये शास्ता—इति[5] ।

धर्मस्य प्रतिनिधिभूतस्तत्त्व प्रतीत्यसमुत्पादः । स च—"अस्मिन् सतीदं भवति । अस्योत्पादादिदमुत्पद्यते । अस्मिन्नसतीद न भवति । अस्य निरोधादिद निरुध्यते[6] ।" इत्येव रूपः । इदमेवाश्वजिद्गाथायामप्युक्तम्—

ये धर्मा हेतुप्रभवा हेतु तेषा तथागतो ह्यवदत् ।
तेषा च यो निरोध एववादी महाश्रमणः ॥[7]

तथा च प्रतीत्यसमुत्पन्ना धर्मा एव मूलतत्त्वानि । येषा द्वादशाङ्गान्युक्तपूर्वाणि । तेषा प्रवृत्तिः ससारः । निवृत्तिर्निर्वाणम् ।

---

१ सयुत्तनिकाय, १।१२० । २ मज्झिमनिकाय, १।१९१ । ३ मिलिन्दपञ्ह, पृ० ९५ ।
४ तत्रैव, पृ० ९८ । ५ तत्रैव, पृ० ९९ । ६ मज्झिमनिकाय, ३।६३ ।
७. विनयपिटक, महावग्ग, पृ० ४० ।

सचस्तु बुद्धधर्मस्य आगम ( =ग्रन्थ ) रूपेण प्रवर्तकः । अधिगम ( =तत्त्वसाक्षात्कार ) रूपेण च साक्षीति पूजार्हः । तस्य जीवन सर्वथा निवृत्तिरूपः । तथा चाहुः—

सस्तवतो भय जात निकेताज्जायते रजः ।
अनिकेतमसस्तवमेतद् वै मुनिदर्शनम् ॥ [१]

यश्च नाधिगमाय न चागमप्रवर्तनाय रतः स च नादर्शभूतः । न चागमाधिगमाभ्या हीनाना तथागतश्रावकाणा कार्यान्तरैः किमपि धर्मप्रयोजन सिद्ध्यति ।

मार्गस्तु अष्टभिरङ्गैर्विभक्तः । स सक्षेपेण त्रिभिरङ्गैर्विभक्तु शक्यम् । तथा हि—सम्यग्दृष्टिः सम्यक्संकल्पश्चेति प्रथमद्वितीयाङ्गे प्रज्ञायामन्तर्भवतः । सम्यग्वाक्, सम्यक्कर्म, सम्यगाजीवश्चेति तृतीयचतुर्थपञ्चमाङ्गानि शीलेऽन्तर्भवन्ति । सम्यग्व्यायामः, सम्यक्स्मृतिः, सम्यक्समाधिश्चेति षष्ठसप्तमाष्टमाङ्गानि समाधावन्तर्भवन्ति । इमे शीलसमाधिप्रज्ञारूपा धर्मस्कन्धाः । तत्र शील बहुतर व्याकृतम् । समाधिर्न तत्त्वचर्चायामुपयोगी । प्रतीत्यसमुत्पादेन, अनित्यदुःखानात्मदर्शनैश्च प्रज्ञैवात्र निरूपिता, तस्या एव तत्त्वचर्चाया प्राधान्यात् । अष्टाङ्गमार्गस्य नामान्तर मध्यमा प्रतिपदिति ।

शीलसमाधिप्रज्ञावतो बुद्धपुत्रस्य स्त्रीभिः कथ प्रतिपत्तव्यम् ? अत्रास्त्यानन्दतथागतयोः सवादः । तथा हि—

( आनन्दः )—कथ वय भदन्त मातृग्रामे प्रतिपद्यामहे ।
( तथागतः )—अदर्शनमानन्द !
( आनन्दः )—दर्शने सति कथ प्रतिपत्तव्यम् ।
( तथागतः )—अनालापः ।
( आनन्दः )—आलपता पुनः कथ प्रतिपत्तव्यम् ।
( तथागतः )—स्मृतिः उपस्थापयितव्या [२] ।

एव कामार्थविमुखेन बुद्धपुत्रेण खड्गिविषाणवत् सर्वथा निसगताप्रवणेन भवितव्यम् । तथा चात्र गाथाः—

---

१ सुत्तनिपात, मुनिसुत्त, मिलिन्दपञ्ह, पृ० २११ ।

२. दीघनिकाय, महापरिनिब्बानसुत्त ।

## स्थविरधर्मपर्यायः

संसर्गजातस्य भवन्ति स्नेहाः स्नेहान्वय जायते दुःखमेतत् ।
आदीनव स्नेहज प्रेक्षमाण एकश्चरेत् खड्गविषाणकल्पः ॥
मित्रे सुहृद्ये अनुकम्पमानो हापयत्यर्थं प्रतिबद्धचित्तः ।
एतद्भय सस्तवे प्रेक्षमाण एकश्चरेत् खड्गविषाणकल्पः ॥
पुत्र च दारान् पितर च मातर धनानि धान्यानि च बान्धवाश्च ।
हित्वाथ कामान् यथावधिकाश्च एकश्चरेत् खड्गविषाणकल्पः ॥
मैत्रीमुपेक्षा करुणा विमुक्तिमासेवमानो मुदिता च काले ।
सर्वेण लोकेन अविरुध्यमान एकश्चरेत् खड्गविषाणकल्पः ॥
भजन्ति सेवन्ते च कारणार्था निष्कारणा दुर्लभा अद्य मित्रा[1] ।
आत्मार्थप्रज्ञा अशुचयो मनुष्या एकश्चरेत् खड्गविषाणकल्पः[2] ॥
आत्मार्थं हि परार्थेन बहुनापि न हापयेत् ।
आत्मार्थं समभिज्ञाय सदर्थप्रसितो भवेत्[3] ॥

बुद्धपुत्रा भवन्ति—"आत्मशरणा अनन्यशरणा धर्मशरणा अनन्यशरणाः"[4] । न तैर्द्वावन्तौ सेवितव्यौ । कतमौ द्वौ ? "यश्चाय कामसुखल्लिकानुयोगः, यश्चायमात्मक्लमथानुयोग.[5] ।"

## समीक्षणम्

ससारविमुखस्य मुक्तिनिर्वाणाद्यभिधानस्यात्मार्थस्यानुधाविनो बुद्धपुत्रस्य निःसङ्गता लौकिकार्थपरायणाना मनसि न कथमपि प्रीतिं जनयितुमलम् । अत एव केचन लौकिकार्थपरायणास्तत्त्वचिन्तका आहुः—"अर्हत्स्वरूपस्यादर्शस्य विगतस्नेहता वीतरागता च नाश्वासं जनयतः । न हि जगदिद मठीयितु शक्यम् । न च सर्वेषा स्त्रीबालवयस्काना विविक्तायतनेषु प्रवेशो भवितुमर्हत्यविनाभूतः । न वा मानवजीवनस्थिराशस्य केवलः प्रतिनिधिभूतो निर्वेदः । न च जगतो द्वन्द्वेषु माध्यस्थ्य मुनिवृत्तिः प्रत्युत कर्माकुलजीवनसमारम्भेषु प्रशम-

---

१ मित्रा=मित्राणि, वैदिकरूपमिदम् । २ सुत्तनिपातखग्गविसाणसुत्त ।

३ धम्मपद, १६६ । ४ महापरिनिब्बानसुत्त । ५ धम्मचक्कपवत्तनसुत्त ।

वृत्तिः सा । इति तुमुलनादिनो जगतः कोलाहले यथात्मा न विचलितः स्यात्तथास्माभि-रध्यात्मप्रवणैर्भवितव्यम् ।[1]" किञ्च—"अर्हत्त्वादर्शः परिपूर्णमात्मानुविधायी परेषां कृते निष्प्रयोजनः कारुणिकस्य लोकवत्सलस्य तथागतस्य न सत्यानुवर्ती[2] । तथापि अर्हत्त्वपरमो हीनयान निकायगणः "समधिकनिष्ठया तथागतस्यैतिहासिकपरम्पराप्रतिपादको भवति[3] ।" यश्च समधिकनिष्ठया तथागतस्यैतिहासिकपरम्परानिरूपको भवति स भवितव्यस्तस्य भूयसानुवर्ती । यो हि नेदिष्ठं तथागतं स्पृशति स एव तथागतं प्रति सत्यो भवितव्यः । विरागप्रवणो हि तथागतधर्म इति ये नाभ्युपगच्छन्ति, विरागप्रवणता येषां समाश्वासनाय न प्रभवति, येषां मनसि युद्धप्रवणता विद्यते, ये स्वात्मानं विजयिनं परान् विजितान् द्रष्टुमिच्छन्ति, द्वन्द्वारमतैव परं सुखमिति भवति येषां संस्कारस्तेषां लौकिकार्थपरायणानां कृते विरागप्रवणो धर्मो न विद्यते । तत एव द्विविधे श्रुतिस्मृती । अन्ये कामार्थपरायणानां कृते, अपरे धर्ममोक्षपरायणानां कृते । अन्यो हि व्यवहारार्थः, अन्यो हि परमार्थः । तथा चाह तथागतः—

> अन्या हि लाभोपनिषद् अन्या निर्वाणगामिनी ।
> एवमेतदभिज्ञाय भिक्षुर्बुद्धस्य श्रावकः ।
> सत्कारं नाभिनन्देत विवेकमनुबृंहयेत् ॥ [ धम्मपद, ७५ ]

अपरैरप्युक्तम्—

> अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते ॥ [ मनु०, २।१३ ]

तस्माल्लौकिकार्थदृष्ट्या धर्मस्य समीक्षा नैव प्रवर्तयितव्या । अथवा लौकिकार्थमेव प्रधानं मत्वा धर्मः समीक्षणीयः । तथा च कुर्वन्तु नाम नैकविधमभ्याख्यानं विरागप्रवणस्य धर्मस्य । न तत्प्रतिपक्षे किमपि ब्रूमः । यस्मात् सकललोकशान्तये विरागप्रवणं धर्मं विहाय नास्ति किञ्चिदुपायान्तरं तस्माद् विविधद्वन्द्वपरिश्रान्तस्य लोकस्य कृते स आवश्यक एव । न चैव सर्वलोकः श्रमणविहारो भविष्यतीति मन्तव्यम् । अथवा भवतु सर्वलोकः श्रमणविहारः का तेन क्षतिः । तथा सत्यपि लोकयात्रार्थं यावती कर्मप्रवृत्तिरनिवार्या तावती भविष्यत्येव ।

---

१ डा० एस० राधाकृष्णन् इण्डियन फिलॉसफी, भा० १, पृ० ५८७–५८८ ।
२ तत्रैव, पृ० ५८६ । ३ तत्रैव, पृ० ५८९ ।

## स्थविरधर्मपर्यायः

आगम एव प्रवृत्तिपरायणाना महामङ्गल दिशति—

मातापित्रोरुपस्थान पुत्रदारस्य सग्रहः ।
अनाकुलाश्च कर्मान्ता एतन्मङ्गलमुत्तम् ॥
क्षान्तिश्च सौवचस्यता श्रमणाना च दर्शनम् ।
कालेन धर्मसाकथ्या एतन्मङ्गलमुत्तमम् ॥

[ खुद्दकपाठ, मङ्गलसुत्त ]

स एव निवृत्तिपरायणानुद्दिश्याह—

न ह्यात्महेतोर्न परस्य हेतोर्न पुत्रमिच्छेन्न धन न राष्ट्रम् ।
नेच्छेदधर्मेण समृद्धिमात्मनः स शीलवान् प्रज्ञावान् धार्मिको भवेत् ॥

[ धम्मपद, ८४ ]

तस्माद् विरागो नास्ति निष्ठुरता । अन्यथा हन्तरि च, अर्हति च भेदो न स्यात् । सर्वथैव वीतरागोऽप्यर्हन् "बहुजनहिताय" चरत्येव ॥

---

# अत्र ते कीर्तयिष्यामि वर्षं भारत भारतम्

डा० वासुदेवशरणोऽग्रवाल, हिन्दूविश्वविद्यालयः, काशी ।

[ षष्ठवर्षतृतीयचतुर्थाङ्कतोऽनुवृत्तम् ]

पञ्चनदप्रदेशानन्तरं भारतस्यातिविश्रुतो मध्यप्रदेशनामा भूभागोऽवभासते । [1]सरस्वतीदृषद्वत्योरन्तरालवर्ती ब्रह्मावर्तप्रदेशो मनूक्तदिशा परमपावनतया मन्यते स्म । तदनन्तरं शूरसेन मत्स्य-कुरुपञ्चालजनपदानामेकीभूतं क्षेत्रं '[2]ब्रह्मर्षिदेश' इति संज्ञामलभत । कुरुपञ्चालसंबन्धिन इतिहासस्यानेका महत्त्वशालिन्यो घटना अस्यामेव भूमौ समघटन्त । ब्रह्मर्षिदेशस्येमे सीमानः क्रमशो महत्त्वपूर्णं कोसलजनपदं स्वस्मिन्नुपसंहरमाणा प्रयागपर्यन्तं विस्तृता अभवन् । ततोऽयं भूभागो [3]मध्यदेश इति व्यपदेशं लेभे । विन्ध्याचलहिमाचलपारियात्राणां पूर्वपश्चिमसमुद्रयोश्च मध्यवर्ती सम्पूर्णो भूखण्ड आर्यावर्तनाम्ना व्यवहारं प्रपेदे । अस्यामवस्थायां सिन्धु-सौवीर-कच्छानर्तप्रभृतिरङ्ग-बङ्ग-कामरूप-कलिङ्गपर्यन्ता समग्रा पृथिवी आर्यसन्निवेशेऽन्तर्गता समजायत । [4]मनुना महता कण्ठेनार्यावर्तस्यैव परिभाषा निश्चिता । शक-यवनानामाक्रमणात् साम्राज्यसंस्थापनाच्च प्रागार्यावर्तस्य नूनमेतावान् विस्तार आसीत् ।

तदेदृशी मान्यताऽऽसीत् यत्पुण्यभूमिरिति ख्यापिते क्षेत्र एव तीर्थाः कल्प्यन्ते । मध्ये राजस्थानं सपुष्करं शाकम्भरीस्थानं विशिष्टतीर्थत्वेन कल्पितम् । राजस्थानक्षेत्रस्य दक्षिणस्यां दिशि अर्बुदाचलो नाम पर्वतो भारतीयानामतिचिरन्तनं तीर्थस्थानमासीत् । अत्रैव गिरिशृङ्गे ऋषिवशिष्ठस्याश्रममासीत् । अस्मिन् स्थाने या प्राचीना मातृदेवी, या च नागदेवता,

---

१ सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥ [ मनु० २।१७ ] ।

२ कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः । एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरः ॥ [ मनु० २।१९ ] ।

३ हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥ [ मनु० २।२१ ] ।

४ आ समुद्रात्तु वै पूर्वादा समुद्रात्तु पश्चिमात् । तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः ॥ [ मनु० २।२२ ] ।

उभयेषामत्र पूजाचत्वर बभूव । अस्मिन् स्थलेऽम्बादेव्या अर्बुदनागस्य च प्रासादद्वयं गुप्तकालात्प्रागेव स्थापितमासीत् । गुप्तकालपर्यन्त तयोरस्तित्वमक्षुण्ण वर्तते स्म । अस्माकमितिहासे यशस्यतमः श्रीवसिष्ठस्य ऋषेर्महान् यज्ञोऽर्बुदशिखर एव तेने, यतः क्षत्रियाणा षट्त्रिंशद्राजकुलानि प्रादुर्भूतानि । इद तथ्यमितिहासविद्भिरेव व्याख्यायते यच्छकहूणपह्लवप्रभृतीना देशान्तरादागताना वृषलानामेतद्देशीयसामाजिकव्यवस्थायामन्तर्भावोऽर्बुदाचलसपादितवसिष्ठाध्वरक्रमेणैव सुनिष्ठितोऽभूत् । तदनन्तर तेषा क्षत्रबन्धूनामग्निकुलत्वेन गोत्राख्या प्रथिता सञ्जाता ।

प्रतीच्या दिशि सौवीरजनपदे यद् हिंगुलातीर्थम् , दक्षिणस्या च सिन्धुसागरसङ्गमः, ते उभे आर्यावर्तस्य पुण्यक्षेत्रस्य समुद्रपर्यन्तविस्तारितसीमान सूचयतः । महाभारतीयारण्यकपर्वान्तर्गततीर्थयात्रापर्वणि सुराष्ट्र ( दक्षिण काठियावाड़ ) प्रदेशस्य उज्जयन्तेत्यपरनाम्नो रैवतकपर्वतस्य ( वर्तमान गिरनार ), प्रभासेत्यपरनाम दधतः सोमनाथतीर्थस्य चोल्लेखो विद्यते । द्वारावती ( द्वारका ) चानर्तदेशस्य राजधान्यासीत् । तत्रैव श्रीकृष्णस्य नेतृत्वे वृष्णयो मथुराक्षेत्रात् पश्चिमस्या दिशि प्रवास कृत्वा स्वराज्य स्थापितवन्तः ।

पूर्वस्या दिश्यार्यावर्तस्य सीमानः पूर्वसमुद्रपर्यन्त विस्तारिताः, तस्मात्सूच्यते यद्गङ्गासागरसगमावधिक क्षेत्रमार्यक्षेत्र मन्यते । अत एवैकाधिकपुण्यतीर्थाना कल्पना तत्र कृता । कामरूपस्यासमप्रदेशस्य वा पूर्वदिग्भागे ब्रह्मपुत्रनदस्य लोहित्यनदस्य च सगमे स्थितस्य सवेद्यातीर्थस्य ( आधुनिक सदिया ) उल्लेखस्तीर्थयात्रापर्वण्युपलभ्यते । गोहाटीनगरे स्थित. कामाख्यातीर्थोऽप्यतिप्राचीनः । अत्र किराताना शबराणा च या मातृपूजा, साऽधुनापि प्रचलति । अत एव कालिकापुराणेऽसौ कैरातधर्म इत्यभिधीयते ।

भूपरिचयस्याङ्गभूतानि नदीनामानि विशेषतो महत्त्वपूर्णानि भवन्ति, यतस्तानि सर्वतोऽधिकस्थास्नूनि भवन्ति । यदान्यविधानि नामानि परिवर्तन्ते तदापि नदीनामानि नो विपरिवर्तन्ते । गङ्गा-यमुना-कालिन्दी-रामगङ्गा( रथस्था ) - गोमती तमसा-वेदश्रुतिः( विसुई )-स्यन्दिका( सई ) - इरावती( राप्ती ) - गण्डकी( नारायणी ) - कौशिकी( कोसी ) - अरुणा-ताम्रा-करतोया-त्रिस्रोतसा-आत्रेयी-ब्रह्मपुत्र-लौहित्य-सूरमस( सूरमा ) - पद्माप्रभृतीनि नदी नामानि शुद्धसंस्कृतभाषायाः परम्परा प्रकटयन्ति, धर्मभाषात्वेन यस्या विस्तारो भारतस्य पूर्वसीमान यावदभूत् । एतद्व्यतिरिक्ता विन्ध्यपारियात्रपर्वतप्रान्ताभ्यामागन्तुका नद्योऽपि तामेव

परम्परा प्रत्याययन्ति । यथा—पर्णाशा ( बनास ), चर्मण्वती ( चम्बल ), कुमारी ( कुवाँरी ), वेत्रवती ( बेतवा ), दशार्ण ( धसान ), तमसा ( टोंस ), शोण ( हिरण्यबाहु ), शोणस्य शाखानदी ज्योतीरथा ( जोहिला ) च । अन्या अप्यनेका लघुनद्यः प्रदेशेऽस्मिन् वहन्ति । तीर्थयात्रापर्वणि गङ्गाद्रोणीषु प्रवहन्तीना नदीना सख्या ५०० पञ्चशती प्रत्यपादि, यासा जलान्याह्लन्य गङ्गा समुद्र प्रविशति[1] । गङ्गासागरसगमतीर्थे स्नानस्य तावदेव फल यावदुक्त-निखिलनदीस्नानस्य सभवति । गुप्तसाम्राज्यसन्निकटसमयरचिते पञ्चतन्त्रे गङ्गोद्गताना सरिता संख्या ६०० नवशती[2] निरदेशि । इय सख्या प्राचीनभारतीयभूगोलविदा भौगोलिकतत्त्वसूक्ष्मेक्षिका परिचाययति ।

पुराणान्तर्वर्तिभुवनकोषसज्ञकप्रकरणे भारतीयाना नदीना जनपदाना च सूची समुपलभ्यते । विशेषतस्तस्या अध्ययनमावश्यक समेषामपि । तदनुसारमस्य देशस्येमे विभागाः सन्ति—मध्यदेशः, उदीच्यः, प्राच्यः, दक्षिणापथ , अपरान्तः, विन्ध्यपृष्ठम्, पर्वताश्रयी च । इमे विभागाः सर्वथा मौलिका व्यावहारिकाश्च विज्ञायन्ते । एतदनुसार मध्यदेशप्राच्यदेशयोर्जनपदा इत्थ सख्यायन्ते—कुरुपञ्चालः, साल्वः ( उत्तर राजस्थानम् ), जाङ्गल ( उत्तरपूर्व राजस्थानम् ), शूरसेनः, मत्स्यः, काशी, कोसलः, मगधश्च । एतदन्येषामपि लघुजनपदाना नामानि सन्ति, येषामस्या सूच्या निर्देशो नास्ति । यथा वत्सनाम्नो ( कौशाम्बीराजधानीकस्य ) जनपदस्य दक्षिणपूर्वस्या दिशि करूषजनपदः, अङ्गाः ( चम्पाख्यो भागलपुराख्यो वा प्रदेश ), बङ्गाः, मुद्गाः ( मुद्गगिरिनामा मुङ्गेरनामा वा ), अन्तगिरिबहिर्गिरिनामानौ जनपदौ च ।

हिमालयस्योच्चशिखरघटितभागः (१८०००–२०००० फुट ) अन्तर्गिरिनाम्ना महाहिमवन्नाम्ना वा कथ्यते । यत्र बदरी केदार-नन्दादेवी-त्रिशूल-धवलगिरि काञ्चनजङ्घा गौरीशङ्कर-

---

१ स सागर समासाद्य गङ्गाया सगमे नृप ।
नदीशताना पञ्चाना मध्ये चक्रे समाप्लवम् ॥
[ महा० वन० ११४।२ पूना स० ]

२ भो कान्त ' यत्र जाह्नवा नवनदीशतानि गृहीत्वा नित्यमेव प्रविशति तथा सिन्धुश्च । तत्कथ त्वमष्टादश-नदीशतैः पूर्यमाण त समुद्र विप्रुषवाहिन्या चञ्च्वा शोषयिष्यसि । [ पञ्चतन्त्र, १।३५८ ] ।

प्रभृतीनि शृङ्गाणि सन्ति। हिमालयस्य पञ्चसहस्रतो दशसहस्र'फुट'प्रमाणकोच्चशिखरप्रदेशो बहिर्गिरिनाम्ना (पालीभाषाया चुल्लहिमवन्तनाम्ना) व्यपदिश्यते स्म। तत्र धर्मशाला-शिमला - मसूरी - नैनीताल - रानीखेतप्रभृतिस्थानविशिष्टो हिमालयभागः समिलितस्तिष्ठति। एतदधस्तनसमतलप्रदेशे विस्तृतो हिमगिरेस्तृतीयभागोऽद्यत्वे भाभरतराईप्रदेश उच्यते। हरद्वारतो देहरादूनपर्यन्तयात्राया क्रमश उच्छ्रितभाव प्राप्नुवन्तीयमेव भूमिर्हिमालयस्य तृतीयोपत्यका वर्तते, या प्राग् 'उपगिरि' इत्यभिधीयते स्म। पाणिनिना—'गिरेश्च सेनकस्य' [५।४।११२] इति सूत्रेऽन्तर्गिरिशब्द उपगिरिशब्दश्च व्युत्पादितौ। सभापर्वणि [२७।३] अर्जुनस्य दिग्विजययात्रा वर्णयता भगवता व्यासेन अन्तर्गिरि-बहिर्गिरि-उपगिरिवर्तिदेशाना विजयस्तेन कृत इति वर्णितम्।

हिमालयस्य भूगोलवर्णनप्रसङ्ग इदमवगन्तव्य यद् भारतीयभौगोलिकविद्वद्भिरत्यन्त-सूक्ष्मेक्षिकया हिमगिरेः शृङ्गाणि, निर्झराः, सरोवराः, नद्यश्च सर्वेक्षिताः। स्थूलरूपेण हिमालयस्य खण्डद्वय विद्यते—बदरीकेदारखण्ड कैलाशमानसखण्ड च। एतदुभय तीर्थ-यात्राप्रकरणेऽसकृत्परिगणितम्। कैलासमानससरोवराभिमुखगामी मार्गः क्रौञ्चरन्ध्रेण गच्छ-न्नासीत्। तदेव क्रौञ्चरन्ध्र कालिदासेन मेघदूते—''हसद्वार भृगुपतियशोवर्त्म यत्क्रौञ्चरन्ध्रम्' [१।५७] इत्थ वर्णितम्। हिमवतोऽद्रितटादनन्तर कैलासाभिमुखगमनार्थमिद कञ्चन पर्व-तीय द्वार सभवति, येन द्वारेण भारतीयसमतलप्रदेशेभ्य उड्डीय गगनगामिनो हसाः प्रतिवर्ष वर्षारम्भे मानससरोवराभिमुख प्रयान्ति, शरदृतोरारम्भे पुनस्ततोऽन्तर्वेद्यभिमुख प्रतिनिवर्तन्ते च। अस्माभिरनुमीयते यद् अल्मोड़ातः कैलासगामिमार्गे यो 'लिपूलेख दर्रा' इति वर्तते, यमतिक्रम्य प्रथम मान्धातार पर्वत पश्चाच्च कैलास गच्छन्ति, तदेव हसद्वार क्रौञ्चरन्ध्र वा सभवति। मानससरोवर एव सस्कृतसाहित्येऽच्छोदसरः, पालीसाहित्येऽनवतप्त (अनवतत्त) सरोवरश्चो-च्यते। सस्कृतसाहित्येऽस्य पुण्यसलिलराशेर्भूयान् महिमा वर्तते। आधुनिकदृष्ट्यापि स समीचीन. प्रतीयते, यतो मानससरोवरसलिलेभ्य एव शतद्रुनाम्नो नदस्य ब्रह्मपुत्रनाम्नो महा नदस्य चोद्गमः सजायते। तस्य सरोवरस्यान्तिके तद्विस्तारदेशीयो राक्षसतालनामा सरोवरो विद्यते, यदीय जल मानससरोवरसबन्धिविमलजलापेक्षया हीनगुणक वर्तते। शिवमारा धयितु कैलासखण्डमधिवसता लङ्काधिपतिना रावणेनात्रैव तपस्तप्तमिति प्रसिद्धम्। रजताद्रिः कैलासो भारतवर्षस्य सर्वथा पवित्रो देशः, यत्र भवानीपतिर्भगवान् शिवः स्वयमेव प्रतिवसतीति

किल । कालिदासेनातिशोभनमुक्तं यत्कैलाशः—"राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः" [पूर्वमे० ५८] इति । कैलाशस्य यानि विविधानि रूपाणि कल्पितानि तेषामेवेदमेकतम रूपम् । भारतीयेतिहासस्यास्मिन्नेव स्वर्णयुगे प्रजाभिरत्र सर्वतो महानट्टहासः कृत आसीत्, यदा "ऋद्धं हि राज्यं पदमैन्द्रमाहु" [रघु० २।५०] इत्थं पृथिव्याः समृद्धिमद्राज्यं स्वर्गेणोपमीयते स्म, यदा च कविना—"दिवः कान्तिमत्खण्डमेकम्" [पूर्वमे० ३०] एवंरूपेण भारतीय नगराणामृद्धिः सौख्यं च कल्पितम् । कैलासस्यैव हेमकूटेत्यपरं नामासीत् । जैनग्रन्थेष्वयमेवाष्टापदनाम्ना व्यपदिश्यते । कैलासादागन्तुस्तिब्बतीयसुवर्णस्यैवाष्टापदेति सञ्ज्ञा सञ्जाता । भारतीयभूगोलस्य सर्वतोऽद्भुतमिदं तत्त्वं प्रतीयते यदस्य देशस्योत्तरसीमायां शिवः कैलासमधिवसति, दक्षिणसीमायां च कन्याकुमारी पार्वती समुद्रतटमुपवसति, शिवप्राप्तये चाहर्निशं ध्यानमग्ना तपस्यति । विवाहात्प्रागेकस्यां दिशि शिवः समाधौ लीनः, अपरस्यां च पार्वती शिवसमागमेच्छया तपसि निरताऽऽसीत् । कस्यापि देशस्य भूगोले ईदृशी रहस्यमयी कल्पना नोपलभ्यते । उत्तरतो दक्षिणाभिमुखं दक्षिणतश्चोत्तराभिमुखं धावमाना भावधारा प्राणधारा चास्य देशस्य समग्रतामेकनिष्ठतां वा विदधाति । यावदुत्तरे हिमवान् गिरिः, यावत् समुद्रश्च दक्षिणे, तावत् पार्वतीपरमेश्वरयोरेकत्र सम्पृक्ताऽर्द्धनारीश्वरमूर्तिरस्य देशस्य सुघटितमैक्यं स्थापयिष्यति ।

हिमालयस्य बदरीकेदारखण्डे गङ्गायमुनयोर्महिमपूर्णा धारा प्रवहन्ति । यमुना यामुन पर्वतात् प्रभवति । यामुनपर्वतस्यैवैकस्य शृङ्गस्य 'बन्दरपूँछ' इति नूतनी सञ्ज्ञा । भारते तीर्थयात्रापर्वण्युल्लिखितं यदत्रैव मारुतिर्हनूमान् रामावतारस्य पश्चादत्रागत्य वसतिं चकार, द्वापरयुगकाले च मध्यमपाण्डवो भीमसेनोऽत्रैव तं मिलितवान् । अस्मद्देशे पुरातनविद्यानां महत्त्वावेका निदानविद्यानाम नामकरणी विद्याऽऽसीत् । तदनुसारं किल स्वदेशसम्बन्धिमहत्त्वपूर्णकथानां स्थायित्वसम्पादविषया तासां सम्बन्धः केनापि पर्वतशिखरेण नदीनाम्ना नक्षत्रनाम्ना वा विधीयमान आसीत्, येन लोकेषु यावदिमानि भौतिकानि प्रतीकानि तिष्ठेरंस्तावत्कथा अपि प्रचलन्त्विवति ।

हिमालयस्था तात्त्विकी तीर्थमाला तु बदरीकेदारखण्डे गङ्गायाः प्रस्रवणक्षेत्रमेव । प्रतीच्यां भागीरथीमारभ्य प्राच्यामलखनन्दापर्यन्तमयं प्रदेशः प्रसृतोऽस्ति । गङ्गोत्री, गोमुखः, त्रियुगीनारायणः, केदारनाथः, सत्यपथः ( सतोपथ ), बदरीनाथः, द्रोणगिरिः,

नन्दादेवी, त्रिशूलश्चास्मिन्नेव प्रदेशे तिष्ठन्ति । जाह्नवी, भागीरथी, मन्दाकिनी, अलखनन्दा चेमानि चत्वारि हिमालयात्पृथक् पृथग्वहन्तीना धाराणा नामानि सन्ति, यद्यपि सस्कृतसाहित्ये इमे प्राय गङ्गाया. पर्यायरूपेणायान्ति । हिमालयस्य गङ्गाप्रस्रवणक्षेत्रे भौगोलिकगवेषणा भारतीयभौगोलिकविदुषा महान् दिग्विजयो मन्तव्यः । गङ्गा भारतस्य सर्वतः पुण्यतमा नदी विद्यते । ससारस्य क्वचिदन्यस्मिन् प्रदेशे भौगोलिकनामस्वीदृशी कोमलकान्तपदावलि-नोपलभ्यते, यादृशी सगतयोर्गङ्गाहिमवतोः प्रदेशोत्सङ्गे । एकेनाङ्गलविदुषा व्यलेखि यदिमानि नामानि भारतीयभूगोलशास्त्रिणा काव्यकलाया अद्भुतानि प्रतीकानि विलसन्ति । अर्वाचीन-भूगोलवेत्तारस्तु न केवलममून् प्रशसन्ति, किन्तु स्पृहयन्त्यपि । विष्णुगङ्गा-विरहिगङ्गा-वसुगङ्गा-नीरगङ्गाप्रभृतयः शाखानद्योऽलखनन्दाया मिलन्ति । गङ्गाया उपरितनधाराणा समेलनेन हिमालये पञ्च प्रयागा विलसन्ति । बदरीनाथपार्श्वादवतीर्णायाः सरस्वतीत्यपरनामधेयाया विष्णु-गङ्गाया , द्रोणगिरेः पश्चिमप्रान्तादवतीर्णाया धवलगङ्गायाश्च जोशीमठसमीपे य. सङ्गम' स विष्णुप्रयागनाम्नाऽभिधीयते । विष्णुप्रयागानन्तर वहन्त्यामलखनन्दाया नन्दाकनापर्वतादवती-र्णाया नन्दाकिन्याः सङ्गमो नन्दप्रयाग उच्यते । नन्दाकोटत्रिशूलशिखरयोः सलिलग्राहिण्याः पिण्डारगङ्गाया अलखनन्दायाश्च सङ्गम' कर्णप्रयागः कथ्यते । केदारनाथपार्श्वादवतीर्णा मन्दाकिनी यत्रालखनन्दया सगच्छति तत्स्थान रुद्रप्रयागनाम्ना प्रथितम् । गङ्गोत्तरीतोऽवतीर्णा भागीरथी यत्रालखनन्दया मिलति तत्सङ्गमस्थान देवप्रयागसंज्ञकं वर्तते । देवप्रयागानन्तर सर्वसमवेता महाधारा गङ्गेत्याख्या लभते । गङ्गोत्तरीतः किञ्चिदग्रे गोमुखहिमश्रथतो भागीरथी उद्गच्छति । सम्भवतस्ततः क्रोशपञ्चकपरिमिते दूरे गङ्गोत्तरीसमीपे भागीरथ्यामुत्तरभागत आग-त्यैका धारा समिलति, या जाह्नवीति कथ्यते । जाह्नव्या उद्गमस्थानान्तिक एव जह्नुमुनेराश्रम आसीत् । देवप्रयागानन्तर हृषीकेशकनखलपर्यन्त गङ्गाया धारा पर्वत एव वहति । कनखले प्रथमवारमसौ गङ्गा शैलराजादवतीर्य समतलभूमौ प्रवहति । तदेवालक्ष्य कालिदासेन—
"तस्माद् गच्छेरनुकनखल शैलराजावतीर्णाम्" [ पूर्वमे० ५० ] इति वर्णितम् । गङ्गाया अन्तर्वेदिस्थान मध्यदेशस्य हृदय विद्यते ।

गङ्गा अस्मद्राष्ट्राय सस्कृतिं प्रदत्तवती । भारतीयसंस्कृतये गङ्गाया माहात्म्यमनुत्तर वर्तते । मनुकाले मध्यदेशस्य सीमानो विनशनस्थानात् (यत्र हि सरस्वती सिकतास्वन्तर्लीयते) आरभ्य प्रयागपर्यन्तमासन् । किन्तु गुप्तकाले मध्यदेशस्य परिधिर्बिहारबङ्गालपर्यन्तं विस्तृतः

समजायत । कश्मीरोपलब्धसंस्कृतविनयपिटके कथेयमुल्लिखितोपलभ्यते— मध्यदेशस्यैको माणवको विद्याध्ययनार्थं दक्षिणापथमगमत् । कस्मिंश्चिदनध्यायदिवसे सहपाठिषु जिज्ञासोदतिष्ठत् कस्कः कस्मात्कस्माद्देशादागत इति । ततोऽसौ माणवकः प्रत्यवोचत्—अहं मध्यदेशादागतः । तच्छ्रुत्वा ते सर्वेऽप्यूचुः—"सर्वे देशा अस्माभिरवेक्षिता श्रुताश्च, परं मध्यदेशो नावेक्षितः । भो माणवक, कीदृशो मध्यदेश" इति । एवं सहपाठिभिः पृष्टेन तेन प्रत्युक्तम्—"मध्यदेशो भवन्तो देशानामग्रं, इक्षुशालिगोमहिषीसंपन्नं, भैक्षुकशतकलिलं, दस्युजनविवर्जितः, आर्यजनाकीर्णं, विद्वज्जननिषेवितं, यत्र नदी गङ्गा पुण्या मङ्गल्या शुचिशौचेयसमता उभयतः कूलानि अभिच्छन्दमाना आवहति, अष्टावक्रो नाम ऋषीणामग्रपदः, यत्र ऋषयस्तपश्चर्यया सशरीरं स्वर्गं कामयमानाः" इति । गुप्तराज्ञां स्वर्णयुगे मध्यदेशस्यायमादर्शो देशे विदेशे च सर्वत्र सुविश्रुतः समजनि । भारतनिवासिनो विदेशेषु मध्यदेशीयाः कथ्यन्ते स्म । तिब्बते साम्प्रतमप्युत्तरापथनिवासिनः 'मधेशिया' (मध्यदेशीय) शब्देनोच्यन्ते । मध्यदेशे कुरुपञ्चालेषु काशीकोसलमहाजनपदेषु च भारतीयसंस्कृतेरितिहासस्य चानेकानि चित्राणि समुल्लसितानि । भौगोलिकदृष्ट्या स्मरणीयमिदं वर्तते यद् यस्य कोसलजनपदस्यायोध्या राजधान्यासीत्, तस्या विस्तार उत्तरस्यां दिशि हिमालयोपत्यकापर्यन्तमासीत् । कतिपयवर्षशतानि यावत् श्रावस्ती (सहेट महेट) तस्य राजधानी समजनि । श्रावस्तीपुर्या द्वितीयं नाम 'कुणाला' इत्यप्यासीत् । अथ कोसलजनपदो गुप्तसाम्राज्यसमये उत्तरकोसलनाम्ना व्यवह्रियमाण आसीत्, यतः प्रायस्तस्मिन्नेव समये मध्यप्रान्ते रत्नपुर-विलासपुर-रायपुरप्रदेशा दक्षिणकोसलनाम्ना प्रसिद्धिमापुः । दक्षिणकोसलमेव गत्वा कुशो राज्यमकार्षीत्, यदा चायोध्याया अधिष्ठातृदेवतयोध्वस्तामयोध्यां पुनर्वासयितुं स्वप्नेऽनुरोधः कृतस्तदा स सरयूतटनिविष्टामयोध्यापुरीं प्रतिनिवृत्त आसीत् ।

अद्यत्वे बिहारनामधेयः प्रदेशः प्राङ् मगधनामाऽऽसीत् । गङ्गाया दक्षिणभागे मगधजनपदः, उत्तरभागे च विदेहजनपद आसीत् । विद्वद्भिरनुमीयते यद्वेदेषु यः कीकटः प्रमगन्दश्चाख्यातः, स मगध एवासीत् । अत्रैव चादिवासिमानवानां वसतय आसन्, येषामार्यैः साकं सम्पर्कः समजनि । अद्यत्वेऽपि गङ्गाया दक्षिणभागे महान् भूभाग आदिवासिमानवानां प्रदेशोऽस्ति, योऽधुना छोटानागपुरपदेन झारखण्डपदेन च व्यपदिश्यते । अत्र संथालजातीयाः सर्वतो मुख्याः सन्ति, येषां परिचयो महाभारतोक्तशाणवत्यजनैः क्रियते ।

## अत्र ते कीर्तयिष्यामि वर्षं भारत भारतम्

शतपथब्राह्मणोक्त दिशा पूर्वस्या दिश्यार्यप्रदेशस्य सीमा कस्मिंश्चित्समये सदानीरानदीपर्यन्तमासीत्। सम्भवतः सैव नदी इरावतीनाम्ना प्रसिद्धिं प्राप्तवती, इरावती सदानीरेति नामसाम्यात्। विदेघमाथवो याज्ञिकमग्निं सदानीरापारीणप्रदेशमनैषीदित्यैतिहासिकैराख्यायते। अवश्यमेवाय सङ्केतः प्राच्यदेश आर्याणा सांस्कृतिकप्रसार सूचयति। मिथिलाया जनकवशः परमप्रसिद्ध आसीत्। तस्मिन् राजकुलेऽध्यात्मदर्शनयोर्महती चर्चा भूयानादरश्चासीत्। उपनिषत्सु जनकयाज्ञवल्क्ययोः सवादो जनकस्य बहुदक्षिणयज्ञे कुरुपञ्चालपर्यन्तजनपदवासिभिर्विद्वद्भिः समवेत्योक्तचर्चाया भागग्रहण चोल्लिखितम्। विदेहमगधप्रदेशौ भारतीयेतिहासे कारणद्वयेन महत्त्वपूर्णौ समजायेताम्। विदेहजनपदस्य महत्त्वमत्रत्यगणराज्यैरासीत्, येषु वैशाल्या लिच्छवयोऽतिसमृद्धा. शक्तिशालिनश्चासन्। तेषा गणराज्यकार्यप्रणाल्याः सविस्तरोल्लेखो बौद्धसाहित्ये लभ्यते। महाभारते तत् पारमेष्ठ्यशासन कथितम्। अस्या पद्धतौ प्रत्येक कुल शासनस्य न्यूनतममङ्ग बभूव। कुलप्रतिनिधयो गणसभायामुपतिष्ठन्ते स्म। तेषु च प्रत्येक राजेत्युपाधि धत्ते स्म। यथासमयममी स्वय गणपति निर्वाचयन्ति स्म। यो हि श्रेष्ठ इति कथ्यत स्म। जैनधर्मप्रवर्तको भगवान् महावीरोऽपि वैशालीसघस्य ज्ञातृक्षत्रियाख्याया शाखाया समुत्पन्नः। व्याकरणशास्त्रेऽय वृजजनपद इति कथितः। वैशाल्या लिच्छवीनारभ्य कपिलवस्तोः शाक्यान् यावदनेकानि लघुविस्ताराणि गणराज्यान्यासन्। एतद्विपरीत गङ्गाया दक्षिणभागे साम्राज्यशासनप्रणाली प्रधानतयाऽऽसीत्। सभापर्वणि जरासन्धवृत्तमाचक्षाणेन श्रीकृष्णेन—"सम्राट्शब्दो हि कृत्स्नभाक्" इत्यभ्यधायि। साम्राज्यपद्धतिरात्मनि सर्वमन्तर्भाव्य तिष्ठतीति तदर्थः। तत्रेदमपि प्रतिपादित यद् गणराज्यप्रणाल्या (पारमेष्ठ्यपद्धतौ) व्यक्तेर्व्यक्तेर्गौरव जायते, जनपदे च सर्वत्र ग्रामे ग्रामे समृद्धिः समुपलक्ष्यते। परन्तु साम्राज्यप्रणाल्या सर्व वैभव सभूय राजकुलमभित उपसहृत भवति। व्यक्तीना गौरवमपि साम्राज्यसम्बन्धनिबन्धनमेवाङ्गीक्रियते। मगधदेशे बृहद्रथवशे शिशुनागवशे नन्दवशे च साम्राज्यप्रणाल्या उत्तरोत्तरमियती वृद्धिरजनि, यथा नन्दवशस्यान्तिमेन राज्ञाऽनेके जनपदा विजित्य स्वसाम्राज्ये निवेशिताः। ततः पर मौर्यसाम्राज्यमुदगात्, येनोदीच्यानि गणराज्यानि प्रतिहततेजांसि हृतैश्वर्याणि चाक्रियन्त। समयानुसार कम्बोज-कपिशाप्रदेशाभ्यामारभ्य बङ्गकलिङ्गपर्यन्तः, एव सुराष्ट्रमारभ्य दक्षिणदिशि मसूरपर्यन्तः समग्रो भूप्रदेशो मौर्यसाम्राज्यान्तर्गत आपतितः। तस्मिन् युगे देशस्य दूरवर्तिभागानप्येकशासनसूत्रेण समेल-

यितुं स्थलपथस्य, व्यापारस्य, आन्तरिकशासनस्य, सुव्यवस्थायाः, कलायाः, साहित्यस्य चोन्नतिः सजाता । इद कल्पयितुमुचित प्रतिभाति यन्मगधसाम्राज्यस्थापनया भारतीयेतिहासस्य नियतः प्रगतिप्रकारः सपादितः ।

साम्राज्योत्थानातिरिक्त विदेहमगधयोः प्राचीनाया भूमौ भारतस्य धार्मिकसांस्कृतिकान्दोलनयोरपि प्रगतिरासीत् । जैनबौद्धधर्मयोर्विहारभूमिरयमेव प्रदेश आसीत् । ईशवीयवर्षतः प्राक् पञ्चमीं शताब्दीमारभ्य द्वादश्याः शताब्दया अन्त यावन्मगधप्रदेशे बौद्धधर्मो विविधप्रकारैर्विकसन् प्रवृत्त आसीत् । गङ्गाया दक्षिणभागे गयासन्निधौ बौद्धगयानाम्नि स्थाने बौद्धधर्मप्रकाशः प्रादुर्बभूव । तस्यान्तिम ज्योतिर्नालन्दाविश्वविद्यालयरूपेण द्वादशी शताब्दीं यावद् दृश्यमासीत् । अस्य प्रदेशस्य 'बिहार' इति नाम बौद्धधर्मस्यैवेतिहासादुद्भूतम् ।

भौगोलिकदृष्ट्या यत्रोत्तरतोऽवतीर्णा कौशिकी ( कोसी ) नदी गङ्गया सममिलत्, तत्समीपस्थः प्रदेशः 'अङ्ग' जनपदनाम्ना प्रथित आसीत् । तस्य राजधानी चम्पाऽऽसीत् । गङ्गायास्तटे वर्तमान भागलपुर तस्यैवाधुनिक नाम वर्तते । बिहारप्रदेशस्य प्रधाननदी कौशिकी नेपालादुद्गच्छति, यत्रास्याः कियत्यो धाराः सप्तकौशिकीति नाम्ना व्यपदिश्यन्ते । कौशिक्या मिलन्त्यौ अरुणा ताम्रा चेति द्वे सहायकनद्यौ प्राचीनभारतीयभूगोले परमप्रसिद्धे आस्ताम् । कौशिक्या सह ताम्रारुणयोः सगमो महाभारतस्य तीर्थयात्रापर्वण्युल्लिखितः । तत्रैव प्राचीनः कोकामुखतीर्थोऽपि वर्णितः । अरुणानदी महाहिमवतो गौरीशङ्करशिखरस्य सलिलमादाय ततः प्रादुर्भवति । इमानि भौगोलिकनामानि तीर्थाश्चार्यसन्निवेश स्मारयन्ति, सूचयन्ति च यत् केन प्रकारेण तीर्थान् विरचय्य तद्भूमीना देवभूमित्व सपादितम् ।

गङ्गाया दक्षिणेऽङ्गजनपदस्य दक्षिणपूर्वस्या दिशि वर्धमानो मार्गो गङ्गासागरसङ्गमावधिक आसीत् । अस्मिन् प्रदेशे कियता स्थानाना नामान्युल्लेखनीयानि सन्ति । यदिदानीं 'वीरभूम' इत्युच्यते, तस्य प्राचीन नाम वज्रभूमिरासीत्, प्राकृते च वयरभूमिशब्देनोच्यते । गङ्गासागरसमीपवर्ति ताम्रलिप्ति ( तामलुक ) नामकं स्थान प्रसिद्ध 'समुद्रपत्तनमासीत्[1], यतो यानपात्राणि प्रवहणानि च द्वीपान्तर ( इन्दिेशिया ) गच्छन्ति स्म । ताम्र-

---

१. प्राचीनसंस्कृतसाहित्ये समुद्रपत्तन जलपत्तन तटपत्तन पोतपत्तनेति शब्दा समानार्थका सन्ति ।

लिप्तिः सुह्मजनपदस्य राजधान्यासीत् । सुह्मजनपदवासिभिर्जनैः रघोः समक्षं वैतसीं वृत्तिं बिभ्रद्भिः (विनैव संग्रामं तदधीनतामात्मनः स्वीकुर्वद्भिः) स्वरक्षणमकारीति रघुवंशकाव्ये वर्णितम् । सुह्मस्योत्तरस्यां दिशि पश्चिमबङ्गप्रदेशस्य प्राचीनं नाम 'राढा' इति, प्राकृते च 'लाढाभूमि' इत्यासीत् । गङ्गाया वामतटे पूर्वभागे गौडनगरमासीत् । सम्भवत इदमेव पाणिनिना गौडपुरमित्यलेखि । उत्तरबङ्गजनपदस्य प्राचीनं नाम पुण्ड्रदेशः पुण्ड्रभूमि-र्वाऽऽसीत् । गुप्तकालिकलेखैस्तस्य 'पुण्ड्रवर्धनभुक्तिरित्यपि नामधेयं ज्ञायते । तस्य राजधानी महास्थाननामकं (बोगरामण्डलवर्ती महास्थानगढ) नगरमासीत् । पाणिनिना प्राच्यप्रदेशेषु यन्महानगरमुल्लिखितं तदिदमेवेति प्रतीयते । अस्माभिरद्यत्वे मालदापदेन व्यपदिश्यमानो जनपदो 'मलदाः' इति प्राचीननामधेया जनपदसूच्यामुल्लिखितो दृश्यते । पूर्वदाक्षिणबङ्ग-जनपदस्य समुद्रतटसंगतो वारिसालप्रदेशो वारिषनाम्ना व्यवह्रियमाण आसीत् । सभापर्वणि "वारिषेणसमुद्रान्ते" इत्याद्ये पद्ये स उल्लिखितोऽस्ति ।

प्राग्ज्योतिषं कामरूपं च भारतस्य प्राच्यः प्रदेशः, यो ब्रह्मपुत्रनदस्य पारावारयो-र्विस्तृतस्तिष्ठति । लोहित्यनाम्नी ब्रह्मपुत्रस्य शाखानदी पूर्वत आगत्य तेन मिलति । उभयोः संगमस्थाने वर्तमानं 'सदिया' नगरमस्ति, यस्य सवेद्येति प्राचीनं नामासीत् । अस्योल्लेखो महाभारतस्य तीर्थयात्राप्रकरणे (वनपर्वणि) वर्तते । ब्रह्मपुत्रस्य वामतटे श्रीहट्ट (सिलहट) नामकं नगरं वर्तते, यत्र कामाख्यादेव्याः प्रसिद्धं मन्दिरमतिसुन्दरं विलसति । प्राग्देशे प्रथिताया मातृपूजाया इदमतिप्रसिद्धं केन्द्रमासीत् । ब्रह्मपुत्रस्य दक्षिणभागे सूरमानदीद्रोणी वर्तते, यस्याः प्राचीनं सूरमसेति नाम पाणिनिनाऽष्टाध्याय्यामुल्लिखितम् । कामरूपस्य 'असमिया' भाषाऽऽर्यभाषापरिवारसमुत्पन्ना । भारतीयेतिहासे कामरूपस्यानेकवारं मध्यदेशेन साकं राजनैतिकः संबन्ध आसीत् । बाणभट्टेन हर्षचरिते श्रीहर्षस्य सुहृदः कुमारभास्कर-वर्मणो विस्तरेणोल्लेखो विहितः, यस्तदानीं कामरूपस्य शासक आसीत् । कामरूपस्यैव प्रदेश एको मणिपुरमासीत्, यत्र राजकन्यकया उलूप्या सह अर्जुनस्य वैवाहिकं कथानक-मुपाख्यायते । अद्यत्वेऽपि तत्रत्यैः राज्यवंशीयैः स्ववंशपरम्परासंबन्धोऽर्जुनपुत्रेण बभ्रुवाह-नेन साकमभिधीयते ।

---

१ गुप्तकाले प्रान्तस्य प्रदेशस्य वा भुक्तिरिति संज्ञाऽऽसीत् ।

कामरूपस्य पूर्वभागे ब्रह्मदेशो विद्योतते, यस्य सुवर्णभूमिरिति प्राचीन नामासीत्। तत्रत्याया इरावदीनद्या इरावतीति संस्कृतिक नाम स्फुटमवभासते । ब्रह्मदेशे बौद्धधर्मस्य महान् प्रभावः प्रसृतः, तेनापि तत्र भारतीयसंस्कृत्या सम सदैव विनिमय. प्रवर्तते स्म । उत्तर-ब्रह्मजनपदस्य पगाननाम्न्या राजधान्या अरिमर्दनपुरमिति, मध्यब्रह्मप्रदेशस्य 'प्रोम'-राजधान्याः प्राचीन नाम श्रीक्षेत्रमिति, दक्षिणब्रह्मप्रदेशस्य 'पीगू' राजधान्या हसवतीति प्राचीन नामासीत्। ततोऽपि नीचैस्तनस्य थेटननगरस्य सुधम्मवतीति प्राचीन नामासीत्। ब्रह्मदेश-कलिङ्गदेशयोर्मध्ये भारतीयसमुद्रस्य स भागो विद्यते, योऽद्यत्वे 'बङ्गाल की खाड़ी' इति नाम्ना कथ्यते। तस्य महोदधिरिति प्राचीन नामधेयमासीत्। "प्राप तालीवनश्याममुपकण्ठ महोदधेः" [ रघु० ४।३४ ] इत्यस्मिन् श्लोके कालिदासेन तत्प्राचीन नामोल्लिखितम्।

बङ्गदेशतः समुद्रतटप्रदेशेन कलिङ्गजनपदस्य मार्गो निर्गत आसीत्। कलिङ्गजन-पदे वैतरणी-ब्राह्मणी-महानदी-ऋषिकुल्येतीमाश्चतस्रः प्रधाननद्योऽद्यावधिः स्वप्राचीननामभि-र्विश्रुताः सन्ति। वैतरण्या दक्षिणतटे विरजास्तीर्थोऽस्ति, यो जाजपुरनाम्नाऽप्युच्यते। अत्र प्रजापतिना महान् यज्ञः कृत आसीत्। महानदीसमुद्रसंगमे प्रसिद्ध पुरुषोत्तमक्षेत्र वर्तते, यद् जगन्नाथपुरीत्यपि कथ्यते। तत्समीप एकाम्रक्षेत्रनामधेयः परमप्रसिद्धस्तीर्थ आसीत्, यस्योल्लेखो महाभारते पुराणेषु चोपलभ्यते। स चाद्यत्वे भुवनेश्वरनाम्ना व्यपदिश्यते। भुवनेश्वरस्य किञ्चिद् दूरे समुद्रतटे कोणादित्यक्षेत्रमासीत्, यदिदानीं कोणार्कपदेन व्यवह्रियते। अत्र त्रयोदश्या शताब्द्या सूर्यस्य मन्दिरमेकमतिविशाल निर्मित यत्सूर्यरथसमानाकार विद्यते। भारतवर्षे प्रासादनिर्माणशिल्पस्य न मनोहरमीदृशमन्यदुदाहरण वर्तते। ऋषिकुल्या नदी यत्र समुद्रे मिलति, तत्र कलिङ्गपत्तन नाम प्राचीना राजधान्यासीत्, यतो यातायातार्थं समुद्र-पथस्यैको भागस्ताम्रलिप्तिपर्यन्तम्, अन्यो भागः सिंहलपर्यन्तम्, समुखभागः स्वर्णभूमिब्रह्म-प्रदेशपर्यन्तम्, दक्षिणपूर्वभागः सुवर्णद्वीप( सुमात्रा ) यवद्वीप( जावा )पर्यन्त गच्छति। कलिङ्गवासिभिर्द्वीपान्तर गत्वा स्वोपनिवेशा उपनिवेशिताः, अतोऽद्यत्वेऽपि तन्निवासिन आत्मानं 'क्लिंग' इति कथयन्ति। कलिङ्गजनपदो यद्यपि मध्यदेशादतिदूरे वर्तते तथापि तस्यैतिहासिक सांस्कृतिक च महत्त्वमत्यधिकमासीत्। पतञ्जलिना महाभाष्ये कलिङ्गखण्डिक-प्रदेशयोरुल्लेखः कृतः। खण्डिकाख्यः कलिङ्गजनपदस्यैवैको भाग आसीत्, योऽधुना खण्ड-गिरिराख्यायते। यदा मगधदेशे नन्दनृपतिभिः स्व साम्राज्य स्थापित तदापि कलिङ्गजन-

पदस्य स्वातन्त्र्यमक्षुण्णमासीत् । अत एव भारते द्रव्यतोलनार्थं मानद्वयं प्रथितम्—मगधमानं कलिङ्गमान च, यदायुर्वेदग्रन्थेषूल्लिखितमुपलभ्यते । कलिङ्ग निवासिनो जना निजस्वातन्त्र्यस्य भृशमभिमान प्राणपणेन रक्षा च कुर्वन्ति स्म । मौर्यसम्राजा अशोकेन यदा कलिङ्गजनपद आक्रान्तस्तदा तन्निवासिभिरात्मनः स्वातन्त्र्य रक्षितु तेन सार्धं महद् युद्ध कृतम् । तत्कलिङ्ग-युद्धमेवाशोकजीवने महतस्तस्य परिवर्तनस्य कारणमभूत् , यस्य प्रभावो विश्वस्येतिहासोपरि संजातः । युद्धे हताहताना दु खौघेन व्यथितहृदयो भूत्वाऽशोको युद्धादुपारमत् , युद्धस्य भेरीघोषस्य स्थाने तेन धर्मघोषनीतिरङ्गीकृता, भारतस्यानेकेषु प्रतिवेशिदेशेषु बौद्धधर्मश्च प्रवर्तितः ।

कलिङ्गजनपदस्योत्तरो भागः, यत्र विरजाक्षेत्रम् , पुरुषक्षेत्रम् , एकाम्रक्षेत्र चास्ति, स उत्कलनाम्ना औड्रनाम्ना च प्रथितः। उत्तरकलिङ्गशब्दस्य उत्कलिङ्गशब्दस्य वा उत्कलेति सक्षिप्त रूपम् । कालिदासेन उत्कलकलिङ्गदेशयोः पृथगुल्लेख' कृतः—"उत्कलादर्शित-पथः कलिङ्गाभिमुखो ययौ" [ ४।३८ ] इत्यत्र । वर्तमान 'महेन्द्रमलै' नामधेयो महेन्द्रपर्वतः कलिङ्गस्य दक्षिणभागे प्रसिद्धः पर्वत आसीत्,यतः कलिङ्गराजो महेन्द्राधिपतिपदेन महेन्द्रनाथ-पदेन वा व्यपदिश्यते स्म । महेन्द्रगिरेर्दक्षिणभाग आन्ध्रदेश आसीत् , यो गोदावरीकृष्णा-नदीमुखमध्यवर्ती परमोर्वर' प्रदेश आसीत् । तन्निवासिनोऽत्यन्तसाहसिनो व्यापारप्रवीणाश्चा-सन् । कदाचन आन्ध्रसातवाहनाना राज्य सह्याद्रिमारभ्य महेन्द्रगिरिं यावद्विस्तृतमासीत् । पश्चिमे नासिकमारभ्य पूर्वत्रामरावतीनागार्जुनीकोण्डापर्यन्त' प्रदेशः सातवाहनसाम्राज्या-न्तर्गतो मन्यते स्म ।

भारतस्य मध्यभागे चतस्रो महानद्यो विद्यन्ते । नर्मदा ताप्ती च पश्चिमाभिमुख वहतः । तयोर्दक्षिणभागे च गोदावरी कृष्णा च पूर्वाभिमुख वहन्त्यौ महोदधौ मिलतः । नर्मदोत्तरवर्ती अवन्तिजनपदोऽत्यन्त महत्त्वपूर्ण आसीत् । उत्तरापथदक्षिणापथमार्ग उज्जयिनी अतिमहती नगर्यासीत् । अग्रत्वे स प्रदेशो मालवनाम्ना प्रसिध्यति । अस्य प्रदेशस्येद नाम गुप्तकाला-देव प्रावृतत् । मालववश्याः क्षत्रियाः कदाचन दक्षिणपश्चिमपञ्चनदप्रदेश इरावती-चन्द्रभागा ( रावी चिनाव ) सङ्गमसमीपमध्यवात्सुः । ततस्त उत्तरराजस्थानमागत्य जयपुराभि-मुख प्रस्थिताः । पुनः कोटाभिमुख गच्छन्तोऽन्ते वर्तमानमालवाप्रदेशमध्यवात्सुः । तदा-रभ्यैव प्रदेशोऽसौ मालवाख्योऽभूत् । अवन्तिजनपदात्प्राग् वेत्रवत्यास्तटे विदिशानाम्नी दशार्ण-

देशस्य प्रसिद्धा राजधान्यासीत्। या कालिदासेन मेघदूते—"तेषा दिक्षु प्रथितविदिशा-लक्षणा राजधानीम्" [पूर्वमे० २४] इत्थमुदलेखि। वेत्रवत्याः पूर्वं शोणनदीतः पश्चिम च गहन वन विन्ध्याटवी कथ्यते स्म। तत्रैव लघूनि लघून्यनेकराज्यान्याटविकराज्यशब्देनो-च्यन्ते स्म। बाणेन हर्षचरिते कादम्बर्यां च विन्ध्याटवी यथादृष्ट वर्णिता। कालिदासकाले नर्मदातटवर्ती प्रदेशोऽनूपदेशपदेन व्यपदिश्यते स्म, यस्य माहिष्मती (भेडाघाट) राजधान्या-सीत्। पश्चादयमेव प्रदेशश्चेदिजनपदनाम्ना प्रसिद्धोऽभूत्।

नर्मदाया दक्षिणभागे सम्भवतस्तत्समानान्तर वहन्ती तपती (तासी) नाम्नी पयोष्णी नाम्नी वा नदी वर्तते, या शुक्तिमतः पर्वतान्निर्गच्छति। नर्मदा-पयोष्णीमुखभाग उत्तरदक्षिण भागे च विस्तृतोऽद्यत्वे गुजरातनाम्ना प्रसिद्धो लाटदेश आसीत्। समुद्रतटवर्ती देशोऽयमति-प्राचीनसमये पिप्पलीकच्छनाम्नापि व्यवह्रियमाण आसीत्। नर्मदाया मुखस्थाने भरुकच्छ-नामधेय भृगुकच्छनामधेय वा समुद्रपत्तनमासीत्, यतः पश्चिमाभिमुख गन्तुकामाना प्रवहणाना यात्रा प्रवर्तते स्म।

उत्तरापथस्य गङ्गेव पावनीभूता दक्षिणदेशे गोदावरी वर्तते। सा नासिकसमीपवर्त्तिन-स्त्र्यम्बकेश्वरस्थानान्निर्गच्छति। सा तस्मिन् भागे गौतमीत्यभिधीयते। नासिकस्य पश्चिमोत्तर-प्रदेशस्त्रिकूटकपदेन प्रथित आसीत्। कालिदासेन रघुवंशेऽस्यैव त्रिकूटपर्वतस्योल्लेखः कृतः—

मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम्।
त्रिकूटमेव तत्रोच्चैर्जयस्तम्भ चकार सः॥ [रघु० ४।५६] इति।

गोदावर्या उत्तरस्या दक्षिणस्या च दिशि जनपदचतुष्टय विशिष्योल्लेखनीय वर्तते। उत्तरपश्चिमभागे ऋषिकदेशः (खानदेशः), उत्तरपूर्वभागे विदर्भदेशः (बरार), दक्षिणभागेऽश्मकदेश. (औरङ्गाबाद), दक्षिणपश्चिमभागे च मूलकदेशो (अहमदनगर) वर्तते। उत्तरस्या दिशः कतिपयमहत्त्वपूर्णा नद्य आगत्य गोदावर्या मिलिताः। पश्चिमतः पेनगङ्गा (प्रवेणया) उत्तरतो वेनगङ्गा (वेणया) च परस्पर गच्छतः। तयो. प्रणिहितानाम्नी सयुक्तधारा गोदावर्या मिलिता। विदर्भस्य वरदानदी प्रवेणया शाखानदी। वरदाप्रवेणयोर्मध्यवर्ती प्रदेशो विदर्भः। वेणयायाः पूर्वत्र दक्षिणकोसलजनपद आसीत्।

प्रणिहिता-गोदावरीसगमोत्तरमिन्द्रवती-शबर्याख्ये नद्यावुत्तरत आगत्य गोदावर्यां मिलतः। नदीद्वयमिदमद्यत्वेऽपि स्वप्राचीननाम्नैव व्यवह्रियते। शबरीनद्या गहनेषु विपिनेषु शबरजातीयाना निवास आसीत्। गोदावरीदक्षिणभागे कृष्णानदी सह्याद्रेर्निर्गत्य पूर्वाभिमुख प्रवहति। कृष्णातटवर्ती प्रदेशः कुन्तलनाम्ना व्यवह्रियते स्म। सह्याद्रिसमुद्रमध्यवर्तिनी समभूमिरपरान्तनाम्ना प्रसिद्धा, सैवाद्यत्वे 'कोङ्कण' इत्युच्यते। कृष्णायामुत्तरतो भीमरथी ( भीमा ) नदी, दक्षिणतश्च तुङ्गभद्राऽऽगत्य मिलिता। तुङ्गाभद्रानाम्न्योर्लघुनद्योः सयुक्तधारा तुङ्गभद्रा। तयोर्मध्ये प्राचीना वैजयन्ती नाम नगर्यासीत्, याऽद्यत्वे वनवासीत्युच्यते। सुदूरदक्षिणवर्तिनदीपु पिनाकिनी, कावेरी, ताम्रपर्णी च प्रधाना वर्तन्ते। पिनाकिन्या उत्तरत्र कदाचनेतिहासविश्रुतपल्लवाना राज्यमासीत्, येषा राजधानी काञ्ची आसीत्। अवन्तिसुन्दरीकथाया दण्डिना, जानकीहरणे कुमारदासेन च काञ्च्या विशिष्योल्लेखः कृतः। कावेरीपिनाकिन्योर्मध्ये चोलजनपद आसीत्। कावेर्या दक्षिणतट उरगपुरनाम्नी प्राचीनपाण्ड्यजनपदराजधान्यासीत्, या रघुवशे कालिदासेनोदलेखि—"अथोरगाख्यस्य पुरस्य नाथम्" [ ६।५९ ] इति। पाण्ड्यदेश एव सेतुबन्धरामेश्वरतीर्थोऽस्ति, यतः समुद्रयात्रिकाः सिंहल गच्छन्ति। पाण्ड्यदेश एव मलयगिरिरस्ति, यत्र चन्दनद्रुमाः प्ररोहन्ति। भारतीयसाहित्ये मलयगिरिरतीव प्रसिद्धोऽस्ति। मलयगिरेः पश्चिमभागे केरलदेश आसीत्, योऽद्यत्वे 'मलैबार कोचीन-त्रावणकोर' इति नामत्रयेण परिचीयते। केरलदेशस्यैव सर्वतो दक्षिणसीमाया कन्याकुमारी वर्तते, यत्र समुद्रतटे शिव पतिमाप्तु तपस्तपस्यन्त्याः कुमार्याः पार्वत्या अतिरमणीय मन्दिर राजते।

भारतस्य दक्षिणे भागे मातृभूम्या मिलितो लङ्काद्वीपो विद्यते, यः सिंहलद्वीपनाम्ना आम्रद्वीपनाम्ना च प्रसिद्धः।

भारतीयप्रायद्वीपस्य पार्श्वत्रय गभीरः महासमुद्रः परिवेष्टयति। कदाचन भारतीया वस्तुतः स्वसमुद्राधिपतय आसन्। महाकविः कालिदासो मातृभूमेर्विलक्षणकल्पना करोति यद् दक्षिणा दिग् नायिका समुद्रश्च तन्मेखलेति—"रत्नानुविद्धार्णवमेखलाया दिशः सपत्नी भव दक्षिणस्याः" [रघु० ६।६३]। वस्तुत आन्ध्रसातवाहनसमयाद् भारतस्य सामुद्रिकव्यापारोऽत्यन्तमवर्धिष्ट। व्यापारेण सह विदेशेषु भारतीयाना सस्कृति-धर्म-भाषा-कलानामपि प्रचारः समजनि। फलत. सिंहलद्वीप-इन्द्रद्वीप ( अण्डमन ) नग्नद्वीप ( नक्कवरम्-निकोवार )-

## अत्र ते कीर्तयिष्यामि वर्षं भारत भारतम्

मलयद्वीप (मलाया)-यवद्वीप (जावा)-सुवर्णद्वीप ( सुमात्रा ) बलिद्वीप ( बाली )-कटाहद्वीप-( मलयोत्तरवर्ति केडानामक स्थानम् )-प्रभृतिद्वीपेषु भारतीयसंस्कृतेः, संस्कृतभाषायाः, बौद्धधर्मस्य, हिन्दूधर्मस्य च प्रचारो बभूव, यस्य पुरातत्त्वान्वेषणप्रणाल्योत्खननेन मन्दिर-मूर्त्तिशिलालेखात्मकानि प्रमाणशतान्युपलब्धानि । गुप्तकाले भारतस्याय सांस्कृतिकः प्रचारो धर्मविजयनाम्ना व्यवहृत आसीत् । अनेन धर्मविजयेन तेषां द्वीपानां भारतेन सहेदृशी एकरूपता जाता यद्भारतशब्दस्य भौगोलिकोऽर्थ एव परिवर्तितः । तेषां द्वीपानामपि भारतवर्षं एवान्तर्भावः सर्वैरङ्गीकृतः । पुराणेष्वपि स्थितिः स्पष्टशब्दैरुल्लिखिता—

> भारतस्यास्य वर्षस्य नव भेदान्निबोधत ।
> समुद्रान्तरिता ज्ञेयास्ते त्वगम्याः परस्परम् ॥
> इन्द्रद्वीपः कसेरुश्च ताम्रपर्णी गभस्तिमान् ।
> नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः॥
> अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ।

[ मत्स्य० ११४।७–६ , वायु०१।४५।७८–८० , मार्कण्डेय० ५७।६–७ ]

एषु स्पष्टमभिहितं यद् भारतस्य नवानां द्वीपानां समुद्रव्यवहितत्वात्परस्परमगम्यताऽऽसीत् । अस्य भौगोलिकतथ्यस्य लेखको भारत एवोपविश्य लिखन्नासीत्, अत एवैतद्देश-परामर्शकः 'अयम्' इति शब्दोऽत्र प्रयुक्तः ।

राजशेखरेण काव्यमीमांसायामिमानेव श्लोकानुद्धरता नवमद्वीपस्य कुमारीद्वीपनामकत्वं स्पष्टमुल्लिखितम् । तेन परिज्ञायते यद् गुप्तकाले स्वयं भारतदेशः कुमारीद्वीपनाम्ना प्रसिद्ध आसीत्, भारतशब्दश्च बृहत्तरभारतेऽर्थं प्रयुक्तोऽभूत् । "अद्य श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य श्रीब्रह्मणोऽह्नि द्वितीयप्रहरार्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे-ऽष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बुद्वीपे भारतखण्डे भारते वर्षे कुमारिकाखण्डे आर्यावर्तैकदेशे " अस्मिन् प्राचीनसंकल्पवाक्ये प्रथमः पाठः—"जम्बुद्वीपे भरतखण्डे" एतावत्पर्यन्त आसीत् । एष च पाठः प्राचीनभारतीयभूगोलस्य परिचायको वर्तते । अस्मिन् भूगोले हरिवर्षमिलावृतवर्षं केतुमालवर्षं भारतवर्षं चेति वर्षचतुष्टयं जम्बुद्वीपशब्देनोच्यते । अस्य जम्बुद्वीपस्य दक्षिणो भागो भारतवर्षमासीत् । संभवतो गुप्तकाले भारतवर्षशब्दस्य प्राचीनोऽर्थं उक्तनवद्वीपान्तर्भावेण यदा विस्तृतो बभूव तदा तस्मिन् संकल्पवाक्ये

"भारतवर्षे कुमारिकाखण्डे" इत्येतत्पदद्वय संयोजितम्। अस्मिन् सकल्पवाक्ये प्राचीननवीना-वुभावपि पाठौ बाढ सरक्षितौ तिष्ठतः। स्कन्दपुराणस्य महेश्वरखण्डस्य कुमारिकाखण्डेऽपि देशोऽय कुमारिकाखण्डशब्देनाभ्यधायि।

इत्थ प्राचीनसंस्कृतसाहित्ये भारतीयभूगोलस्यापरिमिता सामग्री वर्तते। भारतीयाना जन-पदाना पर्वताना नदीना प्रदेशाना नगराणा च तात्कालिकसाहित्योपलभ्यमानसूक्ष्मपरिचयाना नूतनदृष्ट्या दर्शनेनास्माक ज्ञानवृद्धिर्जायते, प्राचीनतत्त्वान्वेषकाणा भूगोलस्य सूक्ष्म परिचय परिज्ञायाश्चर्य चोत्पद्यते। अस्या भौगोलिकसामग्र्या ज्ञान संस्कृतस्याध्येतॄणामध्यापकाना च विदुषा भवितुमुचितम्। एतदर्थ प्राचीनसंस्कृतसाहित्यस्य भौगोलिकसामग्र्याः समुचितप्रका-रेणाध्यापनमावश्यकम्। नवीनभौगोलिकग्रन्थैः सह प्राचीनभुवनकोश-काव्य-स्थलमाहात्म्यतीर्थ-यात्राप्रकरण-शिलालेखादिषूल्लिखिताना स्थाननाम्नामध्ययने संस्कृतविद्वासः प्रवर्तनीयाः, येन तेषा स्वसाहित्ये नवीना निष्ठा, संस्कृतसाहित्यार्थस्य सम्यगधिगमाय नूतना शक्तिश्चोदियात्। भूगोलमतिशय्य वास्तविकस्थितिपरिचायकमन्यच्छास्त्र नास्तीत्यर्वाचीना विद्वासो मन्यन्ते। भौगोलिकाना नाम्ना सङ्केताना च परिचयेन सह कालिदासबाणभट्टप्रभृतीना काव्याना ग्रन्थाना चाध्ययने तत्तद्वर्णनावगमे महती सुविधा भविष्यति। रघुदिग्विजये ताम्रपर्णीमारभ्य वक्षु-(ओक्सस) पर्यन्ताना नदीनाम्, कामरूपमारभ्य पारसीकपर्यन्ताना देशाना च यानि नामानि कविनोल्लिखितानि, तेषा ज्ञान विना कवेर्वास्तविकाऽऽशयोऽतीव दुर्बोधो भवति। एषु वर्णनेषु गुप्तसम्राजा महतो देशविजयस्य प्रतिध्वनिस्तत्तद्भौगोलिकनाम्ना यथार्थपरिचय विना ज्ञातु-मशक्यः। वराहमिहिरराजशेखरप्रभृतिभिः कतिपयपुराणलेखकैश्च स्वग्रन्थेषु या विविधा भौगोलिकसामग्री समापूरिता सा नूतनभौगोलिकव्याख्यया सह स्वदृष्टिपथ नेतव्या॥

अनुवादकः—

श्रीभूपनारायण झा।

# सम्पादकीयम्

## इतिकर्तव्यतानिर्देशः

'सुषमाया.' अष्टमवर्षस्य प्रथमेऽङ्के सस्तुतोऽस्माभिर्महामहिमशाली करालः कालः। स्तवेन प्रीतो भगवान् प्रावेशयत् तामिमा नवमे वर्षे। अष्टमवर्षस्य द्वितीयाङ्कोऽपि प्रकाशमेष्यति न वेति सन्दिहाना वय सस्कृतपत्रपत्रिकाणामभिलक्ष्य परमायुः सप्तवर्ष यावत्प्रकाशितैषा पत्रिकेत्यत्रापि नातीवारुचिं प्राकटयाम। किन्तु परेशकृपयाऽदृष्टमाहात्म्येन च कर्तव्या देववाणी-परिचर्येति च सत्यपि कालविलम्बे सकुशल समापयदष्टम वर्षमेषा। अधुना च नवमवर्षस्य प्रथमोऽङ्को विदुषा पाठकाना करकमलयोरर्प्यते। क्षन्तव्योऽय कालविलम्बः श्रीमद्भिः।

"एक सद्विप्रा बहुधा वदन्ति" इतिवदनादिनिधना दैवीं वाचं पुरुरूपा बहुधोपासते प्राच्यप्रतीच्या मनीषिण'। सति राजनीतिके सपर्के भवति परस्पर सास्कृतिकः साहित्यिकश्च संगमः। यवन(ग्रीक) अरबसस्कृतिसाहित्याभ्या सजातपूर्वोऽय सबन्धो भारतीयसंस्कृतिसाहित्ययोः। दुःखतप्त जीवलोक संलक्ष्य महाकरुणाप्रेरिताना भवति तेषामुद्धाराय स्वत्वविकासन शीला प्रवृत्तिः। अनया प्रवृत्त्या चीनतिब्बतादिदेशेषु जावासुमात्रादिदक्षिणपूर्वैशियादेशेषु च तयोः सपर्क समजायत। इत्थं सत्यमेव महामहिमशालिनी सैषा गीर्वाणवाणी प्रसृत-दिग्दिगन्तयशस्का वर्तते पुरातनकालादेव।

अधुना च नूतनेन वैज्ञानिकयुगेन सह सपर्कस्तस्या वरीवर्ति। पूर्व लब्धयशस्कापि पाश्चात्त्यमनीषिभिरीशवीयस्याष्टादशशतकस्योत्तरार्द्धे पुन परीक्षिता सा सहस्रगुणित यशस्तेने। तुलनात्मकभाषाविज्ञानस्य विज्ञानत्वापादिकायास्तस्या रूपसमृद्धिं धातुसमृद्धिं वैदिकादिविविधसाहित्यसमृद्धिं च परीक्ष्यावधारित पाश्चात्त्यगवेषकैर्यद् ग्रीक-लेटिन-अवेस्ता-भाषाणामनयाऽतिघनिष्ठः सबन्धो वर्तत इति। अवेस्तावैदिकभाषयो' साम्य तु सपद्येवाव-भासते। समासामासा भाषाणा साहाय्येन भारतयूरोपीयभाषाणा जननीस्थानीया मूलभाषा कल्पिता, यस्याः स्वरसपत्तिर्ग्रीकभाषाया व्यञ्जनसपत्तिश्च सस्कृतभाषाया सुरक्षिते तिष्ठत इति विदुषा मतम्। इत्थ च नूतनया पद्धत्या पाश्चात्त्यदेशेषु संस्कृताध्ययनस्य प्रचारः सम-

जान । संस्कृतवाङ्मयस्य विविधासु शाखासु जर्मन-फ्रेन्च-इंग्लिश रशियन डचप्रभृतिविविध-भाषामाध्यमेन विगतेषु सार्द्धशतवर्षेषु सुमहदध्ययनफलं प्रादुर्भूतम् । एकैकस्य शब्दस्य सम्पूर्ण इतिहासस्तैर्गवेषितः । सुमहान्त कोशा निर्मिताः, सम्पूर्णस्य वैदिकवाङ्मयस्य, इतिहासपुराणयोः, धर्मशास्त्राणाम्, किं बहुना पालि-प्राकृत अपभ्रंशसाहित्यस्यापि तैरालोडनं विहितम् । संस्कृतवाङ्मयस्यैकैकमङ्गमङ्गीकृत्य पाश्चात्यचिन्तकैस्तत्र स्वकीयं जीवनमेव हापितम् ।

अमरभारत्याः स्वादूनि फलानीमानि जग्धुं नैव यथाकथञ्चित्पार्यते, किन्तु जीवनाहुति-भाग्यानि भवन्ति तानि । विशालतमः प्राचीनो भारतीयो वाङ्मय एव । सर्वेषु प्राच्यपाश्चात्य देशेषु प्रसृतेन तत्सबद्धवाङ्मयेन साकमेव तस्य पूर्णता कल्पयितुं शक्या । यथार्थतः सर्वस्यास्य वाङ्मयस्य परिशीलनेन चैव सत्यममरभारती सरक्षा सभाव्यते ।

तस्यैतस्य वाङ्मयजातस्य परिरक्षार्थं समीक्षार्थं च प्रवर्तिताः प्रवर्तन्ते च विविधा उपायाः । पाश्चात्त्येषु देशेष्वनेकानि प्राच्यगवेषणासंस्थानानि सन्ति, तत्रत्येषु प्रसिद्धेषु विश्व-विद्यालयेषु च प्राच्यविद्याः पाठ्यन्ते । तत्रत्याः प्राच्यविद्याविद्वांसोऽन्ताराष्ट्रिये प्राच्यविद्यामहा-समेलने समये समये सभूय परस्परं विचारविनिमयं कुर्वन्ति च ।

पाश्चात्त्यपद्धतिमनुसृत्य भारतेऽपि प्राच्यविद्याध्ययनपद्धतिः प्रचलिता । संस्कृतभाषा-परिशीलनाय डा०आर०जी०भण्डारकरमहोदय. पुण्यपत्तने शोधसंस्था स्थापिता, अत्र-त्याना प्राच्यप्रतीच्याध्ययनपद्धतिमनुसरता मनीषिणां च समवेत्य विचारविनिमयाय प्राच्यविद्या-महासमेलनं प्रारब्धम् । अस्य समेलनस्य सप्तदशाधिवेशनं गतवर्षे 'अहमदाबाद'-नगरे सपन्नम् । प्रत्यधिवेशनमस्य कार्यसञ्चिका प्रकाश्यते, यत्राधिवेशने पठिता विशिष्टा निबन्धाः प्रकाश्यन्ते ।

पाश्चात्त्यसरणिशरणा इमे प्रयत्ना भवन्ति । अस्ति चाखिलभारतीयसंस्कृतसाहित्य-समेलनं नाम, यस्यैकविंशाधिवेशनमेषम एव सपन्नम् । श्रीनरहरिविष्णुगाडगिलमहोदयाः सभापतय आसन्नस्य । अत्र प्राच्यसरणिपोषिका निबन्धप्रतियोगिताशलाकापरीक्षादयः सभ-वन्ति । संस्कृतरत्नाकरनामकं मासिकं मुखपत्रं विद्यतेऽस्य । विविधविषयेषु नूतनसंस्कृतग्रन्थ-निर्माणदिशि प्रेर्यन्ते विद्वांस. ।

## सम्पादकीयम्

महामहिमश्रीक०मा०मुंशीमहोदयानामसीमोद्योगेन १९५१ ई० वर्षे सोमनाथमन्दिर-पुनःप्रतिष्ठावसरे संस्कृतविश्वपरिषत् स्थापिता। अस्यास्तृतीयमधिवेशनं विगते वैशाखमासे (२४-२५ अप्रैल, १९५४) नागपुरे सम्पन्नम्। अस्याधिवेशनस्य स्वागताध्यक्षाः प०रविशङ्करशुक्लमहोदयाः, अध्यक्षाश्च महामहिमराष्ट्रपतिश्रीराजेन्द्रप्रसादमहोदया आसन्। अस्याः परिषदः 'अमेरिका'-प्रभृतिविदेशेष्वपि शाखाः स्थापिताः सन्ति। 'भारतीय विद्याभवन बुलेटिन'-नाम्न्या पत्रिकाया च संस्कृतविश्वपरिषत्सम्बन्धि सर्वं वृत्तजातम्, निबन्धाः संस्कृतमयाः, विविधाः सूचनाश्च प्रकाश्यन्ते।

अन्यदपि, पुण्यपत्तनस्थेन भण्डारकरशोधसंस्थानेन महाभारतस्य सर्वाङ्गपूर्णं संस्करणं प्रकाश्यते, बडौदास्थितया गायकवाडप्राच्यसंस्थया रामायणस्य प्रकाशनमुपक्रान्तम्, वाईस्थितप्राज्ञपाठशालया धर्मकोशः प्रकाश्यते, पुण्यपत्तनस्थवैदिकसंशोधनमण्डलेन श्रौतकोशः सगृह्यते पुण्यपत्तनस्थडेक्कनकालेजशोधसंस्थया संस्कृतविश्वकोशसंकलना क्रियते, मद्रासविश्वविद्यालयो हस्तलेखानां बृहत्सूचीं संगृह्णाति, होशियारपुरस्थविश्वेश्वरानन्दवैदिकशोधसंस्था वैदिकपदानुक्रमकोशं सम्पादयति, मुम्बापुरीस्थो भारतीयविद्याभवनो भारतराष्ट्रस्य सांस्कृतिकमितिहासमारचयति च।

एवं बहुभिर्बहुधा सेव्यमाना सेयं सुरसरस्वती सारस्वतीं सुषमामपि कमप्यवसरं प्रददाति। संस्कृतपाठकानां परतः प्राच्यप्रतीच्योभयविधाध्ययनप्रणाल्युपस्थापनमुखेन तां सुश्रूषत्येषा। प्राच्यपाश्चात्त्योभयप्रणालीनिष्णातानां विदुषां परिदृश्यते न्यूनता। पार्थक्येनोभयप्रणालीदीक्षितानां विचारसरणीषु प्रायो महदन्तरमवलोक्यते, न च दरीदृश्यतेऽनयोः सगमकेन्द्रं कुत्रापि। अतीवानिष्टजनकं च तत्, विशेषतोऽस्मिन् वैज्ञानिके युगे। अस्यैव लक्ष्यस्य पूर्तिर्भवेदिति कामयत्येषा। अत्र चोभयप्रणालीदीक्षितानां विदुषां सहयोगोऽतिवेलमपेक्ष्यते।

उभयविधा निबन्धा अत्र प्रकाश्यन्ते—शास्त्रीयाः गवेषणात्मकाश्च। अत्र शास्त्रीया निबन्धाः प्राचीनां विचारसरणिमुररीकुर्वन्ति, गवेषणात्मकाश्च नूतनां तुलनात्मकप्रणालीं समालोचनात्मिकाम्। समन्वयपद्धतेरादर्शभूतः—"अत्र ते वर्णयिष्यामि वर्षं भारत भारतम्" इतिशीर्षको डा०वासुदेवशरणाग्रवालमहोदयानां लेखोऽस्मिन्नेवाङ्के प्रकाशितः। समन्वयवादिनो विद्वांस एतादृशान् निबन्धान् प्रेषयितुं प्रार्थ्यन्ते।

## सारस्वती सुषमा

अत्र सरस्वतीभवनस्थानामप्रकाशितपूर्वाणा महत्त्वपूर्णाना लघूना महता च ग्रन्थाना सपादनकप्याधुनिकपद्धत्या क्रियते । आनन्दबोधरचितस्य काण्वसहिताभाष्यस्य ३१–४० अध्यायात्मकश्चतुर्थो दशकोऽस्मिन्नेवाङ्के समाप्यते । नारायणपण्डितविरचितो बीजगणिताव तस. प्रकाश्यमान आस्ते । प्रस्तुताङ्कतश्च रङ्गनाथभट्टविरचितः सिद्धान्तचूडामणिनामा ग्रन्थः प्रकाशयितुमुपक्रम्यते । अन्येऽपि महत्त्वपूर्णा ग्रन्था यथासमय प्रकाशयिष्यन्ते ।

साम्प्रत 'सुषमाया विनिमये चत्वारिंशदधिका देशीया विदेशीयाश्च शोधपत्रिकाः, सस्कृतपत्रिकाश्चावाप्यन्ते । आसु सस्कृतवाङ्मयमधिकृत्यानेकासु शाखासु महानूहापोहः क्रियते । सर्वस्यास्य ज्ञानस्यैकत्र परिचयमासादयन्तु पाठका इति धिया निबन्धाना ग्रन्थाना च सङ्क्षिप्त परिचय प्रत्यङ्क प्रदातु प्रयतिष्यतेऽग्रिमाङ्कैः ।

---

अन्यदेवाहुः संम्भवादन्यदाहुरसंम्भवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥

( ख० ) अथाधुना उपासनयोः समुच्चयकरणायावयवफलभेदमाह–अन्यदेवाहुरिति । अन्यदेव पृथगेव । आहुः फल सभवात्, सभूतेः कार्यब्रह्मोपासनाद् अणिमाद्यैश्वर्यलक्षण फलमाहुर्वेदाः । तथाऽन्यदाहुरसभात् असभूतेरव्याकृतादव्याकृतोपासनादन्यदेव फलमाहुः—"अन्ध तमः प्रविशन्ति" [ ई० १२ ] [1]इति, [2]प्रकृति[ लय ] इति [ च ] पौराणिकैरुच्यते । इति एवम् । शुश्रुम श्रुतवन्तो वयम् । धीरा[णा] ये नस्तद्विचचक्षिरे ये आचार्या धीराणा वचन विचचक्षिरे व्याकृताव्याकृतोपासनाफलवचन व्याख्यातवन्त इत्यर्थः ॥ १३ ॥

( क० ) अधुना उभयोरुपासनयोः समुच्चयकारणमवयवफलभेदमाह । पाठस्तु—अन्यदेवाहुः सभवादन्यदाहुरसभवात् । इति शुश्रुम धीराणा ये नस्तद्विचचक्षिरे ॥ १३ ॥ इति । अन्यदेव पृथगेव आहुः फलम् । सभवात् सभूतेः कार्यब्रह्मोपासनाद् अणिमाद्यैश्वर्यलक्षण [3]व्याख्यातवन्त इत्यर्थः । तथा च अन्यदाहुरसभवात् । असभूते. अव्याकृतात् अव्याकृतोपासनात् । यदुक्तम्—"अन्ध तमः प्रविशन्ति" [ई० १२] इति, प्रकृतिलय इति च पौराणिकैरुच्यते । इति एवम् । शुश्रुम धीराणा [ वचनम् ] । ये नस्तद्विचचक्षिरे [व्याकृता]-व्याकृतोपासनफल व्याख्यातवन्त इत्यर्थः ॥ १३ ॥

सम्भूतिं च विनाशं च यस्तद्वेदोभयंꣳ सह ।
विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥ १४ ॥

( ख० ) यत एवमतः समुच्चय. [4]सभूत्यसभू[त्युपासन]योर्युक्त एव, एकपुरुषार्थत्वादित्याह—सभूतिं च विनाश च यस्तद्वेदोभय सह विनाशेन [5]मृत्युम् । [वि]नाशो धर्मो यस्य स तेन विनाशधर्मणा हिरण्यगर्भोपासनेन ऐश्वर्यप्राप्तिद्वारा अनैश्वर्य[ म् अ]धर्मकामादिदोषजात च मृत्यु तीर्त्वा । सभूत्या, अत्राकारलोपश्छान्दसः । असभूत्या असभूत्यु-

---

१. 'इति' इत्यस्याग्रे–"शुश्रुम' इति–ख० । २. 'प्रकृति एवम्' नास्ति–आ० ।
३. आख्यातवन्तः–शां० । ४. संभूत्योः–आ० । ५. मृत्युर्नाशो–आ० ।

पासनया अव्याकृतोपासनेन अमृत प्रकृतिलयलक्षण कारणत्वप्राप्तिलक्षणममृतमश्नुत इति। ततश्च पुनः संसारो भवतीत्येवमपर विद्याकर्मसमुच्चये फलमभिहितम्। "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" [ ई० ७ ] इति स्वतन्त्रस्य सर्वकर्मसन्यासपूर्वस्य सम्यग्ज्ञानस्य फलमभिहितम्। एव द्विप्रकारः प्रवृत्तिनिवृत्तिलक्षणो वेदार्थोऽनेन[1] प्रकाशित । [ तत्र ] प्रवृत्तिलक्षणस्य वेदार्थस्य विधिप्रतिषेधलक्षणस्य कृत्स्नस्य प्रकाशने प्रवर्ग्यान्त ब्राह्मणमुपयुक्तम्। निवृत्तिलक्षणस्य प्रकाशने—"विद्यामुपासते" [ १ ] इत्यत ऊर्ध्व बृहदारण्यकम्। तत्रापि प्राणादिविषयोपासनपर[2] किञ्चित्, अन्यन्निर्गुणब्रह्मपरमिति विभज्य दर्शनीयम्। कार्यसगुणब्रह्मोपासनावाक्यजात च—"अन्ध तम' प्रविशन्ति येऽविद्यामुपासते" [ ई० ६ ] इत्यादिपरमन्त्रकाशितार्थस्य प्रकाशन उपयुक्तम्, इतरत् सर्व निर्गुणतत्त्वैकनिष्ठमिति। "विद्या चाविद्या च यस्तद्वेदोभय सह। अविद्यया मृत्यु तीर्त्वा विद्ययामृतमश्नुते॥" [ ई० ११ ] इति यदुक्त तत्र केन मार्गेणामृतत्वमश्नुत इत्यर्चिरादिमार्गेणेत्युच्यते ॥१४॥

(क०) यत एवमतः समुच्चयः सभूत्यसभूत्युपासनयोर्युक्तः, एकैकपुरुषार्थत्वाच्चेत्याह। पाठस्तु—सभूतिं च विनाश च यस्तद्वेदोभय सह। विनाशेन मृत्यु तीर्त्वा सभूत्याऽमृतमश्नुते ॥ १४ ॥ इति। [ सभूतिं च विनाश च यस्तद्वेदोभय सह विनाशेन ]। विनाशो धर्मो यस्य कार्यस्य स तेन धर्मिणा [अ]भेदेनोच्यते 'विनाश' इति, तेन तदुपासनेनानैश्वर्य-[म]धर्मकामादिदोषजात च मृत्यु तीर्त्वा, हिरण्यगर्भोपासनेन ह्यणिमादिप्राप्तिः फलम्, तेनानैश्वर्यादिमृत्युमतीत्य। असभूत्या अव्याकृतोपासनेन[3]। अमृतं प्रकृतिलयलक्षणमश्नुते। 'सभूति च विनाशं च' इत्यत्रावर्णलोपेन निर्देशो द्रष्टव्य', प्रकृतिलयश्रुत्यनुरोधात्॥ १४॥

हि॒र॒ण्मये॑न॒ पात्रे॑ण स॒त्यस्यापि॑हितं॒ मुख॑म्।
तत्त्व पूष॒न्नपावृ॑णु स॒त्यध॑र्माय दृ॒ष्टये॑॥ १५॥

( ख ) एव यथोक्तोपासन कुर्वन्नुपासकः स्वदेहस्यान्तकाले प्राप्त आत्मनोऽमृतत्वप्राप्तिद्वारभूतमादित्य याचते—हिरण्मयेन पात्रेणेति। आदित्यदेवत्याऽनुष्टुप्। हे पूषन् हे सूर्य अस्मत्पोषक। हिरण्मयेन ज्योतिर्मयेन। पात्रेण आधारभूतेन। सत्यस्य आदित्यमण्डलस्थस्य ब्रह्मणः। अपिहित मुख द्वारमपिहितम्। हिरण्मयेन पात्रेण द्वारस्यापिधान कृतम्।

१. अनेन सन्दर्भेणेत्यर्थः। २. उपासनं न परम्—ख-आ०। ३ उपासनया—शा०।

अतस्तत्त्व पूषन्नपावृणु । पूषन्, तत् पिधानम् । त्वम् अपावृणु अपगमय । सत्यधर्माय सत्यस्य तव उपासनादहमपि सत्यधर्मो जातः । सत्य धर्मा यस्य स [1]'सत्यधर्मा', तस्मै सत्य-धर्माय मह्य तदपावृणु । यद्वा व्यत्ययः । सत्यधर्माय सत्यधर्मस्य तद् दृष्टये ॥ १५ ॥

( क० ) मानुषदैववित्तसाध्य फल शास्त्रलक्षण प्रकृतिलयान्तम् । एतावती ससार-गतिः । अतः पर पूर्वोक्तम्—"आत्मैवाभूद्विजानतः" [ ई० ७ ]इति सर्वात्मभाव एव सर्वैषणासन्यासज्ञाननिष्ठाफलम् । एव द्विप्रकारः प्रवृत्तिनिवृत्तिलक्षणो वेदार्थोऽत्र [2]प्रकाशितः । तत्र प्रवृत्तिलक्षणस्य वेदार्थस्य विधिप्रतिषेधलक्षण[स्य] कृत्स्नस्य प्रकाशने प्रवर्ग्यान्त ब्राह्मणमुपयुक्तम् । निवृत्तिलक्षणस्य प्रकाशनेऽत ऊर्ध्वं बृहदारण्यकम् । तत्र निषेकादि-श्मशानान्त कर्म कुर्वन् जिजीविषेद्या विद्यया सह अपरब्रह्मविषयया, तदुक्तम्—"विद्या चाविद्या च यस्तद्वेदोभय सह । अविद्यया मृत्यु तीर्त्वा विद्ययाऽमृतमश्नुते ॥" [ ई० ११ ] [3]इति, तत्र [ सोऽधिकारी ] केन मार्गेणामृतत्वमश्नुते ? इत्युच्यते—"तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चाय दक्षिणेऽक्षन् पुरुषः" [बृह० ५।५।२ ] एतदुभय सत्य ब्रह्मोपासीनो यथोक्तकर्मकृच्च यः सोऽन्तकाले प्राप्ते सत्यात्मानमात्मनः प्राप्तिद्वार याचते । पाठस्तु—हिरण्मयेन पात्रेण सत्यस्यापिहित मुखम् । तत्त्व पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५ ॥ इति । [हिरण्मयेन पात्रेण] । हिरण्मयम्, ज्योतिर्मयमित्येतत्, तेन पात्रेणेव अपिधानभूतेन । सत्यस्य आदित्यमण्डलस्थस्य ब्रह्मणः । अपिहितम् आच्छादितम् । मुख द्वारम् । तत् त्व हे पूषन्, अपावृणु [अपसारय] । सत्यधर्माय तव सत्यस्योपासनात् सत्य धर्मो यस्य मम सोऽह सत्यधर्मा तस्मै मह्यम्, अथवा यथाभूतस्य धर्मस्यानुष्ठात्रे । दृष्टये तव सत्यात्मन उपलब्धये ॥ १५ ॥

पूर्षन्नेक ऋषे यम सूर्य प्राजापत्य व्यूह रश्मीन्त्समूह
तेजो यत्ते रूपं कल्याणतम तत्ते पश्यामि ।
योऽसावसौ पुरुषः सोऽहमस्मि ॥ १६ ॥

( ख० ) पूषन्नेकर्ष इति । सूर्यदेवत्या त्रिष्टुप् । पोषणात् पूषा रविः, तत्सबोधन हे[4] पूषन् । हे एकर्षे[5] एक एव ऋषतीत्येकर्षिः, तत्सबोधन हे एकर्षे । [त्वया ? तथा] सर्वस्य

---

१. सत्यधर्मः–ख० ।　२. प्रकीर्तितः प्रकाशितः–क० ।　३ इत्युक्तम्–क० ।
४ 'हे पूषन्' नास्ति–आ० ।　५. 'एक एव…हे एकर्षे' नास्ति–आ० ।

संयमनाद्यम , हे यम । सूर्य सु ईरणात् सूर्यः, तत्संबोधनम् । प्रजापतेरपत्य प्राजापत्यः, तत्सं-बोधन हे प्राजापत्य । एव मस्तूय प्रार्थयते–व्यूह रश्मीनिति । रश्मीन् व्यूह विगमय । समूह तेजः । तेज· तापक [1]यज्ज्योतिस्तत् समूह एकीकुरु । यत्ते रूप कल्याणतम तत्ते पश्यामि । ते तव यत्कल्याणतम मङ्गलतम रूपम् । तत् ते तव प्रसादात् तद्रूपमहं पश्यामि । किं च, योऽसावसौ पुरुष सोऽहमस्मि । योऽसौ मण्डलस्थो [2]व्याहृत्यवयवो यः पुरुषः [3]पुरुषा कारत्वात् पूर्णत्वाद्वा पुरुषः । सोऽहमस्मीत्यादित्यात्मानमेकीकृत्य[4] पश्यामीति ॥ १६ ॥

( क० ) पाठस्तु—पूषन्नेक ऋप यम सूर्द प्राजापत्य व्यूह रश्मीन् समूह तेजो यत्ते रूप कल्याणतम तत्ते पश्यामि । योऽसावसौ पुरुष. सोऽहमस्मि ॥ १६ ॥ इति । हे पूषन् , जगत. पोषणात् पूषा रवि. । तथा एक एव [ऋषति गच्छतीत्येक]ऋषि., हे एकर्षे । तथा सर्वस्य संयमनाद्यमः, हे यम । तथा रश्मीना प्राणाना रसाना च स्वीकरणात् सूर्यः, हे सूर्य । प्रजापतेरपत्य [प्राजापत्यः, हे] प्राजापत्य । व्यूह विगमय । रश्मीन् स्वान् । समूह एकीकुरु उपसंहर । तेजः तापक ज्योतिः । यत् ते तव रूप कल्याणतमम् अत्यन्तशोभनम् । तत् ते तवात्मन. प्रसादात् पश्यामि । किं च, अहं न [5]च त्वा भृत्यवद् याचे । योऽसौ [आदित्य]-मण्डलस्थो व्याहृत्यवयव पुरुषः पुरुषाकारत्वात्, पूर्ण [6]वाऽनेन प्राणबुद्ध्यात्मना जगत् समस्तमिति पुरुषः, [पुरीष ? पुरि श]यनाद्वा [पुरुषः] । सोऽहमस्मि भवामि ॥ १६ ॥

वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् ।
ॐ३ क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर ॥ १७ ॥

( ख० ) एव ब्रह्मोपासकस्य योगिन· शरीरपातोत्तरकाल शरीर यद्भवति तदाह–वायुरनिलमिति । लिङ्गोक्तदेवत्य यजुः । वायुः प्राणः । अनिल [7]सूर्यात्मानम् । अमृतम् अधिदैवत स्वप्रकृतिं हिरण्यगर्भाख्य प्राण प्रतिपद्यते । अथ अनन्तरम् । इद प्रतीयमान शरीरम् । अग्नौ हुत भस्मान्त भवति, कृतप्रयोजनत्वात् । इदानीं योगिनो बलभूत प्रभूत सर्ववेदसार सर्ववेदमयमक्षर कथ्यते–ओमिति । अवतेराप्नोतेर्वा ओमिति परमाक्षरस्य योगिनो

---

१ यज्ज्योतिस्तज्ज्योतिः–ख-आ० । २. व्याकृतावयवः–ख-आ० । ३. पुरुषा आहु –ख-आ० । ४ आदित्यम्–आ० । ५. तु–शा० । ६ अनेन वा–क० । ७. सूर्यात्मम्–आ० ।

बलभूतस्य परस्य ब्रह्मणः प्रणवाख्यस्य स्थूलादिगुणयुक्तस्य ब्रह्मा ऋषिः, छन्दो गायत्रम्, परमात्मा देवता शब्दब्रह्मारम्भे विनियोगः। अपि च यागहोमादिषु शान्तिपौष्टिकर्मसु चान्येष्वपि काम्यनैमित्तिकादिष्वपि सर्वेष्वस्योङ्कारस्य विनियोगः। ओमिति परब्रह्मणो नामनिर्देशः—"ॐ तद्ब्रह्म" इत्यादिश्रुतेः। ब्रह्मविष्णुशिवपरब्रह्मात्मकोऽकारोकारमकारार्धमात्रात्मकोऽयमोङ्कार एवान्त्यकाल उत्तारक इति दर्शयति। आत्मरूपश्च ॐकारस्ततस्तेन ततम्। इदानीं कृत स्मारयति—कृत स्मरेति। लिङ्गोक्तदेवत्य यजुः। क्रतोः, क्रतुः सङ्कल्पोऽनेन सङ्कल्पविषयो योगिभिर्लक्ष्यते। हे क्रतो हे श्रीभगवन्नग्ने, स्मर कृत ब्रह्मचर्ये मया कृत तत् स्मर न विस्मर्तव्यम्। हे क्रतो, गार्हस्थ्ये मया यत्कृत तच्च स्मर। पुनश्च यत्साधु कृत तत्सर्व कृत स्मर कृत स्मरेति। आदरार्थं पुनर्वचनम्। अथवा क्रतुशब्देन यज्ञः सबोध्यते। हे क्रतो हे यज्ञ। यज्ञशब्दोपलक्षितो यज्ञाध्यक्षो यज्ञहविर्भागभुक् श्रीभगवान् विष्णुः सबोध्यते। श्रीभगवन् विष्णो, कृत स्मर मया कृत त्वया कारित स्मर। कृत स्मर [1]कृत स्मरेति ॥१७॥

( क० ) पाठस्तु—वायुरनिलममृतमथेद भस्मान्तꣳ शरीरम्। ॐ३ क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर ॥ १७ ॥ इति। अथेदानीं मम मरिष्यतो वायुः प्राणोऽध्यात्मपरिच्छेद हित्वाऽधिदैवतात्मान सर्वात्मकमनिलममृत सूत्रात्मान प्रतिपद्यतामिति [2]वाक्ययोगः। लिङ्ग चेद ज्ञानकर्मसंस्कृतमुत्क्रामत्विति द्रष्टव्यम्, मार्गयाचनसामर्थ्यात्। अथेद शरीरमग्नौ हुत भस्मान्त [ भस्मावशेष ] भूयात्। ॐ३मिति यथोपासनमो प्रतीकात्मकत्वात् सत्यात्मकमग्न्याख्यं ब्रह्माभेदेनोच्यते। हे क्रतो सकल्पात्मक। स्मर यन्मम स्मर्तव्य तस्य कालोऽय प्रत्युपस्थितः, अतः स्मर एतावन्त काल भावित कृतमग्ने स्मर यन्मया बा[ल्य]प्रभृत्यनुष्ठित कर्म तच्च स्मर। क्रतो स्मर कृत स्मरेति पुनर्वचनमादरार्थम् ॥ १७ ॥

अग्ने॒ नय॑ सु॒पथा॑ रा॒ये अ॒स्मान् विश्वा॑नि देव व॒युना॑नि वि॒द्वान्।
यु॒यो॒ध्य॒स्मज्जु॑हुरा॒णमेनो॒ भूयि॑ष्ठां ते॒ नम॑ उ॒क्तिं विधेम ॥ १८ ॥

( ख० ) मार्ग याचते—अग्ने नयेति। आग्नेयी त्रिष्टुप्। हे श्रीभगवन्नग्ने हे सर्वज्ञ। नय सुपथा दक्षिणमार्गनिवृत्त्यर्थं [3]सु शोभनेन मार्गेण देवयानेनास्मान् नय प्रापय। राये

---

१ 'कृतं स्मर' इति वारचतुष्टयं पठ्यते–ख०। २ वाक्यशेषः–शा०।
३. सुशब्दः–ख-आ०।

धनाय, कर्मज्ञानफलोपभोगाय वा । अस्मान् यथोक्तज्ञानकर्मकारिणो नयेति संबन्धः । हे देव विश्वानि [1]सर्वाणि । वयुनानि कर्माणि प्रज्ञानानि तदनुष्ठितानि च । विद्वान् ज्ञानवान् त्वं सुपथा नयेति संबन्धः । किं च, युयोध्यस्मज्जुहुराणमेनः । अस्मत् अस्मत्तः सकाशात् । जुहुराणं कुटिलं [2]कुटिलवचनात्मकम् । एनः तत्कृतं चैनः पापम् । युयोधि योधय पृथक्कुरु । [3]ततो विशुद्धाः सन्त इष्टं फलं प्राप्नुयामेत्यभिप्रायः । किन्तु वयमिदानीं किमपि कर्तुं न शक्नुमः, अपि तु भूयिष्ठां बहुतराम् । नमउक्तिं नमस्कारवचनम् । ते तुभ्यम् । विधेम कुर्मः । केवलनमस्कारवचनेन परिचरेमेत्यर्थः ।। १८ ।।

वन्देऽहं मङ्गलात्मानं भास्वन्तं वेदविग्रहम् ।
याज्ञवल्क्यं मुनिश्रेष्ठं कृष्णं हरिहरं प्रभुम् ।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीवासुदेवपुरीपूज्यपादपरमकारुण्यासादित-
श्रीकृष्णभक्तिसाम्राज्यस्य श्रीमज्जातवेदभट्टोपाध्यायस्य सूनुना चतुर्वेदि-
श्रीमदानन्दभट्टोपाध्यायेन विरचिते काण्ववेदमन्त्रभाष्य-
संग्रहे चत्वारिंशोऽध्यायः ।। ४० ।।[4]

( क० ) पुनरन्येन मन्त्रेण मार्गं याचते । पाठस्तु—अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ।। १८ ।। इति[5] । ॐ ३ खं ब्रह्म ।। हे अग्ने, नय गमय । सुपथा [6]शोभनमार्गेण । सुपथेति विशेषणं दक्षिणमार्गनिवृत्त्यर्थम् । [7]निर्विण्णोऽहं दक्षिणेन मार्गेण गतागतलक्षणेन, अतो याचे त्वां पुनःपुनर्गमनागमनवर्जितेन शोभनेन पथा नय । राये धनाय, कर्मफलभोगायेत्यर्थः । अस्मान् यथोक्तधर्मफलविशिष्टान् । विश्वानि सर्वाणि । हे देव, वयुनानि कर्माणि प्रज्ञानानि [8]च । विद्वान् जानन् । किं च, युयोधि वियोजय विनाशय । अस्मत् अस्मत्तः । जुहुराणं कुटिलं [9]वञ्चनात्मकम् । एनः पापम् । ततो वयं विशुद्धाः सन्त इष्टं प्राप्स्याम इत्यभिप्रायः । किन्तु वयमिदानीं ते न शक्नुमः परिचर्यां कर्तुम् । भूयिष्ठां बहुतराम् । नमउक्तिं नमस्कारवचनं विधेम नमस्कारेण परिचरेमेत्यर्थः ।

---

१. सर्वाणि कर्माणि–ख-आ० । २. कुटिलवञ्चनात्मकम्–आ० । ३. तत्ते–आ० ।
४. ख० समाप्तौ–"यादृशं पुस्तकं ", "भग्नपृष्ठकटि " इति द्वौ श्लोकौ विद्येते ।
५ "ॐ ३ खं ब्रह्म" नास्ति–शा० । ६ शोभनेन मार्गेण–शा० ।
७. निर्विण्णो–क० । ८ वा–शा० । ९. वचनात्मकम्–क० ।

अथ [1]पूर्वपक्षः— "अविद्यया मृत्यु तीर्त्वा विद्ययाऽमृतमश्नुते" [ ई० ११ ], "विनाशेन मृत्यु तीर्त्वा सम्भूत्याऽमृतमश्नुते" [ई० १४] इति श्रुत्वा केचित् संशय कुर्वन्ति । अतस्तन्निर्द्धारणार्थं सक्षेपतो विचारणा करिष्यामः । तत्र तावत् किं निमित्तः सशय इति ? उच्यते—विद्याशब्देन मुख्या परमात्मविद्यैव कस्मान्न गृह्यते, अमृतत्व च ? ननूक्तायाः परमात्मविद्याया. कर्मणश्च विरोधात् समुच्चयानुपपत्तिः । सत्यम्, विरोधस्तु नावगम्यते, विरोधाविरोधयोः शास्त्रप्रमाणकत्वात्, यथाऽविद्यानुष्ठान विद्योपासन च शास्त्रप्रमाणक तथा [ तद्विरोधा]विरोधावपि ।[2] यथा च—"न हिंस्यात् सर्वा भूतानि" इति शास्त्रादवगत पुनः शास्त्रेणैव बाध्यते—"अध्वरे पशु हिंस्यात्" इति, एव विद्याऽविद्ययोरपि स्यात् । विद्याकर्मणोश्च [समुच्चयः] न, "दूरमेते विपरीते विषूची अविद्या या च विद्येति [ज्ञाता]" [कठो० १।२।४] इति श्रुतेः । "विद्या चाविद्या च" [ ई० ११ ] इति वचनादविरोध इति चेत्, न, [ हेतुस्वरूपफलविरोधात् । विद्याविद्या]विरोधाविरोधयोर्विकल्पासभव[ात् समुच्चयविधाना]दविरोध एवेति चेत्, न, सहसभवानुपपत्तेः । क्रमेण [ एकाश्रये ] स्याता विद्याविद्ये इति चेत्, न, विद्योत्पत्तौ तदाश्रयेऽविद्यानुपपत्तेः । न ह्यग्निरुष्णः प्रकाशश्चेति विज्ञानोत्पत्तौ यस्मिन्नाश्रये तदुत्पन्न तस्मिन्नेवाश्रये शीतोऽग्निरप्रकाशो वेत्यविद्याया उत्पत्तिः । नापि सशयोऽज्ञान वा, "यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ।" [ ई० ७ ] इति शोकमोहाद्यसभवश्रुतेः । अविद्याया असभवात्तदुपादानस्य कर्मणोऽप्यनुपपत्तिमवोचाम । "अमृतमश्नुते" [ ई० ११ ] इत्यापेक्षिकममृतम् । विद्याशब्देन परमात्मविद्याग्रहणे—"हिरण्मयेन" [ ई० १५ ] इत्यादिना द्वारमार्गयाचनमनुपपन्न स्यात् । तस्माद्यथाऽस्माभिर्व्याख्यात[3] एव मन्त्राणामर्थ इत्युपरम्यते ॥ १८ ॥

[4]इति श्रीपरमहसपरिव्राजकाचार्यश्रीवासुदेवपुरीश्रीकृष्णभक्तिसाम्राज्यश्रीमज्जातवेदोपाध्यायस्य सूनुना चतुर्वेदिश्रीमदानन्दबोधभट्टोपाध्यायेन विरचिते शुक्लयजुःकाण्ववेदमन्त्रभाष्यसग्रहे चत्वारिंशोऽध्यायः समाप्तिमगमत् ॥४०॥[5]

---

१ "अथ पूर्वपक्षः" नास्ति–शा । २. तथा–क० । ३ 'अस्माभिः' नास्ति–शा० ।
४. पुष्पिका शाङ्करभाष्यप्रतिकूला ।
५. क० समाप्तौ—"तत्सत्कृष्णार्पणमस्तु । सवत्" इति दृश्यते ।

न्यासः—क ५ क ३, एतयोरन्तर क ५ क ३̇, वा क ५̇ क ३ , अनयोर्वर्गस्तुल्य एव–रू ८ क ६०̇ ।

द्वितीयस्य न्यासः—क ५ क ३ क २̇, वा क ५ क ३ क २; अनयोर्वर्गस्तुल्य एव–रू १० क ६० क ४०̇ क २४̇ ।

इति करणीवर्गः ॥

[1]करणीवर्गमूले सूत्रम्—

करणीवर्गे नियमः सङ्कलितमितानि खण्डानि स्युः ।<br>
एककरण्या वर्गे रूपाण्येव द्वयोः सरूपा च ॥ ४१ ॥

तिसृणा तिस्रश्च तथा षडपि चतुर्णां दशापि च पञ्चानाम् ।<br>
षण्णामपि च पञ्चदशेत्येवं ज्ञेयानि खण्डानि ॥ ४२ ॥

सङ्कलितात्मकमूलतन्मितं खण्डैक्यतुल्यरूपाणि ।<br>
रूपकृतेः प्रोज्झ्य पद तेनोनयुतानि रूपाणि ॥ ४३ ॥

---

१. करणवर्गमूल इति । करणीवर्गे सरूपाणि करणीखण्डानि भवन्ति । यथा एककरण्या वर्गे तत्करण्येव रूपराशि. । द्वयोः करण्योर्वर्गे खण्डत्रयम् । तत्र करणीद्वयतुल्यो रूपराशिरेका च करणी । तिसृणा करणीनां वर्गे खण्डषट्कम् । तत्र करणीत्रयतुल्यो रूपराशिस्तिस्र करण्यश्च । चतसृणां करणीवर्गे खण्डदशकम् । तत्र करणीचतुष्टयतुल्यो रूपराशिः षट् च करणीखण्डानि । पञ्चाना करणीना वर्गे पञ्चदश खण्डानि । तत्र करणीपञ्चकरूपाणि दश च करणीखण्डानि स्यु । एवमग्रेऽपि । यथा—

$( \sqrt{२} )^{२} = २$

एवम् $( \sqrt{२} + \sqrt{३} )^{२} = २ + ३ + \sqrt{२४} = ५ + \sqrt{२४}$

एवम् $( \sqrt{२} + \sqrt{३} + \sqrt{५} )^{२} = २ + ३ + ५ + \sqrt{२४} + \sqrt{४०} + \sqrt{६०}$ ।

एवमग्रेऽपि ।

प्रत्यक्षस्यैवात्र प्रामाण्यमतो युक्तमेवोक्तमाचार्येण—"करणीवर्गे नियम. सङ्कलितमितानि खण्डानि स्युः" इत्यादिना ।

दलिते करणीखण्डे सन्ति करण्यः कृताः शेषाः ।
महतीरूपाणि तयोः प्राग्वत्स्याव्येऽपरे खण्डे ॥ ४४ ॥

सङ्कलितात्मकमूलाभावे खण्डेषु तेषु खण्डानि ।
विश्लेष्य यथा मूलप्राप्तिः स्यादन्यथैवासत् ॥ ४५ ॥

अथ प्रकारान्तरमाह—

[1]अथवा सर्वकरण्यश्चतुर्विभक्ता न्यसेदनल्पायाः ।
आद्यासन्नकरण्योर्हनिराद्याप्ता च तत्पदं करणी ॥ ४६ ॥

ते एव तया भक्ते करणीखण्डेऽपरे भवतः ।
क्रमशस्तैरपि खण्डैः शेषा भक्ताः परा करणी ॥ ४७ ॥

---

१ अथवेति । करणीवर्गस्त्वेव भवति—"स्थाप्योऽन्त्यवर्गश्चतुर्गुणान्त्यनिघ्ना" इत्यादिना । तत्र प्रथमस्थाने करणीवर्गः । ततः प्रथमकरणीद्वितीयादिकरणीघातश्चतुर्गुणाः । ततो द्वितीयकरणीवर्गः । ततो द्वितीयकरणीतृतीयादिकरणीघाताश्चतुर्गुणाः । एवमग्रेऽपि । एवं यावन्ति करणीखण्डानि तावतामवश्यं वर्गाः स्युः । वर्गत्वात्तेभ्योऽवश्यं मूलप्राप्तिः स्यात् । तानि च मूलानि करणीतुल्यान्येव । तथा च वर्गराशौ यो रूपगणः स एव मूलकरणीयोगः । परमस्ति च रूपरीत्या न करणीप्रकारेण । यदि करणीरीत्यैव करणीयोगो ज्ञायेत्तदा विश्लेषसूत्रेण पृथक्करणं सुगमम् । परन्तु करणीवर्गे रूपरीत्या करणीयोगो वर्तते, अतस्तदर्थमन्यथा यतितव्यम्, "चतुर्गुणस्य घातस्य युतिवर्गस्य चान्तरम् । राश्यन्तरकृतेस्तुल्यं द्वयोरव्यक्तयोर्यथा ॥" इति प्रसिद्धनियमात् । अत्र यानि रूपाणि स एव करणीयोगः । अतो रूपवर्गः करणीयुतिवर्गः । वर्गराशौ प्रथमकरणीद्वितीयादिकरणीघाताश्चतुर्गुणाः कानिचित्करणीखण्डानि च सन्ति । तेषां योगे कृते प्रथमकरण्या शेषकरणीयोगस्य च घातश्चतुर्गुणः स्यात् । युतिवर्गोऽपि प्रथमकरण्या शेषकरणीयोगराशेश्चास्ति । अतस्तयोरन्तरे प्रथमकरण्या शेषकरणीयोगस्य चान्तरवर्गो भवेत् । एवमन्तरवर्गस्य मूलं प्रथमकरण्या शेषकरणीयोगस्य चान्तरं विद्यते । रूपाणि तु तयोरेव योगः । योगान्तरे च ज्ञाते—"योगान्तरेणोनयुतोऽर्द्धित" इति नियमेन तयोः (करण्योः) ज्ञानं सुलभम् । एवं मूले करणीद्वयमागतम् । तत्र का प्रथमकरणी । को वा शेषकरणीयोग इति विचारे—लघुस्तु प्रथमा करणी, महती तु शेषकरणीयोगः ।

तैरपि मुहुः सलब्धैश्शेषाः करणीर्भजेत्प्राग्वत् ।
पदकरणीवर्गयुति विशोधयेद् भाज्यरूपेभ्यः ॥ ४८ ॥
एव कृते तु न यदा तदा भवेद्योगजा करणी ।
विश्लेष्य समुत्पाद्याः करणीवर्गे करण्योऽन्याः ॥ ४९ ॥

पूर्वसिद्धवर्गाणा प्रथमो वर्गः—रू ५ क २४ । अत्रैकमेव करणीखण्डम् ।

अत्र परिभाषितम्—

करणीखण्डमितिर्वा द्विगुणा रूपाङ्घ्रियुक्ततो मूलम् ।
रूपदलेन $\frac{१}{२}$ विहीन सङ्कलितपद भवत्येव ॥ ५० ॥

करणीखण्ड द्विगुण २ रूपाङ्घ्रि $\frac{१}{४}$ युक्त $\frac{९}{४}$ मूल $\frac{३}{२}$ रूपार्द्धेन $\frac{१}{२}$ विहीनम् । एतदेव सङ्कलितपदमेतन्मिता करणी क २४ रूपकृतेः २५ अपास्य शेषमूल १ अनेनोनयुतानि रूपाणि ४।६ दलिते करणीखण्डे क २ क३ एते एव मूलकरण्यौ क ३ क २ ।

---

अनन्तर द्वितीयादिकरणीयोगाद् द्वितीयकरणी तृतीयादिकरणीघाताच्चतुर्गुणाच्चोक्तवद् द्वितीयकरणी पृथक्कार्या । एव तृतीयादिकरणीनामपि पृथक्करण सुलभम् ।

अत्र रूपवर्गात् तथा करणीना योगो विशोधनीयो यथा मूलप्राप्ति स्यात् । यदि केनापि प्रकारेण मूलप्राप्तिर्न भवेत्तदा तन्मूलमेवासद्धोध्यम् । अत उक्तमाचार्येण—"सङ्कलितात्मकमूलतन्मित खण्डैक्यतुल्यरूपाणि । रूपकृते. प्रोज्झ्य पद तेनोनयुतरूपाणि ॥" इत्यादि ।

अथ द्वितीय. प्रकार —

करणीवर्गस्वरूप प्रथम कथितम् । तत्प्रकारान्तर्गतमेवेद प्रकारान्तरम् । यथा—

$\sqrt{२}$, $\sqrt{३}$, $\sqrt{५}$ अस्य वर्ग.— " स्थाप्योऽन्त्यवर्गश्चतुर्गुणान्त्यनिघ्नाः " इत्यादिना—

$१०, \sqrt{२४}, \sqrt{४०}, \sqrt{६०}$

इत्यत्र $\sqrt{२४}$ = प्र क × द्वि. क. × ४

$\sqrt{४०}$ = प्र. क. × तृ. क × ४

$\sqrt{६०}$ = द्वि. क × तृ. क. × ४

यदि करणीखण्डान्यग्रेऽपि सन्ति तदापीत्थमेव ।

$\sqrt{२४}, \sqrt{४०}, \sqrt{६०}$ = प्र क × द्वि. क. × ४, प्र. क × तृ. क × ४, द्वि. क. × तृ. क. × ४

द्वितीयवर्गस्य रू ११ क ७२ क ४८ क २४ अत्र करणीखण्डमितिः ३ द्विगुणा ६ रूपाङ्घ्रि $\frac{१}{४}$ युता $\frac{२५}{४}$ मूल $\frac{५}{२}$ रूपदलेन $\frac{१}{२}$ विहीन सङ्कलितपद २ एतन्मिते द्वे करणीखण्डे अष्टचत्वारिंशतिचतुर्विंशतिकरणी ४८।२४ तुल्यानि रूपाणि ७२ रूपकृतेः १२१ अपास्य शेष ४९ मूल ७ अनेन रूपाणि ११ ऊनयुतानि ४।१८ दलिते जाते करणी-खण्डे क २ क ९ अत्र महतीरूपाणि प्रकल्प्य न्यासः—रू ९ क ७२ द्विसप्ततितुल्यानि रूपाणि रूपकृतेः ८१ प्रोज्झ्य ९ पद ३ ऊनयुतरूपाणाम् ६।१२ अर्द्धे ३।६ ।

यथाक्रमं न्यासः—क ६ क ३ क २ अथवा द्विसप्ततिचतुर्विंशतिमितकरणीतुल्य-क ७२ क २४ रूपाणि ९६ रूपकृतेः १२१ प्रोज्झ्य २५ पदं ५ ऊनयुतरूपाणाम् ६।१६ अर्द्धे जाते मूलकरण्यो क ३ क ८ ।

अत्र महतीरूपाणि प्रकल्प्य रू ८ क ४८ रूपकृतेः ६४ अष्टाविंशतिकरण्यास्तु-ल्यरूपाण्यपास्य १६ मूलम् ४ ऊनयुत ४।१२ रूपाणामर्द्धे जाते मूलकरण्यौ क २ क ६ ।

यथाक्रम न्यासः—क ६ क ३ क २ अथवा द्विसप्तत्यष्टचत्वारिंशतिकरण्यास्तु-ल्यानि रूपाणि १२० अपास्य १ मूलम् १ ऊनयुतरूपाणाम् १०।१२ अर्द्धे जाते मूल-करण्यौ क ५ क ६ अत्र महतीत्युपलक्षणम् , क्वचिदल्पापि ।

---

$\sqrt{२४}$, $\sqrt{४०}$, $\sqrt{६०}$ एताश्चतुर्गुणिता सन्ति ।

$\therefore$ चतुर्भिर्विभक्ता $\sqrt{६}$, $\sqrt{१०}$, $\sqrt{१५}$ = प्र. क. × द्वि. क., प्र. क. × तृ क., द्वि क. × तृ. क

अत्र यदि खण्डद्वयं संगुण्यापरखण्डेन विभाज्यते तदा एककरणीखण्डस्य वर्गोऽवशिष्यते, तन्मूलमेककरणीखण्डम् । यथा—

$$\sqrt{६} \times \sqrt{१०} = (\text{प्र क.} \times \text{द्वि. क.})(\text{प्र. क.} \times \text{तृ. क.}) = \text{प्र.}^{२}\text{क} \times \text{द्वि क.} \times \text{तृ. क.}$$

$$\therefore \frac{\sqrt{६} \times \sqrt{१०}}{\sqrt{१५}} = \frac{\text{प्र क}^{२} \times \text{द्वि क} \times \text{तृ क}}{\text{द्वि क} \times \text{तृ क}} = \text{प्र क}^{२} = \sqrt{४} = २$$

$$\therefore \text{प्र क} = \sqrt{२}$$

एवमग्रेऽपि
$$\frac{\sqrt{१०} \times \sqrt{१५}}{\sqrt{६}} = \frac{(\text{प्र क.} \times \text{तृ क.})(\text{द्वि. क} \times \text{तृ. क.})}{\text{प्र. क.} \times \text{द्वि. क.}}$$

$$= \frac{\text{तृ. क.}^{२} \times \text{प्र. क.} \times \text{द्वि. क.}}{\text{प्र. क.} \times \text{द्वि क.}} = \text{तृ क}^{२} = ५$$

रूपाणि प्रकल्प्य न्यासः—रू ५ क २४ प्राग्वज्जाते मूलकरण्यौ क २ क ३ ।

यथाक्रम न्यासः—क ६ क ३ क २ ।

तृतीयवर्गस्य न्यासः—रू १७ क १४० क ८४ क ६० क ५६ क ४० क २४ ।

अत्र वर्गे षट्पञ्चाशच्चत्वारिंशच्चतुर्विंशतिकरणीतुल्यानि—क ५६ क ४० क २४ रूपाणि रूपकृतेः २८९ अपास्य शेषं १६९ मूलं १३ ऊनाधिकरूपाणाम ४।३० अर्द्धे २।१५ जाते मूलकरण्यौ क २ क १५ अत्र महतीरूपाणि रू १५ क १४० क ८४ क ६० अत्र रूपकृतेः २२५ चतुरशीतिषष्टिकरण्यास्तुल्यानि रूपाण्यपास्य शेपमूलम ९ ऊनयुन-रूपाणामर्द्धे जाते मूलकरण्यौ क ३ क १२ ।

महतीरूपाणि रू १२ क १४० शेपकरण्यास्तुल्यानि रूपकृतेः १४४ अपास्य शेषं ४ मूलं २ ऊनयुनरूपाणामर्द्धे जाते मूलकरण्यौ क ५ क ७ ।

मूलकरणीना यथाक्रम न्यासः—क ७ क ५ क ३ क २ ।

चतुर्थवर्गस्य न्यासः—रू १७ क १२८ क १२० क १०८ क ९६ क ६० क ४० क २० अत्र करणीखण्डानि सप्त वर्तन्ते ७ द्विगुणानि १४ रूपचतुर्थांशयुतम् $\frac{५७}{४}$ अस्य सङ्कलितपदाभावः, यतः स्वबुद्धया इय क १२८ चतुर्वर्गेण भक्ता लब्धं ८ चतुर्ण्णामिसमे खण्डे ३।१ स्वघ्ने ९।१ पूर्वलब्ध्या ८ गुणिते करण्यौ क ७२ क ८ खण्डाष्टकेऽपि सङ्क-

---

$\therefore \text{तृ क} = \sqrt{५}$

$$\text{पुनस्तथैव } \frac{\sqrt{६} \times \sqrt{१५}}{\sqrt{१०}} = \frac{(\text{प्र क} \times \text{द्वि क.}) \times (\text{द्वि क} \times \text{तृ क})}{\text{प्र क.} \times \text{द्वि क.}}$$

$$= \frac{\text{द्वि. क}^{२} \times \text{प्र क.} \times \text{तृ क}}{\text{प्र. क} \times \text{तृ क.}} = \text{द्वि क}^{२} = \sqrt{९} = ३ \text{ द्वि क} = \sqrt{३}$$

एवमागतानि करणीखण्डानि $\sqrt{२}$, $\sqrt{३}$, $\sqrt{५}$

अस्य वर्गतुल्यान्येव रूपाणि १० वर्गे वर्तन्त एव । $\therefore$ १०−१०=०

सिद्धत्यनेन यदि करणीखण्डतुल्यानि रूपाणि वर्गस्थितरूपतुल्यानि भवेयुस्तदा मूलं युक्तमेवेति ।

लितपदाभावः । अतः करणीय क ९६ द्विवर्गेण ४ भक्ता लब्ध २४ द्विकस्य समे खण्डे १।१ पूर्वलब्ध्या २४ गुणिते करणीखण्डे क २४ क २४ ।

यथाक्रम न्यस्ते जातम्—रू १७ क १२० क ७२ क ६० क ४८ क ४० क २४ क २४ क २० क १२ क ८ अत्र करणीखण्डदशक वर्तते १० द ( खण्डनवकेऽपि सङ्कलितपदाभावः । अतः करणीय क १०८ षड्वर्गेण भक्ता लब्ध ३ षण्णामसमे खण्डे ४।२ अनयोर्वर्गौ १६।४ पूर्वलब्ध्या गुणितौ जाते करणीखण्डे क ४८ क १२ ) शाना सङ्कलितपद ४ इयं खण्डसंख्या खण्डचतुष्टयस्यास्य क २४ क २० क १२ क ८ रूपकृतेः २८९ करण्यास्तुल्यानि रूपाण्यपास्य मूलम् १५ ऊनयुतरूपाणामर्द्धे करण्यौ क १ क १६ महतीरूपाणि १६ क १२० क ७२ क ६० क ४८ क ४० क २४ षण्णा करणीना सङ्कलितपद ३ मितखण्डत्रयस्यास्य क ४८ क ४० क २४ तुल्यानि रूपाणि रूपकृतेरपास्य शेष १४४ मूल १२ ऊनयुतरूपार्द्धे करणीखण्डे क २ क १४ पुनर्महतीरूपाणि प्रकल्प्य रू १४ क १२० क ७२ क ६० करणीत्रये करणीद्वयस्यास्य क ७२ क ६० करण्यास्तुल्यानि रूपाणि रूपकृतेरपास्य मूल ८ ऊनयुतरूपाणामर्द्धे करणीखण्डे क ३ क ११ पुनर्महतीरूपाणि रू ११ क १२० करणीतुल्यानि रूपाणि रूपकृतेरपास्य मूल १ ऊनयुतरूपाणामर्द्ध जाते करणीखण्डे क ५ क ६ ।

---

अत्रोदाहरण प्रथमप्रकारेण—

$११+\sqrt{७२}+\sqrt{४८}+\sqrt{२४}$

$\because$ $१२१-(४८+२४)=१२१-७२=४९$

अस्य मूलम् ७=राश्यन्तरम् ।

$\therefore \frac{११\pm७}{२}$ ९, २ करणीखण्डे ।

अत्र पुनर्महतीरूपाणि प्रकल्प्य पूर्ववत्क्रियाकरणेन ८१−७२=९ अस्य पदम्=३

$\frac{९\pm३}{२}=६, ३$ करणीखण्डे ।

अतोऽत्र मूलम् $\sqrt{२}, \sqrt{३}, \sqrt{६}$

मूलकरणीना यथाक्रम न्यासः—क ६ क ५ क ३ क २ क १ ।

पञ्चमवर्गस्य न्यासः—रू ६० क २३०४ क १०२४ क ५७६ क २५६ क १४४ क ६४ ।

अत्र करणीषट्के करणीत्रयस्यास्य क २५६ क १४४ क ६४ करण्यास्तुल्यानि रूपाणि रूपकृतेः ३६०० अपास्य मूलं ५६ ऊनयुतरूपाणामर्द्धे करण्यौ क २ क ५८ महतीरूपाणि प्रकल्प्य रू ५८ क २३०४ क १०२४ क ५७६ करणीत्रये करणीद्वयस्यास्य क १०२४ क ५७६ करण्यास्तुल्यानि रूपाणि रूपकृतेः ३३६४ अपास्य मूलं ४२ ऊनयुतरूपाणामर्द्धे मूलकरण्यौ क ८ क ५० पुनर्महतीरूपाणि प्रकल्प्य रू ५० क २३०४ करण्यास्तुल्यानि रूपाणि रूपकृतेरपास्य मूल १४ ऊनयुतरूपाणामर्द्धे मूलकरण्यौ क १८ क ३२ ।

करणीना यथाक्रम न्यासः—क ३२ क १८ क ८ क २ ।

अथवा वर्गराशे रूपं हित्वा सर्वकरणीभ्यो मूलानि रू ६० रू ४८ रू ३२ रू २४ रू १६ रू १२ रू ८ एषामैक्यं वर्गराशिः रू २०० मूल ग्राह्य राशेर्यस्य तु करणीनाम तस्य स्यादिति करणीत्वात् ।

अथ द्वितीयप्रकारेण मूलानयनम्—

प्रथमवर्गस्य न्यासः—रू ५ क २४ अत्रैककरणीखण्डत्वाच्चतुर्भक्ता रू ५ क ६ आद्यासन्नद्वयहतिरित्याद्यासन्नेकरणीखण्डे न स्तः। करण्योर्घाते षट् ६ रूपाणि प्रकल्प्य

---

अथवा द्वितीयप्रकारेण ११, $\sqrt{७२}$, $\sqrt{४८}$, $\sqrt{२४}$

$\sqrt{७२}, \sqrt{४८}, \sqrt{२४} =$ प्र क $\times$ द्वि क $\times$ ४, प्र क $\times$ तृ क $\times$ ४, द्वि क $\times$ तृ क ४

चतुर्भिर्विभक्ता $\sqrt{१८}$, $\sqrt{१२}$, $\sqrt{६}$ = प्र क $\times$ द्वि क, प्र क $\times$ तृ क, द्वि क $\times$ तृ क

$$\therefore \frac{\sqrt{१८}\times\sqrt{१२}}{\sqrt{६}} = \frac{(\text{प्र क}\times\text{द्वि क})\ (\text{प्र क}\times\text{तृ क})}{\text{द्वि क}\times\text{तृ क}}$$

$$= \sqrt{३६} = ६ = \frac{\text{प्र क}^{२}\times\text{द्वि क}\times\text{तृ क}}{\text{द्वि क}\times\text{तृ क}} = \text{प्र क}^{२}$$

रू ६ योगे पञ्चयोगकृतेश्चतुराहतघातोनायाः पद विवरमित्यन्तरं रू १ योगो द्विष्ठोऽन्तरयुतहीनस्तावद्धितौ च राशी स्त इति सङ्क्रमणेन जाते खण्डे ३।२ एते एव मूलकरण्यौ क ३ क २। इति सक्रमणेन सिद्धयति।

द्वितीयवर्गस्य न्यासः—रू ११ क ७२ क ४८ क २४ चतुर्भक्ताः करण्यः रू ११ क १८ क १२ क ६ अत्राद्यासन्ने क १२ क ६ हतिः क ७२ आद्यया भक्ते क ४ मू २ अनया ते एव करण्यौ क १२ क ६ भक्ते जाते ते एव मूलकरण्यौ क ६ क ३।

मूलकरणीना यथाक्रम न्यासः—क ६ क ३ क २।

तृतीयवर्गस्य न्यासः—रू १७ क १४० क ८४ क ६० क ५६ क ४० क २४ चतुर्भक्ताः रू १७ क ३५ क २१ क १५ क १४ क १० क ६ आद्यासन्ने क २१ क १५ हतिः ३१५ आद्यया भक्ता ९ मूल ३ इय करणी क ३ अनया ते एव करण्यौ क २१ क १५ भक्ते जाते करण्यौ क ७ क ५ पूर्वया सह करणीत्रय क ७ क ५ क ३ एभिः खण्डैः करण्योऽनल्पादिभिर्भाज्या इति न्यस्ते जातम् | क १४ क १० क ६ | क ७ क ५ क ३ | यथाक्रम मूलकरण्यः क ७ क ५ क ३ क २ आसा वर्गाः क ४९ क २५ क ९ क ४ सर्वासा योगः क २८९ रूपकृतौ २८९ विशोधयेन।

चतुर्थवर्गस्य पूर्ववद्विश्लेष्य चतुर्भक्तकरणीना न्यासः—रू १७ क ३० क १८ क १५ क १२ क १० क ६ क ६ क ५ क ३ क २ अत्राद्यासन्ने क १८ क १५ हतिः क २७० आद्यया क ३० भक्ता ९ मूलं करणी क ३ अनया ते एव भक्ते क ६ क ५ जाते पूर्वया सह जाते पूर्वया सह जाताः क ६ क ५ क ३ शेषकरणीना मध्ये विन्यस्य जातं

---

$\therefore$ प्र क $= \sqrt{६}$

एवम् $\dfrac{\sqrt{१२} \times \sqrt{६}}{\sqrt{१८}} = \sqrt{४} = २ =$ तृ क$^{२}$

$\therefore$ तृ क $= \sqrt{२}$

एवम् $\dfrac{\sqrt{१८} \times \sqrt{६}}{\sqrt{१२}} = \sqrt{९} = ३ =$ द्वि क$^{२}$

# काण्वसंहिताभाष्यसंग्रहः

## आनन्दबोधभट्टोपाध्यायप्रणीतः

चतुर्थो दशकः

[ ३१–४० अध्यायात्मकः ]

डा० सुभद्रझा - व्रजवल्लभद्विवेदाभ्यां

सम्पादितः ।

सारस्वती सुषमा

भाद्रः २०११

# प्रास्ताविकं निवेदनम्

शुक्लयजुर्वेदीयकाण्वसहिताया ( २१–४० )अध्यायात्मकस्य चतुर्थदशकस्य श्रीमदानन्दबोधभट्टोपाध्यायविरचित काण्वसहिताभाष्यसग्रहनामकमप्रकाशितपूर्वं भाष्यं साम्प्रतमुपस्थाप्यते ग्रन्थरूपेण विदुषां वैदिकगवेषणानिरताना पुरत । ग्रन्थोऽय त्रयाणा कोषाणां साहाय्येन संपादित । तत्र क०ख०सकेताभ्या सूचितौ कोषौ सरस्वतीभवनस्थौ, 'ग' सकेतेन सूचितः कोषस्तु होशियारपुरस्थविश्वेश्वरानन्दवैदिकशोधसंस्थानस्य । अयमत्रासां मातृकाणा परिचयः—

( क ) ७७६ सख्याङ्कित., १–१४४ पत्रात्मकोऽय कोषः १०·१″ × ४·४″ आकारं बिभर्ति । प्रतिपत्रं विशतिपङ्क्तयः, प्रतिपङ्क्त्यक्षराणि चत्वारिशदासते । २१ अध्यादारभ्य ४०अ०पर्यन्त सपूर्णोऽय हस्तलेखः शुभ्रसुपुष्टतूलपत्राधारः शोभनदेवनागराक्षराङ्कितः शुद्धप्राय. । लिपिकारलिपिकालौ नैव ज्ञायेते ।

( ख ) ७७५ सख्याङ्कितः, १–९५, १०२–१३८ पत्रात्मक कोषोऽय ११″×५·४″ आकारक । प्रतिपत्रं विशतिपङ्क्तय', प्रतिपङ्क्त्यक्षराणि २५–३० वर्तन्ते । २१ अ० आरम्भ ४०अ०पर्यन्तः कोषोऽय मध्ये खण्डितः, ९६–१०१ पत्राणामभावात् । बभ्रुवर्णजीर्णतूलपत्राधारे पठितु योग्यैर्देवनागराक्षरैर्लिखितोऽशुद्धिभूयिष्ठोऽप्ययं हस्तलेख' संदिग्धपाठशोधनेऽतीव सहायकः । लिपिकारलिपिकालौ प्राग्वत् ।

(ग) ५६५१ संख्याङ्कित , १–७४ पत्रात्मक एप कोपः ९½″×४½″ आकार धारयति । प्रतिपत्र प्रायोऽष्टाविंशतिपङ्क्तय सन्ति । २१-३१ अध्यायात्मक' संपूर्णोऽयं हस्तलेखः सुपुष्टतूलपत्राधार शोभनदेवनागराक्षराङ्कितः, गैरिकादिप्रदानेन सशोधितोऽत एवातीव शुद्धः सटिप्पणश्च । टिप्पणी चात्रोवटमहीधरभाष्यानुसारिणी । लिपिकारलिपिकालौ प्राग्वत् ।

एषु क०ग०कोषौ समानस्रोतस्कौ, अशुद्धीना पाठभेदाना च प्रायः समानत्वात् । ग०कोषस्थगैरिकसशोधन विजातीयेन कोषेणापि तस्य परिचय प्रत्याययति, स च ख०कोषसदृशः स्यादिति वक्तुं शक्यते, सशोधनानां तदनुकूलत्वात् ।

सरस्वतीभवनेऽन्यत्र चाधुना काण्वसहिताया आनन्दबोधीयं सपूर्णं भाष्यमुपलब्धम्। किन्तु भाष्यप्रकाशनारम्भसमयेऽस्मत्सविधे चतुर्थदशकस्यैव द्वौ कोषावास्ताम्, अतः प्राक् तस्यैव संपादने मतिर्नियोजिता। द्वात्रिंशाध्यायतश्च होशियारपुरस्थकोषेणापि महत्त्वाधायक साहाय्यमाचरितम्। अत· सर्वप्रथम विश्वेश्वरानन्दवैदिकशोधसंस्थानसंचालकेभ्य श्रीविश्वबन्धुशास्त्रिभ्यो बहुमानपुरस्सरा कृतज्ञता ख्याप्यते।

चत्वारिंशाध्यायस्थख०कोषस्य सपादनमानन्दाश्रममुद्रितभाष्यसाहाय्येन, क०कोषस्य च शाङ्करभाष्यमवलम्ब्य कृतम्। अत्र भाष्यसशोधने यदावाभ्यां प्रयतित तदुभयोर्भाष्ययोर्दृङ्निक्षेपमात्रेणैव विद्वद्भिरवगन्तुं सुशकम्।

बहुषु स्थलेषु कोशत्रयेऽपि समाना अशुद्धयो विद्यन्ते। तादृशेषु स्थलेषु पाठसशोधने महाविद्यालयाध्यापकै. प्रत्युत्पन्नशेमुषीकै. श्रीरघुनाथशर्मभि· क्वचिच्च पण्डितराजश्रीराजेश्वरशास्त्रिद्रविडमहाभागै स्तुत्य साहाय्यमाचरितम्। भाष्योद्धृतवचनमूलस्थलपरिज्ञानदिशि म०म०श्रीगोपीनाथकविराजमहोदयै., वेदवाणीसपादकैः श्रीयुधिष्ठिरमीमासकैः, गोयनकाग्रन्थालयाध्यक्षै. श्रीकृष्णदत्तपन्तमहाशयैश्चानुकूलो निर्देशः प्रदत्त इति सर्वे महानुभावा. कथमावाभ्या संमाननीयेति न जानीव·। सरस्वतीभवनस्थान् श्रीरघुनाथपाण्डेय-श्रीचन्द्रभानुपाण्डेय श्रीतारकनाथभट्टाचार्य-श्रीनिशाकान्तपाठकाश्च सहयोगप्रदानाय धन्यवादैर्भूषयावः।

आशास्यतेऽवशिष्ट भाष्याशमपि शीघ्रमेव विदुषा पुरतः समुपस्थाप्येतेति। संपूर्णे भाष्ये प्रकाशिते सत्येव विस्तृता भूमिकाऽपि प्रकाशिता स्यात्। अधुना तु—"गच्छत स्खलन क्वापि" इति कुमारिलभट्टवचनमनुसरद्भ्यामावाभ्यां विद्वासस्त्रुटिक्षमापनाय प्रार्थ्यन्ते—

विदुषा वशवदाभ्याम्—

**डा० सुभद्रझा-**

**व्रजवल्लभद्विवेदाभ्याम्।**

(क १२ क १० क ६ / क ६ क ५ क ३) भक्ते जाना करणी क २ पूर्वया सह करणीचतुष्टय क ६ क ५ क ३ क २ पुनः शेषकरणीना मध्ये विन्यस्य जातं (क ६ क ५ क ३ क २ / क ६ क ५ क ३ क २) भक्ते लब्धं करणी क १।

मूलकरणीना यथाक्रम न्यासः—क ६ क ५ क ३ क २ क १ एतद्वर्गकरणीयोगं क २८९ रूपकृतेः २८९ विशोधयेत्।

पञ्चमवर्गस्य चतुर्भक्तस्य न्यासः—रू ६० क ५७६ क २५६ क १४४ क ६४ क ३६ क १६ आद्यासन्नद्वयहतिरित्यादिना प्राग्वन्मूलकरण्यः क ३२ क १८ क ८ क २ एतद्वर्गकरणीयोग क ३६०० रूपकृतेर्विशोधयेत।

अपि च—

प्रकृतिपुरन्दरनगरसगुणभुजतुल्याश्चतुर्गुणा विद्वन्।
वर्गे यत्र करण्यः स विश्वरूपाः पदं ब्रूहि ॥ २० ॥

न्यासः—रू १३ क ८४ क ५६ क २८ क २४ क १२ क ८ चतुर्भक्ता रू १३ क २१ क १४ क ७ क ६ क ३ क २ अत्राद्यासन्नहतिरादिहृता मूलं नास्त्यत एकविंशतिषण्मितकरण्योः क २१ क ६ वधे क १२६ चतुर्दशाकरण्या क १४ भक्ते जातं ९ अस्य मूल ३ करणीय क ३ अनया एकविंशतिषट्करण्यौ भक्ते जातं क ७ क २ यथाक्रमं क ७ क ३ क २ शेषकरणीना मध्ये विन्यस्य जानम (क ७ क ३ क २ / क ७ क ३ क २) भक्ते जाता करणी क १

मूलकरणीना यथाक्रम क ७ क ३ क २ क १ अथवा एकविंशतित्रिकरण्योर्घाते क ६३ सप्तकरण्या क ७ भक्ते मूल करणी क ३ अनया भक्ते करण्यौ क ७ क ३ यथाक्रमं क ७ क ३ क १ शेषकरणीनां मध्ये विन्यस्य जातम (क १४ क ६ क २ / क ७ क ३ क १) भक्ते जाता करणी

---

∴ द्वि क = √३

अतोऽत्र मूलम् √६, √३, √२

एतस्य रूपैस्तुल्यरूप वर्गोऽस्त्येव।

तेन वास्तविकमिद मूलम्।

इत्थ च प्रकारद्वयमध्ये कमपि प्रकारमाश्रित्यान्योदाहरणान्यपि सुगमानि।

क २ मूलकरणीना यथाक्रम क ७ क ३ क २ क १ चतुर्दशद्विकरण्योर्घाते २८ सप्तकरणी-भक्ते मूलं करणी क २ त एव तया भक्ते करण्यौ क ७ क १ यथाक्रम क ७ क २ क १ शेपकरणीनां मध्ये विन्यस्य जातम् |क २१ क ६ क ३ / क ७ क २ क १| भक्ते जाता करणी क ३ यथाक्रम क ७ क ३ क २ क १।

इत्याद्यैर्नाय मूलक्रमो विस्तारितः। इदानीमस्माभिर्बालावबोधार्थ सुगमः कृतः। यदि सङ्कलितपदमितखण्डेभ्यो न्यूनाधिकानि भवन्ति तदा विश्लेष्य सयोज्य मूलं ग्राह्यम्।

[1]सङ्कलितपदोत्थितयाऽल्पयाऽब्धिहतयाऽपवर्त्तो यासाम्।
रूपकृतेस्ता विशोध्या अपवर्तफलाः करण्यः स्युः॥ ५१॥
शेपविधिना न यदि तास्तदसन्मूलं तदा भवति।

उदाहरणम्—

वसुरसनेत्रप्रमिता यत्र करण्यश्चतुर्गुणा वर्गः।
युक्तारूपैर्दशभिस्तत्र पद ब्रूहि मे गणक॥ २१॥

न्यासः—रू १० क ३२ क २४ क ८।

---

१. सङ्कलितपदोत्थितयेति। यदा केनचिदुक्तनियमेन यथा मूलमायाति तथा रूपाणि करणीश्च कल्पयित्वा यदि पृच्छ्यते तदा तदुदाहरण शुद्धमशुद्ध वेति ज्ञानार्थमुक्तम्—"सङ्कलितपदोत्थितया" इति। अत्राल्पया प्रथमकरणी लक्ष्यते। यत प्रथमकरणीशेष-करणीघातश्चतुर्गुण· शोध्यते, अतो या विशोधितास्तासामाद्यया चतुर्गुणयाऽपवर्त· स्यादेव। यद्यपवर्तो न भवेत्तदा तदुहारणमशुद्धमेव।

यथोदाहरणम्—१०, $\sqrt{३२}$, $\sqrt{२४}$, $\sqrt{८}$

अत्र वर्गे करणीत्रितये करणीद्वितयस्य तुल्यानि रूपाणि प्रथम रूपकृतेरपास्य मूल ग्राह्य पुनरेकस्या एव कृतेऽत्र पदाभाव.।
यद्यनियमेन सर्वकरणीतुल्यानि रूपाणि विशोध्य मूलमानीयते तदापि मूलकरण्यौ $\sqrt{२}$, $\sqrt{८}$ तदिदमप्यसत्। यतोऽस्य वर्गं १८ वा १०+$\sqrt{६४}$।

अत्र सङ्कलितपदस्य करणीखण्डद्वयस्य तुल्यानि रूपाण्यपास्य मूलं ग्राह्यम् । पुनरेकस्य । एवं क्रियमाणे मूलं नास्त्यतोऽस्य करणीगतमूलाभावः । अथानियमेन सर्वकरणीतुल्यानि रूपाण्यपास्य मूलं ६ ऊनयुतरूपाणामर्द्धे मूलकरण्यौ क २ क ८ अस्य वर्गोऽय रू १८ अथवा द्वात्रिंशदष्टमितकरण्योर्योगं कृत्वा न्यासः–रू १० क ७२ क २४ करण्योस्तुल्यानि रूपाणि रूपकृतेरानीय जाते–रू २ क ६ । अस्य वर्गः–रू १० क ९६ अतोऽसत् ।

उदाहरणम्—

षष्टिर्द्विपञ्चाशद्द्वादशकरणीत्रयं कृतौ यत्र ।
दशभी रूपैर्युक्तं तत्र सखे किं पदं ब्रूहि ॥ २२ ॥

रू १० क ६० क ५२ क १२ ।

अत्र सङ्कलितपदमितस्य करणीद्वयस्यास्य क ५२ क १२ करण्यास्तुल्यानि रूपाण्यपास्य मूलं ६ अतो जाते करण्यौ क २ क ८ अल्पयानया २ चतुर्गुणया क ८ द्विपञ्चाशद्द्वादशमितयोरपवर्त्तनं न स्यादतस्ते न शोधितव्ये । यत उक्तं सङ्कलितपदोत्थितयाल्पया चतुर्गुणयेति । अत्राल्पयेत्युपलक्षणं तेन कचिन्महत्यापि ।

---

यथा— १००–२४ + ८ = ९८ नास्य मूलम् ।
१००–३२ + ८ = ६० अस्मान्मूलं न लभ्यते ।
१००–२४ + ३२ = ४४ मूलं न प्राप्यते ।
१००–३२ + २४ + ८ = ३६ अस्य मूलं ६

$\frac{१० \pm ६}{२} = \sqrt{८}, \sqrt{२}$ इदमसत्, यतोऽस्य वर्गः $(\sqrt{८} + \sqrt{२})^{२}$

$= ८ + २ + \sqrt{६४} = ८ + २ + ८ = १८$ ।

अथवा $\sqrt{८} + \sqrt{३२} = \sqrt{७२}$ एवं योगं विधाय मूलमानीयते

तदा १०, $\sqrt{७२}, \sqrt{२४}$

१००–७२ + २४ = ४ अस्य मूलम् २ ।

$\frac{१० \pm २}{२} = \sqrt{६}, \sqrt{४}, = \sqrt{६}$, २ इदमप्यसत्, यतोऽस्य वर्गः १० $\sqrt{९६}$ ।

उदाहरणम्—

तिथिमनुनयनकरण्यश्चतुर्गुणा रूपदशकसंयुक्ताः ।
किं मूलं ब्रूहि सखे करणीगणिते श्रमोऽस्ति यदि ॥ २३ ॥

न्यासः–रू १० क ६० क ५६ क ८।

अत्र करणीखण्डद्वयादस्मात् क ५६ क ८ उत्पन्ने करण्येते क २ क ८ अल्पया चतुर्गुणया क ८ अनयापवर्त्ते कृते लब्धकरण्यौ क ७ क १ यथाक्रमं क ७ क २ क १ शेषविधिना उत्पन्ने करणीखण्डे क ३ क ५ यथाक्रमं क ५ क ३ क २ एताः पूर्वकरणी-खण्डैरेभिः क ७ क २ क १ तुल्या न स्युरित्यसत् ।

उदाहरणम्—

तिथिमनुरविविश्वककुम्नगसंख्याः कृतहताः करण्यश्चेत् ।
षोडशरूपसमेता यत्र कृतौ तत्र किं पदं कथय ॥ २४ ॥

न्यासः–रू १६ क ६० क ५६ क ४८ क ५२ क ४० क २८ ।

---

द्वितीयोदाहरणम्—

$$१०, \sqrt{६०}, \sqrt{५२}\ \ \sqrt{१२}$$

अत्रापि करणीद्वयतुल्यरूपाण्यपास्याक्तनियमेन—

$१००-( ५२ + १२ ) = १००-६४ = ३६$ अस्य मूलम् ६ ।

$$\frac{१०\pm६}{२}$$ । मूलकरण्यौ $\sqrt{८}, \sqrt{२}$

अत्राल्पया २ चतुर्गुण्या ८। द्विपञ्चाशद्द्वादशमितयोरपवर्तो न स्यादतस्ते न शोध्ये। यत उक्तं सङ्कलितपदोत्थितयाल्पया चतुर्गुणयेति ।

तृतीयोदाहरणम्—

$$१० \sqrt{६०}, \sqrt{५६}, \sqrt{८}$$

अत्रापि करणीत्रितये करणीद्वितयस्य नियमात् $८ + ५६$ आभ्यां क्रियाकरणेन $१००-६४ = ३६$ अस्य मूलम् ६ ।

$$\frac{१०\pm६}{२} = ८,\ २$$ अत्र मूलकरण्यौ $\sqrt{८}, \sqrt{२}$

अल्पया २ चतुर्गुणया ८ अनयाऽपवर्ते कृते $\sqrt{७}, \sqrt{१}$

अत्र सङ्कलितखण्डत्रयस्यास्य क ५६ क ५२ क ४८ पश्चात्खण्डद्वयस्यास्य क ६० क २८ पश्चादस्यैकस्य क ४० तुल्यानि रूपाण्यपास्येत्यादिना मूलकरण्यः क १० क ३ क २ क १ अथवा आदौ खण्डत्रयं पश्चात्खण्डद्वयं पश्चादेकमिति नियमः। क आदावेक क ६० पश्चाद् द्वे एते क ५६ क ४८ पश्चात् त्रीण्येतानि क ५२ क ४८ क २८ तुल्यानि रूपाणीत्यादिना खण्डान्युत्पन्नानि। क १० क ३ क २ क १। एवमतो मूलमेतदिति एवं [ करण्य ते ? करण्य इति ] चेत्, अस्य वर्गः—रू १६ क १२० क ८० क ४० क २४ क १२ क ८ अयमुदाहृतो वर्गः स्यात्। अतोऽसत्।

वर्गराशिमूले गृहीते तन्मूलस्य वर्गः पूर्ववर्गतुल्यो न चेत्तन्मूलमसदिति सर्वत्र करणीनामासन्नमूलकरणेन मूलान्यानीय रूपेषु प्रक्षिप्य मूलं वाच्यम्।

सूत्रम्—

[1]वर्गे क्षयात्मिका चेत्तामपि धनात्मिका कृत्वा ॥ ५२ ॥
मूलं ग्राह्यं तयोः क्षयात्मिकैका भवत्येव।

---

शेषविधिना $\sqrt{8}$ महती प्रकल्प्य ६४–६० = ४ अस्य मूलम् २।

$\frac{८ \pm २}{२}$ मूलकरण्यौ $\sqrt{५}$, $\sqrt{३}$

यथाक्रमं न्यासः $\sqrt{५}$, $\sqrt{३}$, $\sqrt{२}$

एता मूलकरण्यः पूर्वकरणीखण्डैरेभिः $\sqrt{७}$, $\sqrt{२}$, $\sqrt{१}$ समा न स्युस्तस्मान्मूलमसदिति बोध्यम्। अनेनेदमप्यवगम्यते यदि धृष्टतरेण प्रथमशोध्यकरण्यस्ता एव तादृश्योऽन्या वा स्थापिता। परतस्तु या काश्चन युक्त्या स्थापितास्तदा तदुदाहरणस्य शुद्धत्वाशुद्धत्वबोधार्थम्—"अपवर्तफला करण्यः स्युः" इत्यादिकथनं युक्तमेव। यतः—"चतुर्गुणान्त्यनिघ्ना" इत्यत्र चतुर्गुणकरणीशेषे करणीघातोऽस्ति। तत्र चतुर्गुणप्रथमकरण्यापवर्ते मूलकरण्य एव लभ्या इति मूलकरण्योऽपवर्तादेव ज्ञाताः। यदि तु शेषविधिना ता न भवन्ति तदा शेषकरणीनां दुष्टत्वात्तदुत्पन्नमूलमप्यसदिति।

१. वर्गे क्षयात्मिका चेदिति। यदि वर्गे ऋणात्मिका करणी स्यात्तर्हि तां धनात्मिकां विधाय मूलं ग्राह्यम्। आगतमूलकरण्योर्मध्ये एका करणी ऋणात्मिका ज्ञेया। परन्तु यदि करणीवर्गे एकैव क्षयकरणी स्यात्तदैव एकस्या मूलकरण्याः क्षयत्वं बोध्यम्। यदि द्व्यादयो भवन्ति

पूर्वोक्तक्षयात्मकवर्गस्य मूलार्थं न्यासः—रू ८ क ६०̇ अत्र करणीं धनात्मिका कृत्वा न्यासः रू ८ क ६० प्राग्वन्मूल रू ५ क ३ एतयोरेका ऋणं क ५ क ३̇ वा क ५̇ क ३ ।

द्वितीयस्य न्यासः रू १० क ६० क ४०̇ क २४̇ अत्रर्णकरण्यौ धन प्रकल्प्य प्राग्वन्मूलकरण्यः क ५ क ३ क २ वा क ५̇ क ३̇ क २ अथवा त्रिमितकरण्या ऋण कल्पिताया क ५ क ३ क २ अस्य वर्गः रू १० क ६०̇ क ४० क २४ एषा वर्ग उद्दिष्टः समो न स्यात्तन्मूलमतोऽसद् उद्दिष्टवर्गराशेर्मूलराशिवर्गो यथा समः स्यात्तथा धनर्ण कल्प्यम् । इति करणीषड्विधम् ।

तदेव षट्त्रिंशत्परिकर्माणि समाप्तानि ॥

॥ अथ [1]कुट्टकः ॥

भाज्यो हारः क्षेपकः केनाप्यपवर्त्य कुट्टकस्यार्थम् ।
येन विभाज्यच्छेदौ क्षेपो न तेन खिलम् ॥ ५३ ॥

---

तदा द्वयोर्बहूना वा क्षयत्व मूलकरणीयुक्त्या चिन्तनीयम् । ऋणकरणीवर्गः, धनकरणी-वर्गस्तु तुल्यमेव नास्त्यत्र कश्चिद्भेदः । परन्तु ऋणकरणीवर्गे करणी ऋणात्मिका भवति तथा धनकरणीवर्गे धनात्मिका भवतीत्येव विशेष. । तथा सति वर्गे करणी धनात्मिका ऋणात्मिका वा भवतु मूल त्वङ्कत सममेव युक्तम् । उक्तरीत्या रूपवर्गात् क्षयकरणी-शुद्धौ सशोध्यमानमृण स्वत्वमेतीति योग एव । रूपकृतेर्धनकरणीशुद्धौ सशोध्यमानं स्वमृणत्व गच्छतीत्यन्तर भवेत् । अन्तरे च मूलाङ्कसिद्धिरुक्तैव । अतो धनात्मिका ता-मृणकरणीं प्रकल्प्य मूल ग्राह्यमित्युक्तम् । परन्त्वागत मूल धनवर्गस्यैव भविष्यत्यतस्त-योर्मध्येऽभीष्टैका क्षयात्मिका कल्प्येति ।

उदाहरणम् ८,$-\sqrt{६०}$, अत्र ऋणात्मिका करणी धनात्मिका प्रकल्प्योक्तरीत्या मूलम् ६४−६०=४ अस्य मूलम् $\frac{८\pm२}{२}$ $=\sqrt{५}, \sqrt{३}$ एतयोरेका ऋणम् $-\sqrt{५}$, $\sqrt{३}$ वा $\sqrt{५}, -\sqrt{३}$ एवमग्रेपि ।

1. कुट्टकः=हिंसार्थककुट्टधातोः कर्तरि णकः । कुट्टको नाम गुणकः । अर्थाद्येन गुणकेन गुणितो

हरभाज्ययोर्विहृतयोरन्योन्यं यो भवेद्ययोः शेषः ।
स तयोरपवर्तनकृत्तेनैवापवर्तितौ तु दृढौ ॥ ५४ ॥
दृढभाज्यहरौ विभजेत्परस्परं यावदेकमवशेषम् ।
विन्यस्याधोऽधस्तात्फलानि तदधस्तथा क्षेपम् ॥ ५५ ॥
तदधः खमुपान्त्येनाहते निजोर्ध्वेऽन्तिमेन सयुक्ते ।
अन्त्यं जह्यादेवं यावद्राशिद्वय भवति ॥ ५६ ॥

---

राशिदिष्टक्षेपेण युतः प्रश्नोद्दिष्टहरेण भक्तो नि.शेषो भवति, तस्य गुणकस्य कुट्टक इति सञ्ज्ञा आचार्यैरुक्ता । आदौ गुणकमानेतु (कुट्टकार्थं) केनापि समेनाङ्केन भाज्यो हार क्षेपकश्च प्रत्येकमपवर्त्य । येन समेनाङ्केन भाज्यो हारश्चापवर्तितस्तेनैव यदि क्षेपो न छिद्येत्तदा तन्न युक्तम् । ययो राश्यो परस्पर भाजितयोर्योऽङ्कः शेषो भवति स एव तयो राश्योर-पवर्तनाङ्क स्यात् । तेनापवर्तनाङ्केनापवर्तितौ भाज्यहारौ दृढसञ्ज्ञकौ भवतः । तेनैवाप-वर्तनाङ्केनापवर्तितः क्षेपोऽपि दृढसञ्ज्ञको भवति । एवमागतौ दृढभाज्यहारौ परस्पर तावद्विभजेद्यावद् भाज्यस्थाने एकमितशेष भवति । परस्परभजनेषु लब्धानि फला-न्यधोऽधः स्थापितानि । फलाधो दृढक्षेपोऽपि स्थाप्य , क्षेपाध. खं स्थापनीयम् । एव-मेका वल्ली ( पंक्ति ) भवेत् । तत उपरितनाङ्केनान्तस्योर्ध्वस्थितेऽङ्के गुणितेऽन्तिमाङ्केन युते सति तदन्त्य त्यक्त्वा मुहुर्मुहुरेव क्रियाकरणेन ऊर्ध्वाधस्थ क्रमेण लब्धिगुणसञ्ज्ञक राशिद्वय स्यात् । तत ऊर्ध्वस्थितो राशिर्दृढेन भाज्येन भाजित फलं (लब्धि ) स्यात् । अधःस्थितो राशिर्दृढेन हारेण विभाजितो गुणको भवेत् ।
यदि लब्धयः समा , अर्थाद् द्विचतुःषडित्यादयो भवेयुस्तदा यथागते गुणलब्धी भवत । यदि ता लब्धयो विसमाः स्युस्तदाऽऽगतौ लब्धिगुणौ स्वतक्षणाद्विशोधनीयाविति । अर्थाल्लब्धिर्दृढभाज्याद्विशोध्या, गुणकश्च दृढहाराद्विशोध्य. । इष्टाङ्केन गुणितौ स्वत-क्षणाभ्यां युतौ बहुधा गुणाप्ती भवत ।
तक्षणे क्रियमाणे सर्वदैवोभयत्र सम फलं ग्राह्यम् । न न्यूनाधिकमित्यर्थ. । समीकरणा-दिनाप्युपपत्तिरतिसुगमास्य ।
यथा—यदि गुणकः = गु । भाज्यः = भा । हार =हा । लब्धिः = ल । क्षेपः = क्षे ।

$$\text{तदा ल} = \frac{\text{भा}\times\text{गु}\pm\text{क्षे}}{\text{हार}}$$

$$\therefore \text{हा}\times\text{ल} = \text{भा}\times\text{गु}\pm\text{क्षेप}$$

हा०, गु०, ल०, क्षे०, भा०, इत्थं कुट्टके सर्वदैव पञ्च वस्तूनि भवन्ति ।

हरभाज्याभ्या तष्टावधरांध्वौं ते क्रमेण गुणलब्धी ।
यदि लब्धयः समाः स्युस्तदा गुणाप्ती यथागते भवतः ॥ ५७ ॥
विपमाश्चेत्ते शोध्ये गुणलब्धी स्वतक्षणाच्छेपे ।
योगभवे गुणलब्धी निजतक्षणातो विशोधिते क्षेपजे ॥ ५८ ॥
इष्टघ्नतक्षणयुते बहुधा भवतो गुणाप्ती ते ।
सर्वत्र कुट्टकविधौ कार्यं समतक्षण सुधिया ॥ ५९ ॥

उदाहरणम्—

राशिस्त्रिसप्तनियुतेन शतद्वयेन निघ्नो नवोनितशतेन युतश्च कोऽपि ।
भाग प्रयच्छति विशुद्धमगाब्धिनेत्रैर्भक्तः सखे कथय त गुणकं फलं मे ॥ २५ ॥

---

तत्र हा०, भा०, क्षे० एतानि त्रीणि ज्ञातानि भवन्ति । शेपं वस्तुद्वय (ल०, गु०) चाज्ञात भवति ।

∵ हा × ल = भा × गु ± क्षेप

इत्यत्र समेनाङ्केन गुणने भजने वा पक्षयो समतैव ।

अतो भाज्यो हार क्षेपकश्च केनापि समेनाङ्केनापवर्त्यं इति युक्तमेव ।

ज्ञातेपु भाज्यहारक्षेपेपु यदि भाज्यहारावपवर्त्यैंते क्षेपश्च नापवर्त्यंते तदा तुल्यत्वासभवाद्येन भाज्यच्छेदौ न तेन क्षेप इत्यादि कथनमपि साधु । पूर्वमेवोक्तम् भा×गु ± क्षे = = हा × ल पक्षयोर्यदि इ० भा० हा० युज्यते ।

तदा इ० भा० हा० + भा० गु ± क्षे० = इ० भा० हा + हा० ल० ।

= भा ( गु० + इ० भा० ) ± क्षे = हा ( ल + इ० भा० ) ।

अत्र यदि इ = इष्टाङ्क = १

तदा भा० ( गु० + १ × भा० ) ± क्षे० = हा० ( ल+१×भा )

= भा ( गु+भा० ) ± क्षे० = हा ( ल+भा० )

अत्र यदि लब्धयो विषमास्तदा गुणलब्ध्योर्ऋणत्व प्रजायते ( धनर्णयोरन्तरमेव योग इत्यादिना ) ।

∴ भा ( इ० हा०—गु० ) = हा० ( भा०—ल० )

अतो विपमाश्चेत्ते गुणलब्धी स्वतक्षणाच्छोधिते योगभवे गुणलब्धी भवत इत्युक्तमाचार्येण ।

दैवज्ञश्रीरङ्गनाथभट्टविरचितः

# सिद्धान्तचूडामणिः[1]

[ सटिप्पणः ]

[ १ख ] लक्ष्मीशं धरणीधराश्रितपदं चात्यक्तवेलास्थिति<br>
श्रीविद्याधरसेवितं पृथुकृपासिन्धुं सदानन्ददम् ।<br>
घोपध्वस्तितदुष्कृतं द्विजपतिश्रीवर्द्धनं सद्गुरुं<br>
तीर्थानामधिपं दिवाकरमहं वन्दे मुदा सर्वदा ॥ १ ॥

सिद्धान्तसिद्धान्तकलाकलापचूडामणि श्रीकमलाकराख्यम् ।<br>
नत्वा नृसिंहात्मजरङ्गनाथः सिद्धान्तचूडामणिमातनोति ॥ २ ॥

[ अथाहर्गणं साधयति ]—

(१५६५) वाणाङ्गतिथ्यूनशकः समौघो (१२) दिवाकरघ्नो गतमासयुक्तः ।<br>
पृथग् (२) द्विनिघ्नः पृथगङ्गचन्द्रनन्दै(९१६)र्हृतस्तेन विहीनकोर्ध्वात् ॥ ३ ॥

---

१. अस्य ग्रन्थस्य प्रणेता श्रीमद्दैवज्ञवर्यनृसिंहात्मजः श्रीमदाचार्यरङ्गनाथः । श्रीमद्दिवाकरकमलाकरेतिसहोदरद्वयाधीतज्यौतिषविद्य. १५६२ शककालेऽमु करणाकरं ग्रन्थ व्यरचयत् । अस्य सिद्धान्तचूडामणिग्रन्थस्य रचना प्रसिद्धसूर्यसिद्धान्तानुसारिणी वर्तते । आचार्येण दिवाकरकृतजन्मवर्षपद्धत्योष्टीके, भङ्गीविभङ्गी-लोहगोलखण्डन-पलभाखण्डन-वासनादयो लघुग्रन्थाश्च निर्मिता. । सिद्धान्तचूडामणेरेक एव हस्तलेखः सरस्वतीभवन-पुस्तकालये समुपलभ्यते । तदाधारेणैवाय ग्रन्थः सम्पाद्यते साम्प्रतम् । विशेषश्च भूमिकाया वक्ष्यते ।

अधोऽधः [ को ? सोऽर्थः ] त्रिधा स्थाप्यः ।

शराङ्गसंप्राप्तयुतस्तदूर्ध्वः खरामनिघ्नो गततिथ्यहीनः ।
स्थाप्यस्त्वधोऽधो भुजगाभ्रपृथ्वीधरैरवाप्तेन युतोर्ध्वकाङ्कात् ॥ ४ ॥
वेदाङ्गलब्धेन तदूर्ध्वकाङ्को हीनो [१]द्युवृन्दं सितवासराद्यम् ।
कदाचिदेतत्किल घस्रवृन्दं सैकं निरेकं सुधिया विधेयम् ॥ ५ ॥

[ अथ क्षेपकानाह [२] ]—

क्षितिभुवो निधयः शरसागरा निधिकलानिधयस्तु दिवामणौ ।
शशिधरा धृतिरभ्रधरा धराधरयुगानि भवन्ति कलानिधौ ॥ ६ ॥
क्षितिसुते तु यमौ ज्वलनाश्विनो निधियमाः सितभानुसितांशवः ।
कुमुदिनीशसुते गुणसंमिताः खगकराः खगबाणमिताः खगाः ॥ ७ ॥
[ २क ] चन्द्रेन्दवो रामभुवोऽङ्गपक्षा वेदेन्दवश्चित्रशिखण्डिसूनौ[३] ।
अङ्गानि रूपं निधिपावकाश्च चन्द्राग्नयो दानवपूज्यतुङ्गे ॥ ८ ॥
मार्तण्डसूनौ खलु नीलकण्ठाः सप्तेन्दवः पञ्चभुवोऽक्षिरामाः ।
पाथोधयो व्योमचरा हुताशा हुताशवेदा जडरश्मितुङ्गे ॥ ९ ॥
पाते रसाऽर्काभ्रगुणा भवेयुः क्षेपा ग्रहाद्याः कथिता इतीमे ।
स्वक्षेपयुक्ताः खचरा भवन्ति निशीथजा रावणराजधान्याम् ॥ १० ॥

---

१. अत्राहर्गणानयन आचार्येण ग्रन्थारम्भकालिकाधिमासावमशेषके त्यक्ते । अहर्गणानयनोपपत्तिः—"शकः पञ्चदिक्चन्द्रहीनोऽर्कनिघ्न·" इत्यादिकरणकुतूहलोक्तपद्यवद्बोध्या ।

२. "रुद्रा गोब्जाः कुवेदाः" इत्यादिगणेशदैवज्ञोक्त्या वासना ज्ञेया ।

३. गुरावित्यर्थः । "जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः" इत्यमरः ।

[ ग्रहाणां क्षेपाः ]—

| पा | सू | चं | मं | बुउ | गु | शुउ | श | चंउ |
|---|---|---|---|---|---|---|---|---|
| ६ | ११ | ११ | २ | ३ | ११ | ६ | ११ | ४ |
| १२ | ६ | १८ | २३ | २६ | १३ | १ | १७ | ६ |
| ० | ४५ | १० | २६ | ५६ | २६ | ३६ | १५ | ३ |
| ३ | १६ | ४७ | ११ | ६ | १४ | ३१ | ३२ | ४३ |

[ अथाहर्गणाद् ग्रहसाधनम् ]—

३१ ११३२३
कलानिधिगुणैर्गुणो गुणकराग्निभूभूद्धृतो
गणो भगणपूर्वकद्युमणिशुक्रसोमात्मजाः ।

८६२६
दिवागणरसाद्रिगोगजलवाप्तलिप्तोनिता-
श्चलोच्चमिदमर्कजक्षितिजगीष्पतीनां भवेत् ॥ ११ ॥

६०० १६२६३
खखाङ्गगुणितो गणो गुणनवाग्नितर्केन्दुहृद्
४६१०
विधुर्गणदशाङ्गसागरलवाप्तलिप्तोनितः ।

३२३२
कराग्निकरवह्निहृद्दिनगणो[ज्व?ऽब्ज]तुङ्गं भवेद्
५१६३
गुणाङ्गशशिवाणहृद्दिनगणाप्तलिप्तोनितम् ॥ १२ ॥

६७६४
कृताङ्कमुनितर्कहृद्दिनगणो[ज्व?ब्ज]पातो भवे-
५३४५
च्छराब्धिगुणबाणहृ [२ ख] द्दिनगणाप्तलिप्तोनितः ।

६८७
धराधरगजाङ्कहृद्दिनगणः कुजोऽयं गणा
८७१६
द्धृताम्नव[धरा]धराधरगजैः कलाद्यन्वितः ॥ १३ ॥

१०० ८७९७
खखेन्दुगुणितो गणोऽद्रिनवसप्तनागैर्हृतो

१२०३
बुधोच्चमनलाभ्रनेत्रसितभानुभक्ताद् गणात् ।

२८८
अवाप्तकलिकान्वित विकलिकासु नागाष्टदृग्

६०
विनिघ्नगतवर्षपूर्णरसभागयुक्तं च तत् ॥ १४ ॥

१० ४३३२३
गणो दशगुणो गुरुर्गुणकराग्निरामाब्धिहृ-

४२०७५
च्छराद्रिकृतिवेदहृद्दिनगणाप्तलिप्तोनितः ।

१४४ ६०
गुणा युगयुगेन्दुभिर्गतसमाः खतर्कैर्हृताः

फलं विरहितं गुरोर्विकलिकासु कुर्याद् ध्रुवम् ॥ १५ ॥

५०० ११२३४९
खखाशुगगुणो गणो नवयुगाग्निसूर्येन्दुहृत्

४११९
सितोच्चमिदमङ्कचन्द्रशशिवेदभक्ताद्गणात् ।

२१६
अवाप्तकलिकोनितं विकलिकासु तर्केन्दुदृग्

६०
विनिघ्नगतवर्षपूर्णरसभागहीनं च तत् ॥ १६ ॥

१०७६६
तर्काङ्गसप्तदशभक्तगणः शनिः स्यात्

२३६४६
तर्काब्धितर्कगुणनेत्रहृताद् दिनौघात् ।

२१६
लिप्तादियुक्त इति तर्कमहीद्विनिघ्न-

६०
वर्षाभ्रतर्कलवयुक् च विलिप्तिकासु ॥ १७ ॥

अथान्यः सुगम प्रकारः[१]—

४
[२] समासमाजः श्रुतिहृद्दिनानि द्विघ्नानि नाड्यस्त्रिगुणा विनाड्यः ।
समासमाजेन युतानि तानि दिनान्ययं वारमुखः समेशः ॥ १८ ॥

२३६०  २३६०  ६५७  २१६
[३] खखगाग्नियमा खखगा [३ क] ग्नियमा नगवाणखगाः खगसोमयमाः ।

१२१४  १३५१२  ६१  १६२७  ११६१
युगभूद्विभुवोऽर्कशराग्निभुवः कुरसा भनृपाः शशिभूपभुवः ॥ १९ ॥

२१६  १८  ५  ४  ४०
गुणकाः कथिता अथ षट्कुयमाः धृतयः पवनाः श्रुतयः खकृताः ।

६०  ५  ४०  ६०
गग[ना?नां] गमिता विशिखाः खकृता गगनाङ्कमिताः क्रमशश्च हराः ॥ २० ॥

५  १७  ४७  ३०
[४] बाणाः सप्तभुवश्च पर्वतकृताः पूर्णाग्नयोऽब्दाधिपे

२१  ३४  ३३  ३३
शुद्धौ सोमयमाः पयोधिदहना देवाः सुराः शीतगौ ।

८  १८  ४९  ४७
नागा नागभुवोऽङ्कवारिनिधय. सप्ताब्धयो भूमिजे

३  ४  १५  ३  ६  २४
रामा वारिधयो दिनानि दहना बौधोच्चके षड् जिनाः ॥ २१ ।

---

१. भास्करीयप्रत्यब्दशुद्धेरनुरूपाऽयमुपक्रमः ।

२. अत्र तत्त्वविवेकोपजीव्यसूर्यसिद्धान्तमतेनैकस्मिन् वर्षे सावनदिनानि = ३६५।१५।३१। ३१।२४।
पञ्चसिद्धान्तिकोपजीव्यसूर्यसिद्धान्तमते तु ३६५।१५।३१।३०।
आचार्योक्तस्वरूपावलोकनेनैतद्वर्षमानम् = ३६५।१५।३०।४५ परमेतच्छास्त्रविरुद्धम् । अतोऽत्र—"नाड्यस्त्रिगुणाः" इत्यत्र, "नाड्योऽरिगुणाः" इति पाठे कृते पञ्चसिद्धान्तिकोक्तवर्षमानादब्दपानयन सम्यग् घटते । तथा च—"त्रिगुणा विनाड्य." अत्र लिङ्गविपर्ययत्वमपि वर्तते । तत्—"समासमाजः श्रुतिहृद्दिनानि साङ्गानि रूपाद्रिरसैर्हृतानि" इति पाठान्तरे कृते शुद्ध्यति ।

३. अनुपातेनैकवर्षसबन्धिलवादिकग्रहेषु ग्रन्थोक्तक्रमत एते गुणहरा भवन्ति ।

४. ग्रन्थारम्भीयसौरवर्षमुखे क्षेपकाः ।

२ ३९ ११ १५ ८ ३८
दस्रौ नन्दगुणा गुरौ शिवदिनाष्टाष्टाग्नयः स्युः सिते

७ ४ ३४ ४ ११
शैला वारिधयः समुद्रदहना वेदाः शनौ भूभुवः ।

१७ ५६ ४५
शैला [ज्वा ? ब्जा] रसपञ्च पञ्चश्रुतयः पाते भवेत् क्षेपकः ॥ २२ ॥

| ग्रहा | अब्दपति | शुद्धिः | च | म | बु | गु | शु | श | चउ | पात |
|---|---|---|---|---|---|---|---|---|---|---|
| गुणका | ० | २३९० | २३९० | ५९७ | २१९ | १२१४ | १३५१२ | ६१ | १६२७ | ११६१ |
| हरा | ० | २१६ | १८ | ५ | ४ | ४० | ६० | ५ | ४० | ६० |
| क्षेपका | ५ | २१ | ८ | ३ | ६ | ११ | ७ | ११ | ४ | ६ |
| | १७ | ३४ | १८ | ४ | २४ | १५ | ४ | १७ | ११ | ३ |
| | ४७ | ३३ | ४९ | १५ | २ | ८ | ३४ | ५६ | २२ | ४ |
| | ३० | ३३ | ४७ | ३ | ३९ | ३८ | ४ | ४५ | ५३ | ० |

समासमाजो निजहारहार्य्यौ गुणैर्गुणः क्षेपकयुक्समान्ते ।
शुद्धीन्दुभूजेन्दुज [३ ख] देवपूज्यसितासितेन्दूच्चकचन्द्रपाताः ॥ २३ ॥
तिथ्यादिका स्यात्परिशुद्धिरत्र लवादिकास्ते गगने चराः स्युः ।
एतैर्गणोत्थाः सहिता विधेया मध्याः खगा औदयिका भवन्ति ॥ २४ ॥
चैत्रादियातास्तिथयः समेशनाडीविहीना [1] विगततुंहीनाः ।
विशुद्धितिथ्या च विहीनिता स्याद्दिवासमूहोऽब्दपवासराद्यः ॥ २५ ॥

---

१. अथ दिवासमूहो भास्करीयलब्धहर्गणानुरूपः । अत्र—"विगततुंहीनाः" इत्यत्र "अवमैर्वियुक्ताः" इति पाठान्तरेण स्पष्टावगमः ।

३
'दिनमणिर्द्युगणोंऽशमुखो भवेद् द्युगणहीनकलो द्युगणाद् गुणैः ।
२२
परिहृताच्च विलोचनलोचनैः परिहृतात्कलिकादिफलान्वितः ॥ २६ ॥
१३
रामचन्द्रगुणितो दिनसङ्घो द्विष्ठ एष दिनसङ्घविशेषः ।
६८
सर्पतर्कविहृतः फलयुक्तश्चन्द्रमा भवति भागमुखोऽसौ ॥ २७ ॥

पूर्वाहर्गणेन द्विष्ठः, अन्तर कार्यं हरेण ६८ भक्त अशादि ५ ।

९
दिनगणो निधिहृल्लवपूर्वकं कुमुदिनीपतितुङ्गमिदं भवेत् ।
६२
दिनगणात्करतर्कविभाजितात् कुरु कलादिफलेन समन्वितम् ॥ २८ ॥

८०　　　६
भाजितः खभुजगैर्दिनसङ्घो घस्रसंघरसभागसमेतः ।
३
संयुतो गुणगुणद्युगणेन स्यात्कलादिरजनीपतिपातः ॥ २९ ॥

२　　　३
अहर्गणो द्विभाजितो लवा गुणैर्गुणाः कलाः ।
१७
गणाद्रिभूलवोनिता महीसुतोऽत्र जायते ॥ ३० ॥

६　६५　　　४
गणो रसघ्नः शरतर्कभक्तो लवादि वेदघ्नगणान्वितं स्यात् ।
२८८　　　६०
ज्ञोच्चं गजेभाद्रिहृताब्दखाङ्गभागेन युक्तं विकलासु कार्यम् ॥ ३१ ॥

५　　　७०
दिनगणेषुहृतिः [४ क] कलिकादिको गणखसप्तलवाप्तकलोनितः ।
१४४　　　६०
सुरगुरू रविवर्गसमाहृतेः खरसभागवियुग्विकलासु च ॥ ३२ ॥

१०　१५५　　　६
गणाद्दशघ्नाच्छरबाणभूभी रसैश्च लब्धान्तरमंशकाद्यम् ।
२१६　　　६०
सितोच्चमङ्केन्दुकरघ्नवर्षखाङ्गांशहीनं विकलासु कार्यम् ॥ ३३ ॥

---

१. लघ्वहर्गणतो भास्करोक्तख्याद्यानयनोक्तवत् सर्वेषा प्रकाराणा वासना ज्ञेया ।

२
गणः करघ्नः कलिकादिकः स्यात्सौरिर्विलिप्ताः कलिकाशरांशः ।
२१६ ६०
नृपघ्नि [घ्नि ?] निघ्नाब्दखतर्कभागयुक्तं विधेयं च विलिप्तिकासु ॥ ३४ ॥

[ इदानीं रेखापुराणि देशान्तरं चाह ]—

[1]लङ्काकुरुक्षेत्रकदेवकन्याः सिताद्रिरौहीतकवत्सगुल्मम् ।
अवन्तिकापर्य्यलिगर्गराटकां[त्पः ? च्यः] सुमेरुः क्षितिमध्यरेखा ॥३५॥
८०
[2]स्वदेशरेखान्तरयोजनघ्नो जवोऽभ्रमातङ्गविभाजनीयः ।
लब्धा विलिप्ता अखिलग्रहेषु कुर्याद्धनर्णं परपूर्वदेशे ॥ ३६ ॥

[ ग्रहाणां दिनगतीराह ]—

५९ ८ ७९० ३५
नवाक्षा भुजङ्गा रवेः पूर्णनन्दनगाः पञ्चरामा विधोश्चन्द्रतुङ्गे ।
६ ४१ ३ ११ ३१ २६
रसाश्चन्द्रवेदा गुणाश्चन्द्रचन्द्रा अगोभूगुणास्तर्कपक्षाः कुजस्य ॥ ३७ ॥

---

१. अत्र श्रीपतिः—

लङ्का कुमारी नगरी च काञ्ची पानाटमद्रिश्च सितः षडास्यः ।
श्रीवत्सगुल्मं च पुरी ततश्च माहिष्मती चोज्जयिनी प्रसिद्धा ॥
स्यादाश्रमोऽस्मान्नगरं सुरम्यं ततः पुरं पट्टशिवाभिधानम् ।
श्रीगर्गराटं च सरोहितार्च्चस्थानेश्वरं शीतगिरिः सुमेरुः ॥
इतीव याम्योत्तरगा धराया रेखामिमां गोलविदो वदन्ति ।
अन्यानि रेखास्थितिभाञ्जि लोके ज्ञेयानि तज्ज्ञैः पुटभेदनानि ॥

२. अत्राचार्येण स्पष्टभूपरिधिः ४८०० गृहीतः । ततोऽनुपातेन विकलादिकं देशान्तरसंबन्धि-
फलम् $= \frac{\text{गक}\times ६०\times \text{देयो}}{४८००} = \frac{\text{गक}\times\text{देयो}}{८०}$ अत उपपन्नं यथोक्तम् ।

२४५　　　　　३२
शरयुगयमतुल्या नेत्ररामा बुधोच्चे

५　　　　　　　　　　१६
शरमितकलिकाः स्युर्देवपूज्ये षडङ्काः ।

८
गजमितविकलाः स्युर्भार्गवोच्चस्य मन्दे

गतिरिति कलिके द्वे लिप्तिका[1] द्योतिताद्यैः ॥ ३८ ॥

| सू | चं | चंतुं | पा | भो | बुउ | गु | शुउ | श |
|---|---|---|---|---|---|---|---|---|
| ५६ | ७६० | ६ | ३ | ३१ | २४५ | ५ | १६ | २ |
| ८ | ३५ | ४१ | ११ | २६ | ३२ | ० | ८ | ० |

[ इदानीं मध्यमाधिकारोपसंहारमाह ]—

श्रीमन्नृसिंहात्मजरङ्गनाथविनिर्मिते खेचरसाधनेऽस्मिन् ।
सिद्धान्तचूडामणिनामधेये मध्याधिकारः प[४ख]रिपूर्त्तिमागात् ॥ ३९ ॥

इति श्रीरङ्गनाथकृते सिद्धान्तचूडामणौ
मध्यमाधिकारः प्रथमः ॥ १ ॥

---

१　लिप्तिका ग्रहाणां गतिकला–इत्यर्थः । "वेगलिप्ता ग्रहाणाम्" इति पाठः साधुः ।

## अथ स्पष्टाधिकारः

[ तत्र ग्रहाणां मन्दोच्चान्याह ]—

नेत्रात्यष्टिनखा [२, १७, २०] रवेर्गृहमुखं मन्दोच्चकं वेददिग् [४, १०]
बाणः [५] स्यात्कुसुत[स्य] सप्तक[७][भुभः ? दिशः][१०] पूर्णाग्नयो [३०] ज्ञस्य च ।
जीवे सायकमूर्च्छनाऽभ्रदहना [५, २१, ३०] शुक्रस्य नेत्रे [२] तथा
नन्दा[ज्वा ? व्जा] [१९] द्विशराः [५२] प्रभाकरसुते सप्तोत्कृतिः खाब्धयः [७, २६, ४०] ॥ १ ॥

मन्दोच्चम्[१]—

| सू | मं | बु | गु | शु | श |
|---|---|---|---|---|---|
| २ | ४ | ७ | ५ | २ | ७ |
| १७ | १० | १० | २१ | १९ | २६ |
| २० | ५ | ३० | ३० | ५२ | ४० |

[ इदानीं मन्दकेन्द्रं साधयति ]—

[२]त्र्यूनं भुजः स्यात् त्र्यधिकोनषड्भमङ्कोर्ध्वमङ्कोनितमर्कशुद्धम् ।
नवाधिकं चेत्तु यदुच्चशुद्धः खगस्तदाख्यं खलु केन्द्रमुक्तम् ॥ २ ॥

---

१. मन्दोच्चाना स्वल्पगतित्वादाचार्येण—'नेत्रात्यष्टिनखाः'' इत्यादय. सूर्यादीना स्थिरा मन्दोच्चाशाः पठिताः । शिष्यधीवृद्धिदे तु—''वस्वीशा दशबाहवोऽम्बरधृतिः खाङ्का रसत्र्यश्विनो मान्दाशा. भौमादीनाम् ॥ दिवाकरोच्चभुजगाचला लवाः ।'' इति, करणकुतूहले च—''मन्दोच्चमर्कस्य गजाद्रिभागा भौमादिकाना सदलाष्टसूर्या । तत्त्वाश्विनः सार्द्धयमाद्रिचन्द्राः कष्टौ मतङ्गाग्नियमाः क्रमेण ॥'' इति, ग्रहलाघवेऽपि—''सूर्यमन्दोच्चमष्टाद्रयोशा भवेत् । शुद्धोऽब्ध्यद्रिषडग्निनागगृहतः स्यान्मन्दकेन्द्र कुजात् ।'' इत्येव विविधा मन्दोच्चाशा उपलभ्यन्ते ।

२. अत्र मन्दकेन्द्रानयनपूर्वक भुजसाधन प्रदर्शितमस्ति ।

अथ मन्दाङ्कानाह—

१७　३४　५०　६६　८०　९३　१०४
'अत्य[ष्टि]यो वेदगुणाः खबाणाः षट्षट् खनागास्त्रिखगा युगाशाः ।
११३　१२१　१२६　१३०　१३१
विश्वेन्दवो भूरवयोऽङ्गसूर्याः खत्रीन्द्रव क्वग्निभुवोऽर्कमान्दम् ॥ ३ ॥

४०　७६　११७　१५२
चन्द्रस्य मान्दं फलमभ्रवेदा गोसप्तसप्तेन्दुभुवोऽश्वितिथ्यः ।
१८५　२१४　२४०　२६२
बाणाष्टचन्द्रा युगचन्द्रदस्राः खवेददस्रा यमतर्कदस्राः ।
२८०　२९२　३००　३०२
खनागदस्रा यमनन्ददस्रा अभ्राभ्ररामा यमपूर्णरामाः ॥ ५ ॥

९३　१८२　२७०　३५२
मान्दं कुजे रामखगाः कराष्टचन्द्राः खताराः करबाणरामाः ।
४२६　४९१　५५२　६०२
रसाश्विवेदाः [५ क] क्षितिनन्दवेदाः करेषुबाणाः करपूर्णतर्काः ।
६४२　६६८　६८७　६९२
दस्राब्धितर्का गजतर्कतर्काः शराष्टतर्काः करनन्दतर्काः ॥ ६ ॥

३८　७३　१०८　१४०　१६८　१९३
नागाग्नयो रामनगा गजाशाः खेन्द्रा गजाष्टिर्गुणनन्दचन्द्राः ।
२१७　२३३　२४८　२५९
अत्यष्टिदस्रा गुणरामदस्रा नागाब्धिदस्रा नवबाणदस्रा ।
२६६　२६८
तर्काङ्गदस्रा गजतर्कदस्रा बुधस्य मान्दं फलमुक्तमेतत् ॥ ८ ॥

४०　८०　११८　१५५　१९०
पूर्णाब्धयः पूर्णगजा गजेशाः पञ्चेषुचन्द्रा गगनाङ्कचन्द्राः ।
२१५　२४४　२६३　२८०
पञ्चेन्दुदस्राः कृतवेददस्रा रामाङ्गदस्राः खभुजङ्गदस्राः ।
२९६　३०४　३०६
रसाङ्कदस्रा युगपूर्णरामास्तर्काभ्ररामाश्च गुरोर्मृदुः स्यात् ॥ ९ ॥

१५　२९　४३　५५　६६　७६
बाणेन्दवो नन्दयमास्त्रिवेदाः शराशुगास्तर्करसा रसागाः ।

---

इत. प्रभृति श्लोकेषु मन्दफलसाधनार्थं सूर्यादीनां मन्दफलाङ्का मन्द्रकेन्द्रस्य सार्धसप्त-भागवृद्ध्या प्रसाध्य पठिताः सन्ति ।

८५ ९३ ९८ १०२
'सुपूर्विकाष्टौ गुणनन्दतुल्या मातङ्गनन्दाः करपङ्क्तयश्च[२]।
१०४ १०५
वेदाभ्रसोमाः शरपङ्क्तयश्च शुक्रस्य मान्दं फलमेतदुक्तम् ॥ ११ ॥
६० ११९ १७७ २३२ २८२
षष्टिर्ग्रहेशा नगसप्तसोमा दस्राग्निदस्रा यमनागदस्राः ।
३३० ३६२ ४०५ ४२८
खरामरामा यमतर्करामाः प[५ख]श्चाभ्रवेदा गजदस्रवेदाः ।
४५४ ४६४ ४६०
वेदेषुवेदा युगतर्कवेदाः खतर्कवेदाश्च शनेर्मृदुः स्यात् ॥ १२ ॥

[ अथ ग्रहाणां मान्दाङ्काः ]—

| मान्दम् | ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सू. | ० | १७ | ३४ | ५० | ६६ | ८० | ९३ | १०४ | ११३ | १२१ | १२६ | १३० | १३१ |
| च. | ० | ४० | ७९ | ११७ | १५२ | १८५ | २१४ | २४० | २६२ | २८० | २९२ | ३०० | ३०२ |
| म | ० | ९३ | १८२ | २७० | ३५२ | ४२६ | ४९१ | ५५२ | ६०२ | ६४२ | ६६८ | ६८५ | ६९२ |
| बु. | ० | ३८ | ७३ | १०८ | १४० | १६८ | १९३ | २१७ | २३३ | २४८ | २५९ | २६६ | २६८ |
| गु | ० | ४० | ८० | ११८ | १५५ | १९० | २१५ | २४४ | २६३ | २८० | २९६ | ३०४ | ३०६ |
| शु | ० | १५ | २९ | ४३ | ५५ | ६६ | ७६ | ८५ | ९३ | ९८ | १०२ | १०४ | १०५ |
| श. | ० | ६० | ११९ | १७७ | २३२ | २८२ | ३३० | ३६२ | ४०५ | ४२८ | ४५४ | ४६४ | ४६० |

---

१. सुपूर्विकाशब्देनात्र पञ्च गृह्यन्ते । "उक्तात्युक्ता तथा मध्या प्रतिष्ठान्या सुपूर्विका । गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च" इत्यनुक्रमोक्तेषु पञ्चम छन्दः सुपूर्विका ।

२. पङ्क्तिः दशेत्यर्थः । "पङ्क्तिश्छन्दोऽपि दशमम्" इत्यमरोक्त्या पूर्वोक्तच्छन्दक्रमतश्च पङ्क्तिशब्देन दश आचार्याभिप्रेताः ।

[ इदानीं मन्दफलं साधयति ]—

स्यान्मन्दकेन्द्रोद्भवबाहुलिप्ताः खबाणवेदैर्विहृता (४५०) गताङ्कः ।
यातैष्यकाङ्कान्तरशेषघातात्खेष्वब्धिभागेन (४५०) युतोऽत्र मान्दम् ॥ १३ ॥
[1]कलादिकं स्यादथ तद्धनर्णं कार्यं ग्रहे मेषतुलादिकेन्द्रे ।
स्पष्टौ रवीन्दू मृदुना फलेन भौमादयस्तेन मृदुस्फुटाः स्युः ॥ १४ ॥

[ इदानीं सूर्यचन्द्रयोर्भुजान्तरं साधयति ]—

[1]सूर्यस्य मान्दं रसभक्तमर्के (६) लब्धा विलिप्ता मृदुवत्प्रदेयाः ।
मध्ये विधौ सूर्यफलं भभक्तं (२७) फलं कलाद्यं रविवद्विदध्यात् ॥ १५ ॥

---

१. आचार्येणैकस्मिन् पादे द्वादशमान्दाङ्काः पठिताः । अतो नवत्यंशकलासु ९०×६०= ५४०० द्वादशभाजितासु ४५० कला लभ्यन्ते । अत सार्धसप्तभागान्तरवृद्ध्या मान्दाङ्काः साधिता सन्ति । अभीष्टस्थानीयमान्दाङ्कसाधनार्थमनुपातो यदि ४५० कलाभिरेको मान्दाङ्को लभ्यते तदाऽभीष्टचापकलाभिः किमिति लब्धम् ? गताङ्कः । शेषकलासम्बन्धि-फलानयनाय पुनरनुपातो यदि ४५० आभिः कलाभिर्यातैष्यमान्दाङ्कान्तर लभ्यते तदा शेषकलाभिः किमिति लब्ध गताङ्के योजनेनाऽभीष्टमन्दफलकला भवन्तीत्युपपन्नम् । फल-संस्कारः स्पष्ट एव ।

१. मन्दफलकला एव मन्दफलोत्थासव आचार्येण गृहीताः । तत. सूर्ये भुजान्तरार्थमनु-पातः । यद्यहोरात्रासुभिर्गतिकला लभ्यन्ते तदा मन्दफलोत्थासुभिः किमिति लब्धाः कलाः षष्टिगुणिता विकला. $=\frac{६०\times मफक\times ६०}{२१६०}=\frac{मफ}{६}$=भुजान्तरसस्कार. । अत्र रविगतिः ६० गृहीता स्वल्पान्तरतः । चन्द्रस्य भुजान्तरसस्कारो ग्रहलाघवोक्तदिशा ज्ञेयः । तथैव ग्रहे धनर्णमपि ।

[ इदानीं पलभामानीय चरखण्डान्याह ]—

पुराऽयनांशोत्थदिनैः क्रियस्य[१] संक्रान्तिकालाद्दिवसार्धजाभा ।

पलप्रभा स्याच्चरखण्डकानि दिङ्[१०]नाग[८]सत्र्य[श][३।२०]गुणैर्गुणा सा ॥ १६ ॥

[ इदानीं चरानयनमाह ]—

सायना[६क]र्कभुजराशिमितैक्यं भोग्यभागहतिखाग्नि[३०]लवेन ।

युक्चरं क्रिय[१]तुला[७]रसभे[६]ऽस्वं स्वं रवौ च विपरीतमथास्ते ॥ १७ ॥

[ इदानीं चरसंस्कारं साधयति ]—

[१]चरस्य नाड्यः कलिकासु सूर्ये मध्ये विधौ विश्व[१३]हताः प्रदेयाः ।

[ इदानीमयनांशानयनमाह ]—

[२]भूदस्रवेदो[४२१]नशकस्त्रि[३]निघ्नः खपूर्णदस्रै[२००]र्विहृतोऽयनांशाः ॥ १८ ॥

---

१. पूर्वसाधितचरपलस्य घटिकाः कार्याः । ततो रवौ चरसस्कारार्थमनुपातो यदि षष्टि ६० घटिकाभिर्गतिकला लभ्यन्ते तदा चरघटिभिः किमिति लब्धाः कलाः $= \frac{\text{रग}\times\text{चरघ}}{६०} = \frac{६०\times\text{चरघ}}{६०} = \text{चरघ}$ । अत्र रविगतिः ६० कल्पिता । ततश्चन्द्रे चरसस्कारार्थमनुपातो यदि रविगतिकलाभी रविचरसस्कारो लभ्यते तदा चन्द्रगतिकलाभिः किमिति लब्धाः चरकलाः $= \frac{\text{चगक}\times\text{रचक}}{\text{रगक}} = \frac{(७६०।३५)\ \text{रचक}}{५६।८} = १३\times\text{रचक}$ स्वल्पान्तरतः ।

२. सौरमते ४२१ शककालेऽयनाशाभाव आसीत् । ततः प्रभृति वार्षिकगत्याऽयनाशवृद्धिरस्ति । तत्रायनवार्षिकगतिः ५४ विकलाः । तया ४२१ शकतोऽभीष्टशकपर्यन्तव्यतीतवर्षाणि गुणयन्ते तदाऽभीष्टवर्षारम्भ इष्टायनविकला लभ्यन्ते । ताश्च षष्टिवर्गं ३६०० भाजिता अयनाशा भवन्ति । तद्यथा$= \frac{५४\times\text{इवर्षगण}}{३६००} = \frac{३\times\text{इवर्षगण}}{२००} =$ अयनाशाः । इत्युपपन्नम् ।

[ इदानीं ग्रहाणां मन्दस्पष्टगतिसाधनमाह ]—

[1]ग्लौ केन्द्रभुक्तिर्युगनागशैला (७८४) भवेत् परेषां स्वगतिः कलाद्या ।
मान्दाङ्कविश्लेषहताऽभ्रबाणवेदैः (४५०) र्हृता सा कलिकादि यत्तत् ॥ १६ ॥
[2]स्वर्णं फलं कर्कि (४) मृगादि (१०) केन्द्रे स्वमध्यभुक्तौ क्रमशो विधेयम् ।

---

१. मन्दोच्चोनग्रहो मन्दकेन्द्रम् । अतः चमग–चउग=चन्द्रमन्दकेन्द्रगतिः = ७९०।३५–६।०=७८४।३५=७८४ स्वल्पान्तरतः। अन्येषा मध्यगतितुल्यैव स्वल्पान्तरतः केन्द्रगतिः कल्पिता । ततोऽनुपातेन मन्दगतिफल साधितम् । ४५० कलावृद्ध्या मन्दफलाङ्काः पठिताः । अतोऽनुपातो यदि ४५० कलाभिर्गतैष्यमान्दाङ्कान्तर लभ्यते तदा केन्द्रगतिकलाभिः किमिति लब्ध मन्दगतिफलम्= $\frac{\text{मान्दाङ्कान्तर} \times \text{मकेग}}{४५०}$ । गतिफलसस्कारादिक सिद्धान्तशिरोमणिवत् स्पष्टम् ।

२. मन्दकेन्द्रकल्पनाया मतभेदः । अत्र लल्लभास्करज्ञानराजप्रभृतीनामैकमत्यम्, सूर्यसिद्धान्तग्रहलाघवयोस्तु भिन्नमतम् । लल्लादयो मृदूच्चेन हीनो ग्रहो मन्दकेन्द्रमित्यामनन्ति । तथा हि—“मन्दोच्चभागरहितग्रहबाहुमौर्व्या ” इति लल्लः, “मृदूच्चेन हीनो ग्रहो मन्दकेन्द्रम् ” इति भास्करः, “मान्द केन्द मन्दतुङ्गोनखेट ” इति ज्ञानराजः । अपि च—“ग्रह सशोध्य मन्दोच्चात् ” इति सूर्यसिद्धान्तः, “मन्दोच्च ग्रहवर्जित निगदित केन्द्र तदाख्य बुधै. इति ग्रहलाघवश्च । अत्रैव च मन्दकेन्द्रानयने रङ्गनाथाचार्येण—“यदुच्चशुद्धः खगस्तदाख्य खलु केन्द्रमुक्तम्” इत्युक्तम् । अत्र समासभेदात् पूर्वोक्तमतद्वयानुकूल मन्दकेन्द्र साधयितु शक्यते । पर वस्तुत आचार्यस्य सौरमतानुकूलं ग्रहोनोच्चमेव मन्दकेन्द्रमभिमतम्। एतादृश्या मन्दकेन्द्रस्य कल्पनाया मन्दगतिफलसस्कारे स्फुटतानवबोधः प्रतीयते । अत एव ग्रहलाघवोपपत्तौ मल्लारिणा स्पष्टमुक्तम्—“अथ धनर्णोपपत्तिः । तत्र तावदुच्चोनो ग्रहः केन्द्रमित्यस्मिन् ( लल्लादीना ) पक्षे मकरादिकेन्द्रे ग्रहस्य धनफलस्यापचयान्मृगादिकेन्द्रे गतिफलमृण वर्धते । मेषादिकेन्द्रे ग्रहस्य ऋणफलवृद्धौ सत्या गतिफलमृणमपचीयते । अतो मृगादिके षड्भे

गतिर्भवेत्पुष्पवतोः स्फुटा सा भौमादिकानां तु मृदुस्फुटा स्यात् ॥ २० ॥

१० ४
[1]यद् ज्ञानराजादिभिरत्र केन्द्रे धनं मृगादावथ कर्कटादौ ।

ऋणं फलं मन्दगतेर्निरुक्तं तत् तुच्छमेवेति वयं वदामः ॥ २१ ॥

अथ शीघ्रफलसाधनम्—

८१४ १४६४ १६१२ २१६१
वेदा[ज्व?ब्ज]नागा युगतर्कशक्राः सूर्याङ्कचन्द्राः कुवनेन्दुदस्राः ।

२३४४ २४०६ २४१३
वेदाब्धिरामाश्विमिताः खगाभ्रजिनाश्च रामेन्दुजिनाः क्रमात्स्युः ॥ २२ ॥

---

केन्द्रे गतिफलमृणम् । कर्क्यादिकेन्द्रे ग्रहस्य ऋणफलह्रासे गतेर्धनफल वर्धते । तुलादित्रये केन्द्रे ग्रहधनफलवृद्धौ गतेः फलमपचीयते । अतः कर्कादिषड्भे धनमिति युक्तम् । ग्रहोनमुच्च केन्द्रमित्यस्मिन्नपि ( सूर्यसिद्धान्तादीना ) पक्षे मकरादित्रिके ऋणफलवृद्धिर्मेषादित्रिके धनफलह्रासः । अतो मकरादिषड्भे गतिफलमृणमेव । एव कर्क्यादिषट्के धनमिति । अतो युक्तियुक्त धनर्णं केन्द्रे कुलीरमृगषट्कगतः'' इति । एवमेव सूर्यसिद्धान्तोपपत्तौ श्रीसुधाकरद्विवेदिभिरप्युक्तम्—''एवमद्यतनश्वस्तनग्रहफलयोरन्तर तद्गतेः फल कर्क्यादिकेन्द्रे ग्रहर्णफलस्यापचीयमानत्वात् तुलादौ धनफलस्योपचीयमानत्वाद्धनम् । मकरादौ तु धनफलस्यापचीयमानत्वान्मेषादावृणफलस्योपचीयमानत्वादृणमिति धनर्णोपपत्ति र्भास्करोक्तैवात्र समीचीना बोध्या'' इति ।

१. अत्र श्लोक आचार्येण मन्दगतिफलसस्कारे ज्ञानराजमतमखण्डि । आचार्यदृष्टौ मकरादिकेन्द्रे मन्दगतिफल धन कर्कादिकेन्द्र ऋणमिति ज्ञानराजमतमाभाति । परमत्राचार्याणा भ्रान्तिः । वस्तुतो ज्ञानराजमतमेतन्नास्ति । आचार्येणान्यथैव प्रकल्प्य खण्डितम् । ज्ञानराजमतेऽपि मकरादिकेन्द्रे मन्दगतिफलम् ऋण कर्कटादिकेन्द्रे धनमिति । तथा चोक्तम्—

नक्रकर्किमुखकेन्द्रतः फलेनोनयुङ् निजगतिर्मृदुस्फुटा ।
ता विशोध्य चलतुङ्गभुक्तितः शेषमत्र चलकेन्द्रजा गतिः ॥ इति ।

[ सिद्धान्तसुन्दरस्फुटगतिसाधनाध्याये, श्लो०२६ ]

# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

[ त्रैमासिकी ]



प्रधानसम्पादकः

श्रीकुबेरनाथशुक्लः, एम० ए०,

व्याकरणाचार्यः ।



सहायकसंपादकः

श्रीव्रजवल्लभद्विवेदो दर्शनाचार्यः ।



वार्षिकम्
७॥)

प्रत्यङ्कम्
१॥=)

# विषय-सूची



## सम्पादकीयम्



## ग्रन्था

# सारस्वती सुषमा

काशिकराजकीयमस्कृतमहाविद्यालयमुखपत्रिका

| ६ वर्षः } | मार्गफाल्गुनौ २०११ | { ३-४ अङ्कौ |
|---|---|---|


## श्रुतिविमर्शः

### कौपीतकिब्राह्मण आचारविचाराः

अथवा

### कौषीतकिब्राह्मणपर्यालोचनम्


डाक्टरमङ्गलदेवशास्त्री, भूतपूर्वप्रधानाचार्य , रा० स० म० काशी ।


( पूर्वतोऽनुवृत्तम् )

परिजिग्रहीष्यन् । अत्र द्विवचन छान्दसमिति विनायक· । व्राजबाहू प्रसरन्तौ बाहू ।

तद्यथा श्रेयासमाहरन्नुपेयादेव तत् । ( कौ० ब्रा० २५।१० )

तद्यथाहरन् कार्यार्थी श्रेयास कार्यसाधकमुपेयादेव तत् । ( विनायक· ) ।

तद्यथा हविपोऽयातयामस्याश्नीयादेवमु तत् । ( कौ० ब्रा० ७।३ )

तद्यथा ह वै श्रद्धादेवस्य सत्यवादिनस्तपस्विनो हुतं भवत्येवं ।

( कौ० ब्रा० २।८ )

श्रद्धादेवस्य । श्रद्धैव देवरूपिणी यस्य तस्य ।

**तद्यथा हि जीर्णायै त्वचो निर्मुच्येत, इषीका वा मुञ्जादेवमेव ( एते सर्वस्मात् पाप्मनः संप्रमुच्यन्ते ) । ( कौ० ब्रा० १८।७ )**

**तद्यथोपप्रयाय स्वर्गस्य लोकस्य नेदीयस्ताया वसेदेवं तत् । ( कौ० ब्रा० ७।६ )**

उपप्रयाय समीपे गत्वा । नेदीयस्तायाम् । अतिशयेन सामीप्ये ।

**( तस्मादेनदभ्यग्रं शंसेद् यथाग्नि प्रदाव्यमतिमोक्ष्माण एवम् । ( कौ० ब्रा० १६।७ )**

अभ्यग्रम् । त्वरितम् । अग्निं प्रदाव्यम् । दावानलम् । अतिमोक्ष्माणः । अतिमोक्तु मतिक्रान्तुमिच्छन् ।

[ अतियोगेनातिक्रमार्थो मुचिः । स्वार्थे त्वकर्मक इति—"मुचोऽकर्मकस्य गुणो वा" ( अष्टा० ७।४।५७ ) इति गुण. । ] यथा स सत्वरो भवत्येवमिति भावः ।

**( तस्मादेना आरतं शंसेद् ) यथाप्सु न्युन्दमान एवम् । ( कौ० ब्रा० १६।७ )**

आरत विलम्बितम् । न्युन्दमानः क्लिद्यन् ।

**यथाऽयस्तप्तं विनयेदेव (तद् वाचो विभूत्यै) । ( कौ० ब्रा० २२।६ )**

विनयेत् । विवर्धयेत् ( तद् न्यूङ्खनम् । विभूत्यै विवृद्ध्यै । )

**यथा रथस्यान्तरौ रश्मी व्यतिषजेदेवं तत् । ( कौ० ब्रा० १४।४ )**

अन्तरौ रश्मी । सधिबन्धनार्थे ग्रन्थिबन्धने । व्यतिषजेत् । परस्परसंबद्धौ करोति ।

**यथा वै सोदर्कमेवं सप्रभृत्यन्तरूपम् । ( कौ० ब्रा० २०।४ )**

प्रत्यृचमाद्यपादे पदावृत्तिः स प्रभृतीत्युच्यते । प्रत्यृचमन्त्यपादे पदावृत्तिः सोदर्कमित्युच्यते । ( विनायक ) । अत्र "समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु" ( अष्टा० ६।३।८४ ) इति पाणिनिसूत्रस्य सगतिश्चिन्तनीया ।

**यथा संगता भूमानं देवानां पत्नीरभ्यवनयेदेव तत् । यस्तं तत्र ब्रूयात् संगता वा अयं भूमानं देवाना पत्नीरभ्यवानैषीत् सभामस्य पत्न्यभ्यवैष्यतीति तथा ह स्यात् । ( कौ० ब्रा० ७।६ )**

संगता मिलिताम्। भूमान बह्वीं सभाम्। पत्नीरम्यवनयेत्। निर्लज्जाः संमुखं नयेत्। भूमन्शब्दः सभावाची स्त्रीलिङ्ग· प्रयुक्तः। "मनः" (अष्टा० ४।१।११) इति ङीन्निषेधः। यो यजमानः। सभामस्य पत्न्यभ्यवैष्यतीति तथा ह स्यात्। तस्य पत्नी सभा निर्लज्जागमिष्यतीति स्यात्। (विनायक·)।

यथैकरात्रं सार्थान् प्रेषितानन्वियादेव तद्। यथा द्विरात्रमेवं तद्। (कौ० ब्रा० ८।९)

यथैकेन दिनेन कश्चित् सार्थं पूर्वं प्रेषयति, स्वय तदनु प्रैति। एव तद्। यथा वा द्वाभ्यामहोरात्राभ्या सार्थं पूर्वं प्रेषयति, स्वय तदनु प्रैति। एव तत्।

यथोभयतःपक्षसा रथेन धावयन्नध्वानं यत्राकूतं समश्नुवीत, एवं। यथान्यतरतःपक्षसा रथेन धावयन्नध्वान यत्राकूतं न समश्नुवीत, एवं। (कौ० ब्रा० ७।७)

पक्षश्चक्रम्।

## ७—यज्ञस्य महिमा स्वरूपं च, तथार्त्विज्यम्

प्राधान्येन यज्ञप्रतिपादनपरेषु ब्राह्मणेषु यज्ञस्य महिम्न· स्वरूपस्य च वर्णन स्वाभाविकमेव। अत एवात्र ब्राह्मणेऽपि तद्वर्तते। यज्ञो वै देवरथसदृश·, यज्ञो वै प्रजापतिरूपो विश्वजित्, यज्ञेन खलु सर्वेषामपि कामानामाप्तिः सभवति, किं बहुना, यज्ञः खलु स्वमहिम्ना विष्णुरूपत्वेन स्वर्गलोकत्वेन वा ग्रहीतु शक्यते—इत्यादिप्रकारेण यज्ञस्य महत्त्वमत्र प्रतिपाद्यते। एव तत्तद्दृष्ट्या यज्ञस्वरूपविषयेऽपि हृदयंगमा विचारा अत्रोपलभ्यन्ते। तथैव ऋत्विजा विषयेऽपि कश्चिद्विचारः सङ्क्षेपेणैवात्र समुपलभ्यते। तदेतत्सर्वं क्रमेणैवाधस्तात्सगृह्यते—

### (क) यज्ञस्य महिमा

देवरथो वा एष यद्यज्ञः। (कौ० ब्रा० ७।७)

देवगर्भो वा एष यद्दीक्षितः। (कौ० ब्रा० ७।२)

एदद्ध वा एष जायते यो यजते। (कौ० ब्रा० १५।३)

प्रजापतावेव तदहरहः प्रतितिष्ठन्तो यन्ति। बल एव तद्वीर्येऽहरहः प्रतितिष्ठन्तो यन्ति। ब्रह्मणि चैव तदरुगाये चाहरहः

प्रतितिष्ठन्तो यन्ति । त्रिवृद्वै शिल्पं नृत्यं गीत वादितमिति। तेष्वेव तदहरहः प्रतितिष्ठन्तो यन्ति । श्रियामेव तदन्ततः प्रतितिष्ठति। ऋतुष्वेव तदहरहः प्रतितिष्ठन्तो यन्ति। ( कौ० ब्रा० २९।४-६ )

प्रजापतिः प्रजाः सृष्ट्वा रिरिचान इवामन्यत। स हैक्षत कथं नु तेन यज्ञक्रतुना यजेयं येनेष्ट्वा कामानाप्नुयामवान्नाद्यं रुन्धीयेति ।
( कौ० ब्रा० १२।८ )

रिरिचान इति कानचो रूपम्। रिक्तमित्यर्थः। कामानाप्नुयाम्, अन्नाद्यमवारुन्धीयेत्येवमन्वय'।

प्रजापतिर्वै यज्ञः। तस्मिन् सर्वे कामाः, सर्वममृतत्वम्।
( कौ० ब्रा० १३।१ )

यज्ञो वै भुवनेषु ज्येष्ठः। यज्ञ उ वै प्रजापतिर्विश्वजित्।
( कौ० ब्रा० २५।११ )

यज्ञो वै विष्णुः। ( कौ० ब्रा० १८।८ )

यज्ञो वै विष्णुः। स एवास्मै यज्ञं ददाति। ( कौ० ब्रा० ४।२ )

अस्मै यजमानाय।

यस्यो ह वा अपि देवाः सकृदश्नन्ति तत एव सोऽमृतः।
( कौ० ब्रा० २।८ )

अत्र उ वाक्यालङ्कारे। हेति सर्वसमतौ। वै निश्चये। ( विनायकः )।

स यः श्रद्धानो यजते तस्येष्टं न चीयते। ( कौ० ब्रा० ७।४ )।

स्वर्गो वै लोको यज्ञः। ( कौ० ब्रा० १४।१ )

हविर्हविर्वा आत्मनिष्क्रयणम्। ( कौ० ब्रा० १०।३ )

हविर्द्वारा आत्मान निष्क्रीय अनृणो भूत्वा यजमानो यजते इति भावः।

## ( ख ) यज्ञस्वरूपविषये

पाङ्क्तो वै यज्ञः। ( कौ० ब्रा० १।३ )

पञ्चपदा पङ्क्तिः—इत्युक्त पूर्वम्। पङ्क्तेः सबन्धी पाङ्क्तः। प्रकृतीष्टावपि चत्वार

ऋत्विज पञ्चमो यजमान इति पञ्च पादा । एतत्साम्यादेव यज्ञस्यापि पाङ्क्तत्वम् । तदत्र विनायकभाष्य द्रष्टव्यम् ।

यज्ञो वै मैत्रावरुणः । ( कौ० ब्रा० १३।२ )

यज्ञो वै वैष्णुवारुणः । ( कौ० ब्रा० १६।८ )

सर्वस्मिन् यज्ञे विष्णुवरुणयोरधिपतित्वमिति भाव ।

ऐन्द्रो हि यज्ञक्रतुः । ( कौ० ब्रा० ५।५ )

केवलाग्नेयो हि यज्ञक्रतुः । ( कौ० ब्रा० १।४ )

अकृत्स्नैव वा एषा देवयज्या यद्धविर्यज्ञः । अथैषैव कृत्स्ना देवयज्या यत्सौम्योऽध्वरः । ( कौ० ब्रा० १०।६ )

भैषज्ययज्ञा वा एते यच्चातुर्मास्यानि । तस्मादृतुसन्धिषु प्रयुज्यन्ते । ऋतुसंधिषु हि व्याधिर्जायते । ( कौ० ब्रा० ५।१ )

स एष प्रजापतिरेव संवत्सरश्चतुर्विंशो यच्चातुर्मास्यानि । तस्य मुखमिव वैश्वदेवम्, दर्शपूर्णमासौ पर्वाणि, अहोरात्राण्यस्थिमज्जानि, बाहू वरुणप्रघासाः, प्राणोऽपानो व्यान इत्येतास्तिस्र इष्टयः, आत्मा महाहविः, या इमा अन्तर्देवतास्तदन्या इष्टीः, प्रतिष्ठा शुनासीरीयम् । स एष प्रजापतिरेव संवत्सरश्चतुर्विंशो यच्चातुर्मास्यानि । सर्वं वै प्रजापतिः । सर्वं चातुर्मास्यानि । ( कौ० ब्रा० ६।१५ )

अहोरात्राणि । अहोरात्रसाध्याग्निहोत्रहोमा । अहोरात्रप्रकारेण पञ्चदशावयवा । ते ग्रीवा, स्कन्धकक्षाकुकाटिकाद्वयम्, मध्यम्, कटि, जानुजङ्घापादद्वय चेति पञ्चदश । एतेष्वस्थीनि पृथक् पृथक् दृश्यन्ते । आत्मा हृदयकमलम् । अन्तर्देवता इन्द्रियाद्यवयवाधिष्ठात्र्यः । प्रतिष्ठा बलम् । सवत्सरोऽपि शुक्लकृष्णै पक्षैश्चतुर्विंशत्यवयव । ( विनायक )।

अथात साकंप्रस्थाय्यस्य । स एष श्रैष्ठ्यकामस्य पौरुषकामस्य यज्ञः । तद्यत्साकं संप्रतिष्ठन्ते साकं संप्रयजन्ते साकं भक्षयन्ते तस्मात्साकंप्रस्थाय्यः । ( कौ० ब्रा० ४।९ )

ऐन्द्रो मध्यंदिनः । ( कौ० ब्रा० ५।५ )

वसूनां वै प्रातः सवनम्। रुद्राणां माध्यन्दिन सवनम्। आदित्याना तृतीयसवनम्। ( कौ० ब्रा० १६।१ )

एषा ह वा अग्नेर्यज्ञिया तनूर्यास्य हव्यवाट्। सा वा असौ यद्दोमुष्यादित्यस्योपरिष्टाद्धव्यवभाति ज्योतिरिव। ( कौ० ब्रा० ३।३ )

अपणो वै गार्हपत्य आहवन आहवनीयः। ( कौ० ब्रा० २।१ )

किमु देवतामनावाह्य यजेत् ? ( कौ० ब्रा० ८।८ )

तद्धैक आहुर्यजमानो वै मेधपतिरिति को मनुष्य इति ब्रूयाद्देवतैव मेधपतिरिति। ( कौ० ब्रा० १०।४ )

द्वय वा इदं सर्वं छन्दस्कृत चाच्छन्दस्कृतं च। ( कौ० ब्रा० ३।२ )

अवीर्यो ह वा उ स प्रैपो योऽपुरोनुवाक्यः। ( कौ० ब्रा० ३०।११ )

ऊर्ग्वै रसो निगदः। ऊर्जमेव तद्रसं निगदेन हविषि दधाति। ( कौ० ब्रा० १२।१ )

प्रजापतिर्ह यज्ञं ससृजे। तेन ह सृष्टेन देवा ईजिरे। तेन हेष्ट्वा सर्वान् कामानापुः। तस्य हेतरार्ध्यमुपनिदधुर्य एते प्रैषाश्च निगदाश्च। अथेतरेण यज्ञेन ऋषय ईजिरे ते ह विजज्ञुरसर्वेण वै यज्ञेन यजामहे न वै सर्वान् कामान् आप्नुम इति। ते ह श्रेमुस्त एतान् प्रैषाश्च निगदाश्च ददृशुस्तेन ह सप्रैषेण सनिगदेनेष्ट्वा सर्वान् कामानापुः। एते ह ते ह वा उ प्रैषाश्च निगदाश्च। यदृग्भिर्यज्ञस्यानाप्तं तदेभिः सर्वमाप्स्याम इति। तानेतान् प्रैषानुप्रैषान् विश्वामित्रो ददर्शाथो पुरोडाशप्रैषान्, अथेतर ऋषय इतरान्। ( कौ० ब्रा० २८।१ )

इतरार्ध्यम्। इतरार्धे भवमशम्। उपनिदधु पिहितवन्तः। प्रैषाः सन्तोऽनुप्रैषा याज्या भवन्ति ते प्रैषानुप्रैषाः। पुरोडाशप्रैषाः सवनीयाना प्रैषाः। ( विनायकः )।

देवरथो वा अरणी। ( कौ० ब्रा० २।६ )

अथ यूप्य एको द्रव्य एको गर्त्य एकः। योऽवाचीनवकलः स गर्त्यस्तस्याशा नेयात्। अथ य ऊर्ध्ववकलो द्रव्यः स मानुषः कामं तस्यापि कुर्वीत। अथ यस्य प्रसव्या आदित्यस्यान्वावृत्ता वकलाः स यूप्यः स

स्वर्ग्यः। एकस्थोऽभ्रातृव्यो यो वानुवृत्तः पलाशेरा मूलात् सोऽनम्नः स पशव्यस्तं पशुकामः कुर्वीत। ( कौ० ब्रा० १०।२ )

यूपस्य काष्ठविशेषस्त्रिविध'। एको यग्यो यूपार्ह·। एको द्रव्यो द्रव्यवान्। अर्शआदिभ्योऽच्। एको गर्त्यो गर्तक्षेपार्ह'। अवाचीनवकलो नीचाग्राश। प्रमव्या प्रदक्षिणा। आदित्यम्यान्वावृत्ता ऊर्ध्वीभूत्वा कुण्डलीभूता। पशव्य पशुवन्धनयोग्य। ( विनायक )।

अयज्ञिया वै पत्न्यो बहिर्वेदि हि ताः। सस्थितेषु पत्नीसयाजेष्विति त्वेव स्थितम्। ( कौ० ब्रा० २७।५ )

बहिर्वेदि हि ता·। बहिर्वेदि गार्हपत्याग्ना हि ता विहिता। ( विनायक· )।

गार्हपत्यभाजो वै पत्न्य आहवनीयभाग्यजमानः। (कौ० ब्रा०३।९)

अपक्षयभाजो वै पितरः। तस्मादपराह्णे पितृयज्ञे न चरन्ति।
( कौ० ब्रा० ५।६ )

"यथा मासापक्षयेऽमावास्याया श्राद्धम्। पक्षापक्षये कृष्णपक्षे श्राद्धानि। सावत्सरिकापरपक्षश्राद्धान्यपि दिनापक्षये। एव पितरोऽपक्षयभाजो भवन्ति।" ( विनायक· )।

दक्षिणासंस्थो वै पितृयज्ञः। ( कौ० ब्रा० ।५।७ )

धाम वै देवा यज्ञस्यायजन्त ( ? आभजन्त ), पाथः पितरः।
(कौ० ब्रा० १०।६ )

उदिते होतव्या३मनुदित इति मीमासन्ते। स य उदिते जुहोति प्रवसत एवैतन्महते देवायातिथ्य करोति। अथ योऽनुदिते जुहोति सन्निहितायैवैतन्महते देवायातिथ्य करोति। तस्मादनुदिते होतव्यम्।
( कौ० ब्रा० २।९ )

प्रवसत इति। उदित आदित्यः प्रवसन् भवति। आतिथ्य त्वागच्छते युक्तम्। ( विनायक· )।

तदु ह स्माह कौषीतकिः। सायमस्तमिते पुरा तमसस्तस्मिन्काले जुहुयात्। स देवयानः केतुः। तमेवारभ्य स्वस्ति स्वर्गं लोकं समश्नुते। प्रातः पुरोदयादपहते तमसि तस्मिन्काले जुहुयात्। स देवयानः केतुः। तमेवारभ्य स्वस्ति स्वर्गं लोकं समश्नुते। अथो योऽतोऽन्यथाग्निहोत्र जुहोति श्यामशबलौ हास्याग्निहोत्रं विखिदतः। अहर्वै शबलः। रात्रिः श्यामः। स यो

महारात्रे जुहोति श्यामो हास्याग्निहोत्रं विखिदति। अथ यो महाह्ने जुहोति शवलो हास्याग्निहोत्र विखिदति। ( कौ० ब्रा० २।९ )

केतुरभिज्ञानरूप'। विखिदतोऽवसादयतः।

सा होवाच सन्धौ जुहुयात्। समुद्रो ह वा एष सर्वंहरो यदहोरात्रे। तस्य हैते गाधे तीर्थे यत्सध्ये। तद्यथा गाधाभ्या तीर्थाभ्या समुद्रमतीयात्तादृक् तद् यत्संधौ जुहोति। अथो देवसेना ह वा एषाध्वगा हनिष्यन्ती यदहोरात्रे। तस्या हैते पक्षसी यत्सन्ध्ये। तद्यथा पक्षाभ्यां क्षिप्रमध्वानमन्वियात्तादृक् तद् यत्संधौ जुहोति। अथो मृत्योर्ह वा एतौ व्राजवाहू यदहोरात्रे। तद्यथा व्राजबाहुभ्या परिजिग्रहीष्य(? ष)न्नन्तरेणातिमुच्येत तादृक् तद्यत्संधौ जुहोति। ( कौ० ब्रा० २।६ )

सा काचिदन्तर्वग्रहीता कुमारी। व्राजबाहू प्रसरन्तौ बाहू।

स वा एषोऽग्निरुद्यत्यादित्य आत्मान जुहोति। अथास्तं यन्नादित्यः सायेऽग्नावात्मानं जुहोति। रात्रिदेवाहन् जुहोति। अहो रात्र्याम्। प्राण एवापाने जुहोति। अपानः प्राणे। तानि वा एतानि षड् जुह्वति अन्योन्य आत्मानम्। यो ह वा एतानि षड् जुह्वति वेद, अजुह्वत एवास्य हुतं भवति। जुह्वत एवास्य द्विर्हुतं भवति य एव वेद। ( कौ० ब्रा० २।८ )

अन्योन्य इति सप्तमी ( विनायकः )। अत्र "अपाने जुह्वति प्राण प्राणेऽपान तथापरे" ( गीता ४।२९ ) इत्येतद् गीतावचनमनुसन्धेयम्।

न ह वै ता आहुतयो देवान् गच्छन्ति या अवषट्कृता वास्वाहाकृता भवन्ति। ( कौ० ब्रा० १२।४ )

तानि वै पञ्च हवीषि भवन्ति दधि धानाः सक्तवः पुरोडाशः पयस्येति। ( कौ० ब्रा० १३।२ )

एतद्वै मित्रावरुणयोः स्व हविर्यत्पयस्या। ( कौ० ब्रा० १८।१२ )

अथ वै पशुमालभ्यमान पुरोडाशो निरुप्यते। मेधो वा एष पशूना यत्परोडाशः। समेधमेवैनं तद् यज्ञियं करोति। ( कौ० ब्रा० १०।५ )

ततिर्वै यज्ञस्य पुरोडाशः। ( कौ० ब्रा० १०। ५ )

अर्ध ह वै यज्ञस्याज्यम्। अर्ध हविः। ( कौ० ब्रा० ३।४ )

आज्यहविषो देवताः। पयोव्रतो यजमानः। तत्सलोम।

( कौ० ब्रा० ८।६ )

सलोम। योग्यतायामव्ययीभावः। अनुरूपमित्यर्थः।

उपांशु घृतस्य यजति। रेतःसिक्तिर्वै घृतमुपांशु वै रेतः सिच्यते। अथ यदुच्चैः सौम्यस्य यजति चन्द्रमा वै सोमो निरुक्त उ वै चन्द्रमाः।

( कौ० ब्रा० १६।५ )

रेतःसिक्तिर्वै घृतम्। सारतरत्वात्। सौम्यस्य। सोम इन्दुः सोमद्रव्यस्याधिष्ठातृदेवतात्र यागे देवता च। तेन सौम्यं सोमद्रव्यम्, तस्येत्यर्थः। निरुक्तो विश्वविदितः।

एताभ्यां वै यज्ञस्तायते यद् घृतेन च सोमेन च।

( कौ० ब्रा०१६।५ )

एते सोमांशवः—प्रत्नोंऽशुः, यमेतमभिषुण्वन्ति। तृप्रोंऽशुः, आपः। रसोंऽशुः, व्रीहिः। वृषोंऽशुः, यवः। शुक्रोंऽशुः, पयः। जीवोंऽशुः, पशुः। अमृतोंऽशुः, हिरण्यम्। ऋगंशुः। यजुरंशुः। सामांशुः। इत्येते वा उ दश सोमांशवः। यदा वा एते सर्वे संगच्छन्तेऽथ सोमोऽथ सुतः।

( कौ० ब्रा० १३।४ )

एते सोमस्यांशवः पूर्णतासंपादकत्वेन। प्रत्नोऽंशुर्मुख्यः सोम एव। आपः,याभिः सोमरसः संपाद्यते। व्रीहिः, यवः। उभयत्र जातावेकवचनम्। स्वेषु स्थानेषूपयुज्यमानत्वादंशव एते।

अन्नं वा इळा। पशवो वा इळा। ( कौ० ब्रा० ३।७ )

पशवो वा इळा। ( कौ० ब्रा० ५।७ )

पशवो वै धाना। ( कौ० ब्रा० १८।६ )

पितृदेवत्य इव वै पशुरालभ्यमानो भवति। ( कौ० ब्रा० १०।४ )

तद्यथा ह वा अस्मिंल्लोके मनुष्याः पशूनश्नन्ति यथैभिर्भुञ्जते, एवमेवामुष्मिंल्लोके पशवो मनुष्यानश्नन्ति, एवमेभिर्भुञ्जते। स एनानिह प्रातरनुवाकेनावरुन्धे। तमिहावरुद्धा अमुष्मिंल्लोके नाश्नन्ति, नैनेन

प्रतिभुञ्जते। यथैवैनानस्मिल्लोकेऽश्नाति यथैभिर्भुङ्क्ते,एवमेवैनानमुष्मिँल्लोके-ऽश्नाति, एवमेमिर्भुङ्क्ते। ( कौ० ब्रा० ११।३ )

यथैभिर्भुञ्जते। क्रयविक्रयाद्युपायैर्भोगान् सपादयन्ति। स यजमानः ( होता वा )। अवरुन्धे विरुद्धसंबन्धरहितान् करोति।

त्रयोदश वै पशोरवदानानि। ( कौ० ब्रा० १०।६ )

सर्वा ह वै देवताः पशुमालभ्यमानमुपसगच्छन्ते मम नाम ग्रहीष्यति मम नाम ग्रहीष्यतीति। तासां सर्वासा पशावेव मनांस्योतानि भवन्ति। ( कौ० ब्रा० १०।६ )

सोम एवैष प्रत्यक्षं यत्पशुः। उदकपेयमिव हि स्याद्यदेष नालभ्येत। सवनान्येतेन तीव्रीकरोति। ( कौ० ब्रा० १२।६ )

अपापो ह वै देवाना शमिता। ( कौ० ब्रा० १०।४ )

ब्रह्मणैव तद्देवेभ्यो हविः प्रयच्छति। ( कौ० ब्रा० ३।५ )

एतद्वा आर्धुकं कर्म यद् रूपसमृद्धम्। ( कौ० ब्रा० २०।२ )

आर्धुकम्। साफल्यसम्पादकम्। ऋधेर्धातोरुकञ्।

तद्यथा ह वा अन एवं यज्ञः प्रतिमया, यथा धान्यमेवं प्रातरनुवाकः, यथा पात्राण्येवमुक्थानि। स योऽल्पकमन्वाह यथाल्पधान्ये पात्राणि समृच्छेरन्नेवं तस्योक्थानि समृच्छन्ते। उक्थानामनु समरमीश्वरो यजमानं भ्रेषोऽन्वेतोः। तस्माद्बह्वय एवानुब्रूयात्। उक्थानि तत्परिबृंहति। या यज्ञस्य समृद्धस्याशीः सा मे समृध्यतामिति या वै यज्ञस्य समृद्धस्याशीः सा यजमानस्य ( कौ० ब्रा० ११।८ )

अनः शकटम्। स होता। अल्पक प्रातरनुवाकम्। समृच्छेरन् रिक्तानि सपद्येरन्। समर रिक्तत्वम्। भ्रेषो भ्रश। अन्वेतोरन्वेतुम्। अनुगन्तुम्। ईश्वर समर्थः। बह्वय ऋचः। परिबृहति समृद्धानि सपादयति। मे मम होतु.।

तद्वै कर्म समृद्धं यत्प्रथमेनाभिव्याह्रियते। ( कौ० ब्रा० ८।८ )

प्रथमेन तृचेनेति प्रसङ्ग। अथवा, यत्प्रथमेनाभिव्याह्रियते। यस्मै प्राथम्य प्रमुखता वा प्रदीयत इति भाव'।

यद्यज्ञेऽभिरूप तत्समृद्धम्, यज्ञस्यैव समृद्ध्यै। (कौ० ब्रा० १।१)

अभिरूपता युक्तरूपता। (विनायकः)।

यद्वै यज्ञस्यातिरिच्यते भ्रातृव्यस्ते यजमानस्य प्रत्युद्यमी भवति।
(कौ० ब्रा० १८।१)

प्रत्युद्यमी। प्रतिकूलोद्यमवान्। अतिरिच्यते। आवश्यकतामतिरिच्य क्रियते। ततश्च व्यर्थ शक्तिव्ययः शत्रोर्लाभाय कल्पत इति तात्पर्यम्।

परिमितफलानि वा एतानि कर्माणि येषु परिमितो मन्त्रगणः प्रयुज्यते। अथापरिमितफलानि येष्वपरिमितो मन्त्रगणः प्रयुज्यते।
(कौ० ब्रा० २६।३)

त्रयो वै यज्ञे कामा यः संपन्ने यो न्यूने योऽतिरिक्ते। यद्वै यज्ञस्य संपन्नं तत्स्वर्ग्यम्, यन्न्यून तदन्नाद्यम्, यदतिरिक्तं तत्प्रजात्यै। तदत्रैव यजमानः सर्वान् कामानाप्नोति। (कौ० ब्रा० ११।६)

स्वर्ग्यम्। स्वर्गशब्देन पूर्णानि फलानि लक्ष्यन्ते। पूर्ण फलमित्यर्थ। अन्नाद्य तदपेक्षया न्यूनम्, कर्षणादिप्रयत्नक्लेशसाध्यत्वात्तस्य। प्रजात्यै प्रजायै इत्यर्थः। प्रजाया सुख दुःख च भवतः। अतो दु खाक्रान्त तत्फलम्। अत्रैव यज्ञकर्मण्येव।

अथ खलु श्रद्धैव सकृदिष्टस्याक्षितिः। स यः श्रद्दधानो यजते तस्येष्टं न क्षीयते। स यो मय्यक्षितिरिति विद्वान्यजते तस्येष्टं न क्षीयते।
(कौ० ब्रा० ७।४)

प्रजापतिर्वै मनः। यज्ञ उ वै प्रजापतिः। स्वयं वै तद्यज्ञो यज्ञस्य जुषते यन्मनो मनसः। (कौ० ब्रा० १०।१)

यज्ञस्य जुषते। यज्ञे प्रीतिं भजते। आत्मनस्तुष्टिरेव यज्ञसपत्तेर्मुख्य साधनमिति भावः।

आत्मदक्षिणा वै सत्रम्। तस्मादहरहर्जपेयुः—इदमहं मा कल्याण्यै कीर्त्यै स्वर्गाय लोकायामृतत्वाय दक्षिणा नयानीति। आत्मानमेवैतत् कल्याण्यै कीर्त्यै स्वर्गाय लोकायामृतत्वाय दक्षिणां नयन्ति।
(कौ० ब्रा० १५।१)

आत्मदक्षिणम् । आत्मैव दक्षिणा यस्मिंस्तत् ।

सर्वेण ह वा एष आत्मना सर्वेण मनसा यज्ञं संभरते यो यजते। तस्य रिरिचान इव वा एतस्यात्मा भवति । तमस्यैताभिराप्रीभिराप्रीणाति। तद् यदाप्रीणाति (होता) तस्मादाप्रियो नाम । ( कौ० ब्रा० १०।३ )

सभरते पुष्णाति । रिरिचान इव । रिक्त इव । यज्ञे आत्मनो मनसश्च यो व्ययस्तस्य पूर्त्तिरेव 'आप्री' सज्ञकानामृचा प्रयोजनमिति भाव. ।

अथो आत्मानमेवैतन्निष्क्रीणाति यद्दक्षिणा नीयन्ते। अथो दक्षिणाभिर्वै यज्ञं दक्षयति। तद् यद् दक्षिणाभिर्यज्ञं दक्षयति तस्माद् दक्षिणा नाम। ( कौ० ब्रा० १५।१ )

दक्षयति सामर्थ्योपेत करोति ।

शरीराणि वा एतयेष्ट्या दीक्षन्ते। या वा इमाः पुरुषे देवता यस्यैता दीक्षन्ते स दीक्षित इति ह स्माह। अनुमन्त्रयेत "मनो मे मनसा दीक्षताम्" इति प्रथमाम्, "वाङ् मे वाचा दीक्षताम्" इति द्वितीयाम्, "प्राणो मे प्राणेन दीक्षताम्" इति तृतीयाम्। मध्ये प्राणमाह मध्ये ह्ययं प्राणः। "चक्षुर्मे चक्षुषा दीक्षताम्" इति चतुर्थीम्, "श्रोत्रं मे श्रोत्रेण दीक्षताम्" इति पञ्चमीम्। दीक्षयत्यु हैवैता याः पुरुषे देवताः। ( कौ० ब्रा० ७।४ )

अथो दक्षिणाभिर्वै यज्ञं दक्षयति। ( कौ० ब्रा० १५।१ )

दक्षयति समर्धयति । परैः कृत कर्म परकीय स्याद् यदि दक्षिणा न दीयते ।

एतंवेवात्मानं दीक्षमाणोऽभिदीक्षते य एष तपति। (कौ०ब्रा० ७।४)

तिसृधन्व दक्षिणा। तत् स्वस्त्ययनस्य रूपम्। (कौ० ब्रा० ४।२)

तिसृधन्वमिति। तिसृभिरिषुभिरुपलक्षित धनुः । समासे विभक्तेर्लुकि तिसृभावश्छान्दसः। ( विनायकः )।

स्वपितीव वा एतस्याग्निर्योऽग्निमुद्वासयते। ( कौ० ब्रा० १।४ )

उद्वासयते उत्सृजति ।

## ( ग ) ऋत्विजां प्रशंसा

आत्मा वै यज्ञस्य होता। ( कौ० ब्रा० ९।६ )

एष ह वै दैव आत्मा यजमानस्य यमृत्विजः संस्कुर्वन्ति ·। अत्र हि जायते। ( कौ० ब्रा० ३।८ )

दैवो देवसबन्धी। यम् आत्मानम्। अत्र यज्ञे। जायते। यजमान इति शेषः।

द्वे वै यज्ञस्य वर्तनी। वाचान्या संस्क्रियते मनसान्या। सा या वाचा सस्क्रियते तामन्य ऋत्विज संस्कुर्वन्ति। अथ या मनसा ता ब्रह्मा। ( कौ० ब्रा० ६।११ )

वर्तनी सरण्यौ।

नन्दति ह वै यज्ञो विदुषागच्छता यन्मे समृद्धं भविष्यत्ययं मे तत्समर्धयिष्यतीति। ( कौ० ब्रा० २७।१ )

ब्रह्मणि वै यज्ञः प्रतिष्ठितः। यद्वै यज्ञस्य स्खलितं वोल्बणं वा भवति ब्रह्मण एव तत्प्राहुः। तत्स त्रय्या विद्यया भिषज्यति। ( कौ० ब्रा० ६।१२ )

स्खलित न्यूनम्। उल्बलमधिकम्।

योऽनूचानः श्रोत्रियः···आत्मा वै स यज्ञस्य। ( कौ० ब्रा० ८।३ )

## ( घ ) ऋत्विजां कर्तव्यम्

यदि कश्चित्प्रमत्त उपहन्याद्यस्तदधीयात्स तं देशं पार्श्वतः स्वाध्यायमधीयीत, अपि वा गृहपतिर्वर्त्विजा वैकः पर्यवसर्पेत्स तं देश पार्श्वतः स्वाध्यायं शंसेत्। यदि तथा न मन्यते संप्रत्येव विब्रूयात्। ( कौ० ब्रा० २७।१ )

उपहन्यात्। वेदोच्चारणे स्खलन कुर्यात्। अधीयात्। अवगच्छेदित्यर्थः। त देशं पार्श्वतः। तस्य देशस्य पार्श्वे भूत्वेत्यर्थः। न मन्यते नावबुध्येत स्खलेदेव। सप्रति तदानीमेव। विब्रूयात्। परुषवचनेन वारयेत्।

( इति ह स्माह कौषीतकिः ) यद्धि होतारो यज्ञस्य किञ्चि-दुल्बणमबुध्यमानाः कुर्वन्ति सर्वं तदग्निर्दैवो होतानुल्बणं करोति। तदेत-दृचाभ्युदितम्—

यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्त्यासः ।
अग्निष्टद्धोता क्रतुविद्विजानन् यजिष्ठो देवाँ ऋतुशो यजाति ।।
( ऋ० १०।२।५ ) इति । ( कौ० ब्रा० २६।५-६ )

स्थाणुं वर्च्छति गर्ते वा पतति धीयते वा प्र वा मीयत इति ह स्माह यद्यतिक्रान्तमुल्बणं सदस्यो बोधयेत। कुतस्यानावृत्तिरिति ह स्माहारुणिः । अंहो वा एतद्यज्ञस्य यद्यतिक्रान्तमुल्बणं सदस्यो बोधये-तेति। तस्मान्नातिक्रान्तमुल्बणं सदस्यो बोधयेतेति ह स्माह पैङ्ग्यः।

( कौ० ब्रा० २६।४ )

## ८—देवानां सामान्येन, तत्तद्देवानां पितॄणां गन्धर्वाणां रक्षसां देवासुराणां स्वर्गादिलोकानां च वर्णनम्

ऐतरेयाद्यन्यब्राह्मणेष्विव प्राधान्येन यज्ञस्वरूपादिप्रतिपादनपरेऽत्र ब्राह्मणेऽपि देवानां सामान्येन, अग्न्यादितत्तद्देवविशेषाणां पितॄणां गन्धर्वाणाम्, प्रसङ्गेनासुराणां रक्षसां च वर्णनं स्वभावत एव समुपलभ्यते। तत्र देवानां सामान्येन वर्णने तेषां त्रयस्त्रिंशत्त्वम्, सत्यहुतस्यै-वाहुतिं देवाः प्रतिगृह्णन्ति, तेऽपि नमस्कारमपेक्षन्ते, सत्यमया उ देवाः—इत्याद्यर्थजातं यत्र तत्र प्रतिपाद्यते।

तत्तद्देवानां वर्णनेऽपि बहवोऽर्थाः सुचारु चर्चिताः। तद्यथा अग्निर्वै देवानां मुखम्, अग्निर्वै पथिकृत्, अग्निर्वै देवानामवरार्ध्यो विष्णुः परार्ध्यः, आपो वै सर्वा देवताः, इन्द्रो वै मृधां विहन्ता, न वा इन्द्रादन्यदुत्तरमस्ति, ब्रह्मक्षत्रे वा इन्द्राग्नी, अनिरुक्तोऽपरिमितश्च वै प्रजापतिः, प्रजापतेः प्रत्यक्षं द्वादश तन्वः, मरुतो वै देवविशः, घोरो वै रुद्रः, अष्टनामाष्टधा विहितो महान् देवः। एवमेवोपरिनिर्दिष्टेष्वन्यविषयेष्वपि नानाविधा विचित्रा विचारा नूनं विवित्सुषां चिकीर्षकाः प्रकटीकृता दृश्यन्ते।

## ( क ) देवानां सामान्येन वर्णनम्

तिस्रो वै देवाना मनोताः। अग्निर्वै देवाना मनोता तस्मिन्ह्येषां मनास्योतानि भवन्ति। अथो वाग्वै देवाना मनोता तस्या ह्येपा मनांस्योतानि भवन्ति। अथो गौर्वै देवाना मनोता तस्या ह्येपा मनास्योतानि भवन्ति। अग्निः सर्वा मनोता अग्नो मनोताः सगच्छन्ते।

( कौ० ब्रा० १०।६ )

त्रयस्त्रिंशद्वै सर्वा देवताः। ( कौ० ब्रा० ८।६ )

त्रयस्त्रिंशद्वै सर्वे देवाः। ( कौ० ब्रा० १०।३ )

त्रयस्त्रिंशद्वै सोमपा देवता याः सोमाहुतीरन्वायत्ताः—अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रो द्वात्रिंशः प्रजापतिस्त्रयस्त्रिंशः। त्रयस्त्रिंशत्पशुभाजनाः। ( कौ० ब्रा० १२।६ )

देवाः सत्यहुतस्याहुतिं प्रतिगृह्णन्ति। (कौ० ब्रा० २।८)

सत्यहुतस्य। सत्येन हुतस्य द्रव्यस्य।

न ह वा अनार्षेयस्य देवा हविरश्नन्ति। ( कौ० ब्रा० ३।२ )

अनार्षेयस्य यजमानस्य।

नहि नमस्कारमति देवाः। ( कौ० ब्रा० २।१ )

देवा अपि नहि नमस्कार प्रत्युदासीना भवन्तीति भाव । तेऽपि नमस्कारमपेक्षन्ते, तेन प्रभाविता भवन्तीति यावत्।

प्रीत्वैव तद्देवेष्वन्ततोऽर्थं वदते। ( कौ० ब्रा० ३।९ )

स्तुतिभि प्रीति जनयित्वा ततोऽर्थं वदत इत्यर्थं ।

यद्ध वा अदुष्ट तद्देवाना हविः, न वै ते दुष्ट हविरदन्ति।

( कौ० ब्रा० १०।४ )

सत्यमया उ देवाः। ( कौ० ब्रा० २।८ )

## (ख) तत्तद्देवानां वर्णनम्

### ( १ अग्निः

अग्नि वा आत्मान दीक्षमाणोऽभिदीक्षते। ( कौ० ब्रा० ७।३ )

दीक्षमाणस्यात्मा ह्यग्निरिव भवतीत्यर्थ।

अग्निर्वै कामो देवानामीश्वरः। ( कौ० ब्रा० १९।२ )

अग्निर्वै दाता। स एवास्मै यज्ञं ददाति। ( कौ० ब्रा० ४।२ )

अस्मै यजमानाय।

अग्निर्वै देवानां मुखम्। ( कौ० ब्रा० ३।६ )

अग्निर्वै पथिकृत्। स एवैनं पुनर्यज्ञपथमपिपाथयति।

( कौ० ब्रा० ४।३ )

एनं यजमानम्। अपिपाथयति। अभिपाथयतीति पाठान्तरम्। उभयत्र प्रापयतीत्यर्थः।

अग्निर्वै भरतः स वै देवेभ्यो हव्यं भरति। ( कौ० ब्रा० ३।२ )

अग्निर्वै स्विष्टकृत्। ( कौ० ब्रा० १०।५ )

गायत्रो वा अग्निर्गायत्रच्छन्दाः। ( कौ० ब्रा० १।१ )

देवरथो वा अग्नयः। "देवरथेन स्वर्गं लोकमेति। सुकृतां यत्र लोकः। ( कौ० ब्रा० ५।१० )

ब्रह्म वा अग्निः। ( कौ० ब्रा० १२।८ )

## ( २ ) अश्विनौ

अश्विनौ वै देवाना भिषजौ। ( कौ० ब्रा० १८।१ )

## ( ३ ) अग्निरादित्यश्च

अथैते बलिष्ठे अरिष्टे अनार्त्ते देवते। ( कौ० ब्रा० ११।४ )

एते अग्निरादित्यश्च। अरिष्टे अन्येनाहिंसिते। अनार्त्ते अदीने।

## ( ४ ) अग्निर्विष्णुश्च

अग्निर्वै देवानामवरार्ध्यो विष्णुः परार्ध्यः। ( कौ० ब्रा० ७।१ )

अवरार्ध्यः। अवरार्धे पूर्वार्धे मुख्य। परार्ध्यः। परार्धे द्वितीयार्धे मुख्यः।

( सावशेषम् )

# ऋग्वेदस्य ऋक्संख्या

श्रीयुधिष्ठिरो मीमांसकः, प्राच्यविद्याप्रतिष्ठानम्, दिल्ली ।

सुविदितमेवैतद् वैदिकवाङ्मयजुषां यदासन् कदाचिदृग्वेदस्यैकविंशतिसंहिता । तासु सम्प्रत्येकैव संहिता समुपलभ्यते । प्राचीनपरम्परासंरक्षकाणां भारतीयविदुषां जागरूकप्रयत्नेन न्यूनान्यूनं पञ्चसहस्राब्दादियमविकृतत्वोपलभ्यते । तत्रोऽस्मादेतद्दशसहस्रर्क्परिमाणाया संहिताया नैकोऽपि वर्णो विकृतिं प्राप, ऋचां न्यूनाधिक्यस्य तु का कथा । एवं परमप्रयत्नेन संरक्षितायामप्यृक्संहितायां तदृक्परिमाणे प्राचीना अर्वाचीनाश्च प्रायेण सर्वेऽपि वैदिकवाङ्मयविदो मिथो विप्रवदन्ते । तथाहि—

शौनकोऽनुवाकानुक्रमण्यां १०५८० ऋचः पादश्चैकः, छन्दःसंख्यापरिशिष्टकारः १०४०२ ऋचः, सर्वानुक्रमणीटीकाकारो जगन्नाथः १०५५२ ऋचः, चरणव्यूहव्याख्याता महिदासो बालखिल्यसंहिता १०५५२ ऋचः, तदुद्धृतश्लोकानुसारं १०४१७ ऋचः, ऋग्भाष्यरचयिता वेङ्कटमाधवः १०४०७ ऋचः, स एव द्विपदापक्षे १०४४० ऋचः, स्वामी दयानन्दः १०५८९ ऋचः, परं तदुल्लिखिते प्रतिमण्डलयोगे संहत्य १०५२१ ऋचः, अध्यापको मेकडानलः १०४४७ ऋचः, स एव द्विपदापक्षे १०५६९ ऋचः, पण्डितसत्यव्रतः १०५७७, हरिप्रसादो वैदिकमुनिश्च १०४४० ऋचः इति संगिरते ।

किमत्र वैमत्ये कारणम्, कियत्यश्चर्क्संहितायां वस्तुत ऋच इत्यस्मिन् निबन्धे विवेचयामः ।

शतपथे ऋचां परिमाणमेवमुल्लिखितम्—"स ऋचो व्यौहत द्वादशबृहतीसहस्राणि, एतावत्यो ह्यृचो याः प्रजापतिसृष्टाः" [ १०।४।२।२३ ] इति ।

एतदनुसृत्य द्वादशबृहतीसहस्राणामृचां ( १२००० × ३६ = ) ४३२००० चतुर्लक्षाणि द्वात्रिंशत्सहस्राणि चाक्षराणि जायन्ते । नच शौनकीयानुवाकानुक्रमण्यापि संवदति । वर्तमानायामृक्संहितायां क्षेप्रप्रश्लेषाभिनिहितसन्धीनां व्यूहे कृतेऽपि ३९७२६५ त्रिलक्षाणि सप्तनवतिसहस्राणि पञ्चषष्ट्यधिकद्विशतान्येवाक्षराणि भवन्ति । अतो जायते संदेहः—किमियं शातपथी ऋगक्षरमात्रा वेदितव्या एवर्चामुत वेदचतुष्टयान्तर्वर्तिनीनां सर्वासामृचामिति ।

अत्रैव पश्यामः—शतपथस्योक्तप्रकरणे ऋग्यजुःसाम्नामेवाक्षरमानमुच्यते नाथर्वाङ्गिरसाम् । वैदिकवाङ्मये यत्र क्वचिदपि ऋग्यजुःसाम्नां त्रयाणामेवोल्लेखस्तत्र ऋगादीनि पदानि न वेदपराणि,

अपि तु मन्त्रविशेषपराण्येव। यथोक्तं जैमिनिना—"यत्रार्थवशेन पादव्यवस्था सा ऋक्, गीतिषु सामाख्या, शेषे यजुःशब्दः" [मी० २।१।३५-३७] इति। अत एव सम्भाव्यते–उक्ता शतपथी ऋगक्षरगणना वेदचतुष्टयान्तर्गतानां सर्वासामेवर्चाम्। तत्रैतावान् सन्देहोऽवशिष्यते यच्छौनकेनानुवाकानुक्रमण्यां पारायणे १०५८० अशीत्यधिकपञ्चशतोत्तरदशसहस्रमृचः पादश्चैकः इति ऋङ्मानमुक्त्वा शतपथवत् ४३२००० चतुर्लक्षाणि द्वात्रिंशत्सहस्राणि चाक्षराणीत्यक्षरमानमुक्तम्, तत्तु ऋग्वेदीयर्चामेव कथमुपपद्यत इति देवा एव वेदितुमर्हन्ति।

ऋक्संहितान्तर्वर्तिनीनामृचां संख्यामुपक्रम्य विदुषां वैमत्यं प्रागुपदर्शितम्। तत् किं वास्तविकमुत गणनापद्धतिभेदमूलकमुत भ्रमप्रमादादिजन्यमिति सम्प्रति विचार्यते—

## विशिष्टा ऋग्गणनापद्धतिः

दृश्यन्ते हि दाशतय्यां काश्चनैतादृश्य ऋचो याः कदाचिद् द्विपदारूपेण गण्यन्ते, कदाचिच्च चतुष्पदारूपेण। तेन द्विपदात्वेन चतुष्पदात्वेन च परिगणने संख्यावश्यं भिद्येत। अतस्तदेव तावद्विविच्यते—

सन्ति ऋग्वेद आहत्य १५७ सप्तपञ्चाशदुत्तरशतं द्विपदा ऋचः। तासु १७ सप्तदश नित्याः, १४० चत्वारिंशदुत्तरशतं च नैमित्तिकाः। इमाश्चत्वारिंशदुत्तरशतमृचो यज्ञे शंसनादिषु द्विपदात्वेन विनियुज्यन्ते। तथा च ब्राह्मणं भवति—"द्विपदाः शंसति" इति। सूत्र्यते चाश्वलायनेन—"पश्वा न तायुमिति द्वैपदम्" [८।१२] इति। एता एवाध्ययनकाले चतुष्पदा भवन्ति। तदुक्तमृक्सर्वानुक्रमण्याम्—"द्विर्द्विपदास्त्वृचः समामनन्ति" [उपोद्घाते] इति। षड्गुरुशिष्य सूत्रमिदमित्थं व्याचख्यौ—"ऋचोऽध्ययने अध्येतारो द्वे द्वे द्विपदे एकैकामृचं कृत्वा समामनन्ति समामनेयुः अधीयीरन्। म्ना अभ्यासे, लिङर्थे लेट्, शपि मनादेशः। द्वे द्विपदे यासां ता ऋचो द्विर्द्विपदाः। समामनन्तीति वचनाच्छंसनादौ न भवन्ति। तेन 'पश्वा न तायुम्' [ऋ० १।६५] इति शंसने दशर्चत्वम्, आम्नाये चाध्ययने पञ्चत्वं भवति" इति। अयमेवाभिप्रायः प्रथममण्डलान्तर्गतपञ्चषष्टितमसूक्तव्याख्याने सायणेनाप्युपवर्ण्यते। चरणव्यूहटीकाकारो महिदासोऽप्याह—"हवने एकैका, अध्ययने द्वे द्वे आमनन्ति" [पृ० १०] इति। निमित्तं यज्ञे शंसनं प्राप्य एता द्विपदा भवन्ति, अत एव नैमित्तिका द्विपदा उच्यन्ते, न तु स्वभावसिद्धा द्विपदाः। एतेनासां चतुष्पदात्वमेव वास्तविकं स्वरूपमित्युक्तं भवति। अर्थोऽप्यासां चतुष्पदानामेव संगच्छते न द्विपदानाम्।

## ऋग्वेदस्य ऋक्संख्या

काश्च ता नैमित्तिकाश्चत्वारिंशदुत्तरशतं द्विपदा इति जिज्ञासायां मोहदास आह—

"पश्वा न तायुम् [ १।६५।१–१० ] दश, रयिर्न [ १।६६।१–१० ] दश, वनेषु [ १।६७।१–१० ] दश, श्रीणन् [ १।६८।१–१० ] दश, शुक्रः शुशुक्वान् [ १।६९।१–१० ] दश, वनेम पूर्वीः [ १।७०।१–१० ] दश, अग्ने त्वं न [ ५।२४।१–४ ] चत्वारि, अग्ने भव [ ७।१७।१–६ ] षट्, प्र शुक्रैतु [ ७।३४।१–१० ] दश, राजा राष्ट्राणाम् [ ७।३४।११–२० ] दश, क इं व्यक्ता [ ८।२६।१–१० ] दश, परि प्र धन्व [ ९।१०९।१–१० ] दश, त ते सोतारः [ ९।१०९।११–२२ ] द्वादश, इमा नु कम् [ १०।१५७।१–४ ] चत्वारि, आ याहि वनसा [ १०।१७२।१–४ ] चत्वारि, इति नैमित्तिकद्विपदाश्चत्वारिंशोत्तरशतम् ( १४० )" [ पृ० १८ ] इति ।

नैमित्तिकेतरा सप्तदश नित्या द्विपदा उपलेखसूत्र [ ६।१–२ ] परिगण्यन्ते ।

इदमत्रावधेयम्—प्रतिसूक्तमृक्संख्यानिर्देशे कात्यायनेन ऋक्सर्वानुक्रमण्यामिमा १४० चत्वारिंशदुत्तरशतं नैमित्तिका द्विपदा ऋचो द्विपदात्वेनैव निर्दिष्टाः ।

### मैक्समूलरीय ऋक्संस्करणे द्विपदा ऋचः

त्रिंशदुत्तरैकोनविंशतितमे ( १९३० ) वैक्रमाब्दे ( सन् १८७३ ई० ) मैक्समूलरेणातिपरिश्रमेण संस्कृत्य ऋग्वेदस्य प्रथमं संस्करणं प्रकाशितम् । विद्यमानास्वपि कतिपयासु महतीषु भ्रान्तिषु तदत्युत्तमं संस्करणमित्यत्र नास्ति विवादावसरः ।

तत्र मैक्समूलरेण प्रथममण्डले पञ्चषष्टितमसूक्तादासप्ततितमं षष्टिर्नैमित्तिका द्विपदा ऋचश्चतुष्पदीकृत्य त्रिंशत् मुद्रिता, प्रतिचतुष्पदमपि च मन्त्रसंख्या निर्दिष्टा । पञ्चमे मण्डले चतुर्विंशतितमस्य सूक्तस्य चतस्रो द्विपदाश्चतुष्पदीकृत्य मन्त्रद्वयं मुद्रितम्, तत्र च प्रथमस्यान्ते १।२ एका द्वे च, द्वितीयस्यान्ते ३।४ तिस्रश्चतस्रश्च संख्या निवेशिता । शिष्टेषु मण्डलेषु परिशिष्टाः षट्सप्ततिर्नैमित्तिका द्विपदा द्विपदात्वेनैव मुद्रिता । एवं नैमित्तिकद्विपदानामृचां मुद्रणे मैक्समूलरेण त्रयो विकल्पाः समाश्रिता । तत्र प्रथमः—आद्यमण्डलान्तर्गता ( सू० ६५–७० ) षष्टिर्नैमित्तिका द्विपदाश्चतुष्पदीकृत्य मुद्रिता, तथैव च तासु त्रिंशत्संख्या निवेशिता । द्वितीयः—पञ्चममण्डलस्य ( सूक्त २४ ) चतस्रो नैमित्तिकद्विपदाश्चतुष्पदीकृत्य मुद्रिता, संख्या च प्रतिमन्त्रान्ते द्विपदानुसारिण्येव द्वे द्वे ( १।२, ३।४ ) विवृता । तृतीयः—अवशिष्टाः षट्सप्ततिर्नैमित्तिका द्विपदा द्विपदारूपेणैव मुद्रिता इति । इत्थमनुमिनुमो यन्मैक्समूलरेण नैमित्तिकद्विपदानां स्वरूपमेव सम्यङ् नाज्ञायि ।

एतदेवोक्तदोषदूषितं मैक्समूलरीयमृक्संस्करणं प्रमाणीकृत्योपयुञ्जाना बहव आधुनिका विद्वांस ऋक्परिगणने विभ्रान्ता इत्यनुपद वक्ष्याम ।

## अनुवाकानुक्रमण्युक्ता ऋक्संख्या

शानकेनानुवाकानुक्रमण्यामृक्संख्या द्विरुक्तेव । तत्र तावत् प्रतिवर्गान्तर्गतऋक्संख्यानुसारं वर्गान् निदर्शयन्नाह—

एकर्च एकवर्ग. ( १ ) स्याद्‌द्वकश्च ( १ ) नवकस्तथा ।
द्वौ ( २ ) वर्गौ तु द्वृचो ज्ञेयौ त्र्यून तृचशत ( ९७ ) स्मृतम् ॥४०॥
चतुष्क शतमेक च चत्वार सप्ततिस्तथा ( १४७ ) ।
पञ्चकाना सहस्र तु द्वे च सप्तोत्तरे शते ( १२०७ ) ॥४१॥
त्रीणि शतानि षट्काना चत्वारिंशत् षट् च ( ३४६ ) वर्गा ।
शतमूनविंशति. (११९) सप्तकानान्यूना षष्टिर् (५९) अष्टकानाम् ॥४२॥

एषा गणनैव विस्पष्ट प्रतिपत्तव्या—

| प्रतिवर्गमृक्संख्या | | वर्गसंख्या | | समस्तऋक्संख्या |
|---|---|---|---|---|
| १ | × | १ | = | १ |
| २ | × | २ | = | ४ |
| ३ | × | ९७ | = | २९१ |
| ४ | × | १४७ | = | ५९६ |
| ५ | × | १२०७ | = | ६०३५ |
| ६ | × | ३४६ | = | २०७६ |
| ७ | × | ११९ | = | ८३३ |
| ८ | × | ५९ | = | ४७२ |
| ९ | × | १ | = | ९ |
| योग | | २००६ | | १०४१७ |

एवमाहत्यर्ग्वेदे (२००६) षडधिकद्विसहस्र वर्गा, ( १०४१७ ) सप्तदशाधिकचतु शतोत्तरदशसहस्रमृचो भवन्ति । सैषा ऋक्संख्या शाकलचरणान्तर्गतायाः शैशिरीयसहिताया बोध्या, "तान् पारणे शाकले शैशिरीये वदन्ति ( ३६ )" इत्युपक्रम्योक्तवर्गसंख्यानिर्देशात् । अत्र

वालखिल्या ऋचो न सङ्कलिताः, न चापि नैमित्तिका द्विपदा द्विपदात्वेन परिगणिताः । वर्तमानायामृक्संहितायामपि वालखिल्या ऋचो विहाय वर्गाः ( २००६ ) षडुत्तरद्विसहस्रमेव, परं मन्त्रसंख्या तु भिद्यते, तत्र मन्त्राः ( १०४०२ ) द्व्यधिकचतुःशतोत्तरदशसहस्रमिता एवोपलभ्यन्ते । एतत् पञ्चदशमन्त्राधिक्यं शाखाभेदकृतमित्यनुमिनुमः । न चानुवाकानुक्रमण्या पञ्चदश मन्त्राधिक्यं दृष्ट्वा सञ्ज्ञानसूक्तस्थाः पञ्चदश मन्त्रा अत्र सङ्कलिता इत्यूहनीयम्, तेषां सङ्कलने हि तत्सूक्तस्य चत्वारो वर्गा अपि संगृहीताः स्युः, तथा सति वर्गसंख्या षडधिकद्विसहस्रस्थाने दशाधिकद्विसहस्रं भवेत् । अतः क एते पञ्चदश मन्त्राः, कुत्र कुत्र चैते पठिता इति न शक्यते ज्ञातुम्, तथाविधस्य निर्देशस्याभावात् । तदनन्तरं च—

> ऋचां दश सहस्राणि ऋचां पञ्च शतानि च ।
> ऋचामशीतिः पादश्च पारणं सम्प्रकीर्तितम् ॥

इत्यनेन श्लोकेन १०५८० अशीत्यधिकपञ्चशतोत्तरदशसहस्रमृचः पादश्चैक इति पारणे ऋक्संख्यां दर्शयति ।

इयं संख्या पूर्वनिर्दिष्टसंख्यातो नितरां भिद्यते । तत्रैवं समन्वयः—अस्मिन् श्लोके पारणशब्देन तत्रभवाञ्छौनकाचार्यः शाकलचरणान्तर्वर्तिसर्वशाखागतानामृचां परिमाणं प्रतिपादयति । तथा चोक्तं लौगाक्षिस्मृतौ—

> ऋचां दश सहस्राणि ऋचां पञ्च शतानि च ।
> ऋचामशीतिः पादश्च पारायणविधौ खलु ॥
> पूर्वोक्तसंख्यायाश्चेत्तु सर्वशाखोक्तसूक्तगाः ।
> मन्त्राश्चैव मिलित्वैव कथनं चेति तत्पुनः ॥ इति ।

[ 'वैदिकवाङ्मय का इतिहास' ग्रन्थे उद्धृता, भाग १, पृ० १३४ ]

शौनकोक्तमन्त्रसंख्यानं चरणव्यूहपरिशिष्टेऽपि निर्दिश्यते । तथा हि—

> ऋचां दश सहस्राणि ऋचां पञ्च शतानि च ।
> ऋचामशीतिः पादश्चैतत् पारायणमुच्यते ॥ [ पृ० १८ ] इति ।

श्लोकमेनं विवृण्वन् महिदासः १०५८० अशीत्यधिकपञ्चशतोत्तरदशसहस्रमृचः पादश्चैक इत्यृक्संख्यानमित्थमुपपादयाञ्चकार—

"एतत् पारायणं वालखिल्यैर्विना संख्यातम् । वालखिल्यानि पारायणे न सन्ति" [पृ० १७] ।

'अथाध्ययने ऋक्सङ्ख्योच्यते—षण्णवत्यधिकचतुःशतदशसहस्राणि ( १०४९६ ), ता नैमित्तिकद्विपदाश्चत्वारिंशदुत्तरशतसहिता दशसहस्राणि ( षष्ट्यधिकपञ्चशतानि ) १०५६६, सज्ञानमुशना वदन् सूक्तस्य पञ्चदश ऋच एकीकृत्य १०५८० एव पारायणे ऋक्सङ्ख्या। ऋचां दशसहस्राणीति वचनस्य सङ्ख्या पूर्णा भवतीत्यर्थः। एका उर्वरिता, सा 'भद्रं नो अपि वातय मनः' [ ऋ० १०।२०।१ ] इति पादाधिक्यम्'' [ पृ० २१ ] इति।

सन्त्यृग्वेदे कतिपया ऋचो यासु त्रयोऽर्धर्चाः श्रूयन्ते, ताश्च महिदासेन चरणव्यूहटीकायां (पृ० १९, २०) चतुर्नवतिः परिगणिताः। तासामध्ययने द्वयोरर्धर्चयोरेकामृचं कृत्वा परिशिष्टमेकमर्धर्चं चैकामृचं मत्वा परिगणनं क्रियते। तथा सति चतुर्नवतिऋचामष्टाशीत्युत्तरं शतमृचः सम्पद्यन्ते। तदेवमृचां योगः—१०४०२ द्व्यधिकचतुःशतोत्तरदशसहस्रमृचो बालखिल्यरहिताः, ९४ चतुर्नवति-सङ्ख्या च त्र्यर्धर्चानामृग्द्वयकल्पनयोत्पन्ना, नैमित्तिकद्विपदानां द्विपदारूपेण परिगणनाद् विवृद्धा ७० सप्ततिसङ्ख्या, सज्ञानसूक्तं च पञ्चदशर्चम्। एवम् १०५८१ एकाशीत्यधिकपञ्चशतोत्तरदशसहस्र-मृचः सञ्जाताः। तत्र—''भद्रं नो अपि वातय मनः'' [ ऋ० १०।२०।१ ] इत्येकपदा ऋक्।

महिदासोक्तोपपत्तौ स्तो द्वे भ्रान्ती। तत्र प्रथमा—महिदासेनात्र—''अध्ययने ऋक्सङ्ख्यो-च्यते'' इत्युपक्रम्यापि नैमित्तिका द्विपदा द्विपदात्वेन परिगणिताः। न च ता अध्ययने द्विपदात्वेन गण्यन्ते, किन्तर्हि चतुष्पदात्वेनेत्युक्तं पुरस्तात्। सिद्धान्तितं च तेन स्वयमेवान्यत्र—''हवन एकैका, अध्ययने द्वे द्वे'' इति, ''तास्त्वृचोऽध्ययने चतुष्पदा कृत्वेत्यर्थः'' [ पृ० १९ ] इति च। द्वितीया च—अनुवाकानुक्रमण्यां शौनकेन या १०४१७ सप्तदशाधिकचतुःशतोत्तरदशसहस्रमृचः पारायणे परिगणितास्तासु सज्ञानसूक्तस्थपञ्चदशर्चां सन्निवेशो नास्तीत्युक्तं पुरस्तात्। अतोऽत्र सज्ञानसूक्तगतानामृचां सकलनमपि चिन्त्यम्।

## छन्दःसङ्ख्यापरिशिष्टोक्ता ऋग्गणना

अस्ति कस्याश्चिदृक्शाखाया एकादशश्लोकात्मकं छन्दःसङ्ख्यासंज्ञकं परिशिष्टम्। तत्र चेमे श्लोकाः—

> एकपञ्चाशद् ऋग्वेदे गायत्र्यः शाकलेयके।
> सहस्रं द्वितयं चैव चत्वार्येव शतानि तु ॥ १ ॥
> त्रीणि शतानि सैकानि चत्वारिंशत्तथोष्णिहः।
> अनुष्टुभां शतान्यष्टौ पञ्चाशत् पञ्चसंयुताः ॥ २ ॥

## ऋग्वेदस्य ऋक्संख्या

बृहतीनां शतं ज्ञेयमेकाशीत्यधिकं बुधैः ।
शतानि त्रीणि पङ्क्तीनां द्वादशाभ्यधिकानि तु ॥ ३ ॥
पञ्चाशत् त्रिष्टुभः प्रोक्तास्तिस्रश्चैव ततोऽधिकाः ।
सहस्राण्येव चत्वारि विज्ञेयं तु शतद्वयम् ॥ ४ ॥
चत्वारिंशत्तथाष्टौ च तथा चापि शतत्रयम् ।
जगतीनामियं संख्या सहस्रं तु प्रकीर्तितम् ॥ ५ ॥
दशैवातिजगत्योऽपि तथा सप्त न संशयः ।
शक्वर्योऽपि तथैवोक्तास्तथा नव विचक्षणैः ॥ ६ ॥
नव चैवातिशक्वर्यः षडष्टयः प्रकीर्तिताः ।
अशीतिश्च चतस्रश्च तथात्यष्टिऋचः स्मृताः ॥ ७ ॥
धृतिद्वयं विनिर्दिष्टमेकातिधृतिरेव च ।
एकपदास्तु षट् प्रोक्ता द्विपदा दश सप्त च ॥ ८ ॥
प्रगाथा बार्हता येऽत्र तेषां शतमुदाहृतम् ।
चतुर्नवतिरेवोक्तास्तद्वद् द्वृचो[1]रस्त्वसंशयाः ॥ ९ ॥
काकुभानां तु पञ्चाशद् विज्ञेया पञ्चसंयुता ।
महाबार्हत एवैक एव सार्धशतद्वयम् ॥१०॥
एवं दशसहस्राणि शतानां तु चतुष्टयम् ।
ऋचां द्व्यधिकमाख्यातमृषिभिस्तत्त्वदर्शिभिः ॥११॥ इति ।

एष्वन्त्यं विहाय दशसु श्लोकेषु गायत्र्यादिच्छन्दोऽनुसारं या ऋक्संख्या परिगणिता, तदनुसारम्—

गायत्र्यः २४५१ एकपञ्चाशदधिकचतुःशतोत्तरद्विसहस्रम् ।
अनुष्टुभः ८५५ पञ्चपञ्चाशदधिकाष्टशतम् ।
बृहत्यः १८१ एकाशीत्यधिकैकशतम् ।

---

१ द्वृचशब्दे पाणिनीयव्याकरणेन साक्षादप्रतिपादितोऽपीकारलोपः पृषोदरादित्वाद् द्रष्टव्यः । तस्य च विकल्पाद् द्व्यृचशब्दोऽप्युपपद्यते । त्रेश्च रेफेकारयोर्नित्ये लोपे तृच इत्येव भवति ।

| | |
|---|---|
| पङ्क्त्य | ३१२ त्राणि शतानि द्वादश च। |
| त्रिष्टुभ | ४२५३ चत्वारि सहस्राणि द्वे शते त्रिपञ्चाशच्च। |
| जगत्य | १३४८ अष्टचत्वारिंशदधिकत्रिशतोत्तरैकसहस्रम्। |
| अतिजगत्य, | १७ सप्तदश। |
| शक्वर्य | १९ एकोनविंशति। |
| अतिशक्वर्य | ९ नव। |
| अष्ट्य | ६ षट्। |
| अत्यष्टय | ८४ चतुरशीति। |
| धृती | २ द्वे। |
| अतिधृतिर | १ एका। |
| एकपदा | ६ षट्। |
| द्विपदा | १७ सप्तदश। |
| बार्हता प्रगाथा | १९४ चतुर्नवत्यधिकशतम। |
| काकुभा. प्रगाथा | ५५ पञ्चपञ्चाशत्। |
| महाबार्हतः प्रगाथ | १ एक.। |

एषु २५० सार्धद्विशतप्रगाथा द्वृचास्तेषा ५०० पञ्चशतमृचः। तत्सकलय्यैकादशे श्लोके १०४०२ द्व्यधिकचतुःशतोत्तरदशसहस्रमृच शाकलेयक ऋग्वेदे परिसख्याता।

एतदृक्सख्यापरिसख्यानविषये पण्डितसत्यव्रतसामश्रमिणा स्वीय ऐतरेयालोचन एवमलेखि—

"छन्द सख्योल्लिखितोक्तसर्वसकलनसख्या तु प्रतिच्छन्द सख्यातोऽपि विरुद्धैव प्रतीयते। तद्यथा तत्रोक्त श्लोके —गायत्र्य २४५१, उष्णिह ३४१, अनुष्टुभ ८५५, बृहत्य १८१, पङ्क्तय. ३१२, त्रिष्टुभ ४२५३, जगत्य १३४८, अतिजगत्य १७, शक्वर्य. ९, अतिशक्वर्य ९, अष्टय ६, अत्यष्टय ८४, धृत्यौ २, अतिधृति १, द्विपदा १७, एकपदा ६, बार्हतप्रगाथा १९४, ककुप्प्रगाथा. ५५, महाबार्हतप्रगाथ १। तदेव तदुक्तप्रतिच्छन्द सख्याना सकलनया १०१४२ ( द्विचत्वारिंशदधिकशतोत्तरदशसहस्रम् ) ऋच. स्यु। पूर्वप्रदर्शितश्लोकतस्तु गम्यन्ते १०४०२ ( द्व्यधिकचतु.शतोत्तरदशसहस्रम् )। तदत्र प्राय सर्वत्र सकलनभ्रमोऽस्माभिर्ग्रन्थ-दृष्ट्या प्रमाणित एव" [ पृ० १८३ ] इति।

## ऋग्वेदस्य ऋक्संख्या

अत्र महापण्डितस्यापि सामश्रमिमहाभागस्य द्विविधो भ्रमोऽभूत् । प्रथम —सप्तश्लोकस्योत्तरार्धे 'तथा' पदं द्विरुक्तम् । तत्राद्यं सर्वार्धगताया अतिजगतीगणनाया निदर्शकम्, अपरं प्रागुक्ताया दशसङ्ख्याया समुच्चायकम् । तत्रातिजगतीवच्छक्करीछन्दांस्यपि गणनीयानीत्यभिप्रेयते । सामश्रमिमहोदयेन पुनरनवधानतः शक्करीणां गणनस्थाने नवैव शक्कर्यः परिगणिताः । द्वितीयश्च—नवमे श्लोके विरुद्धप्रगाथा द्वृचा उक्ता । अतस्तेषां २५० सार्धद्विशतप्रगाथानां पञ्चशतमृचः सम्पद्यन्ते । ऋक्सर्वानुक्रमण्याः परिभाषाप्रकरणेऽपि—'बृहतीसतोबृहत्यौ बार्हतः ककुप् चेत् पूर्वा काकुभः, महाबृहतीमहासतोबृहत्यौ महाबार्हतः' इत्यादिभिर्वाक्यैः द्वृचानां प्रगाथत्वमुच्यते । भगवता पाणिनिनाऽपि—'सोऽस्यादिरिति च्छन्दसः प्रगाथेषु' (अ० ४।२।५५) इति सूत्रयता प्रगाथानामनेकर्चत्वं प्रतिपादितम् । तदविज्ञायैव सामश्रमिणा सार्धद्विशतप्रगाथानां सार्धद्विशतर्च एव परिगणिताः । पण्डितहरिप्रसादोऽपरनाम्ना वेदिकमुनिरिति स्वीये वैदिकसर्वस्वग्रन्थे इत्थमेवाविचार्य सामश्रमिमतमनुससार ।

छन्दःसङ्ख्यापरिशिष्टोक्तगणनायां चत्वारिंशदुत्तरशतं नैमित्तिक्यो द्विपदा ऋचश्चतुष्पदीकृत्य सङ्ख्यामतिनीता । यास्तत्र सप्तदश द्विपदाः स्मर्यन्ते ता नित्या द्विपदाः । इत्थं द्विपदापक्षे सप्तत्यृचो द्विगुणीकृत्य परिगणने १०४७२ द्विसप्तत्यधिकचतुःशतोत्तरदशसहस्रमृचो भवन्ति । अत्र वालखिल्यानामशीतिऋचां सन्निवेशो न विद्यते । कदाचिच्छन्दःसङ्ख्यापरिशिष्टं शाकलचरणान्तर्गतायास्तादृशशाखायाः स्याद् यस्यां वालखिल्या ऋचो न स्युः । शैशिरीयशाखायास्तु नेदं सम्भवतीति विस्पष्टमेव, यतोऽनुवाकानुक्रमण्यनुसारं तत्र पञ्चदशर्चोऽधिका (१०४१७) विद्यन्ते ।

## ऋक्सर्वानुक्रमण्युक्ता ऋक्संख्या

अस्ति कात्यायनीयर्क्सर्वानुक्रमण्या द्विविधः पाठः । एकत्र वालखिल्यसूक्तानामृषिदैवतच्छन्दसां निर्देशो नोपलभ्यतेऽपरत्र च दृश्यते । तत्र सर्वानुक्रमणीव्याख्याता षड्गुरुशिष्यः प्रथमं पाठमनुससार, पण्डितजगन्नाथस्तु द्वितीयम् । तत्र प्रथमपाठानुसारं वालखिल्यऋचो विहाय कात्यायनोक्तानां प्रतिसूक्तर्क्संख्यानां सङ्कलने (१०४७२) द्विसप्तत्यधिकचतुःशतोत्तरदशसहस्रमृचो भवन्ति । द्वितीयपाठानुसारं वालखिल्यानामृचां परिगणने (१०५५२) द्विपञ्चाशदधिकपञ्चशतोत्तरदशसहस्रमृचः सम्पद्यन्ते । अयमेव च सर्वानुक्रमणीटीकाकृतो जगन्नाथस्य पक्षः । अत्रोभयथा पाठेऽपि नैमित्तिका द्विपदा द्विपदारूपेण परिगणिताः । चरणव्यूहव्याख्याता महिदासोऽप्याह—

“वालखिल्यसहिता सर्वानुक्रमणीयमन्त्ररूपी सङ्ख्या उच्यते द्विपञ्चाशदधिकपञ्चशतदशसह-

त्मम् १०५५२। बालखिल्यव्यतिरिक्तसंख्या तु द्विसप्तत्यधिकचतुःशतदशसहस्रमृक् १०४७२। एतत्संख्या नित्यद्विपदानैमित्तिकद्विपदासहिता [ पृ० १७ ]" इति।

## वेङ्कटमाधवीया ऋग्गणना

विक्रमाब्दस्य द्वादशशताब्द्या लब्धजनिमा वेङ्कटमाधव ऋग्वेदस्य लघुभाष्यस्यं पञ्चमाष्टकस्य पञ्चमाध्यायस्योपोद्घाते ऋग्वेदीयर्चा सङ्ख्यानित्थं निर्दिदेश—

> शतैश्चतुर्भिरधिकमयुतं गणितं मया।
> द्वे च यान्यतिरिच्येते द्विपदाश्चात्र संगताः ॥२१॥
> पृथग् यदा तु गणनं द्विपदानां तदाधिकाः।
> चतुःशतादशीतिश्च वाक्यं च ग्रहवानयम् ॥२२॥

अर्थाद् ऋग्वेदे १०४०२ द्व्यधिकचतुःशतोत्तरदशसहस्रमृचः सन्ति। यदा तु द्विपदाः पृथग्गण्यन्ते तदा १०४८० अशीत्यधिकचतुःशतोत्तरदशसहस्रं भवन्ति।

अत्र द्विपदापक्ष ऋचः परिगणयन् बभ्राम माधवः। तथा हि—द्व्यधिकचतुःशतोत्तरदशसहस्रासु (१०४०२) ऋक्षु केवलं चत्वारिंशदुत्तरशतं द्विपदा ऋच एव चतुष्पदीकृत्य सप्ततिः परिगणिताः, अतो द्विपदापक्षे शिष्टा सप्ततिसंख्यैव परिवर्धनीया। वेङ्कटमाधवेन त्वष्टसप्ततिसंख्या वर्धिताऽतो मन्यामहे तेन द्व्यधिकचतुःशतोत्तरदशसहस्रासु (१०४०२) नित्यनैमित्तिकानां द्विपदानामेकां विहाय षट्पञ्चाशदधिकशतर्चां चतुष्पदीकृता अष्टसप्ततिसंख्या परिगणितेति मतं स्यात्। सप्तपञ्चाशदुत्तरशतर्क्षु द्विपदासु समदश नित्या द्विपदास्ता ह्युभयथाऽपि परिगणने न भिद्यन्ते, अव-

---

१ वेङ्कटमाधवेनर्ग्वेदस्य द्वे भाष्ये विरचिते। प्रथमं लघु, अपरं बृहत्। लघुभाष्यस्य डाक्टरलक्ष्मणस्वरूपेण सम्पादितस्य त्रयो भागाः प्रकाशिताः। बृहद्भाष्यस्याडियारनगराद्द्वयोः खण्डयोः प्रथमाष्टकं प्रकाशितम्। इदं बृहद्भाष्यमतिपाण्डित्यपूर्णम्। लघुभाष्यस्य प्रत्यध्यायमादौ ये विषयाः सङ्क्षेपत उपन्यस्तास्तेऽस्मिन् भाष्ये विस्तरशो व्यवहृताः। अस्य बृहद्भाष्यस्यैक एव त्रुटिबहुलो हस्तलेखः उपलब्धः। बृहद्भाष्यस्य रचयिता अपरो माधव इति तत्संपादकः प्रतिजानीते, परं तन्मिथ्या। निघण्टुटीकाकारेण वेङ्कटमाधवनाम्नोद्धृतानां पाठानामत्र दर्शनात्, लघुभाष्यस्योद्धरणे 'प्रथमभाष्यम्' इति विशेषणस्य निदर्शनाच्च। (द्र० नि० भाष्य १।१४।१८)। अत्र विस्तरशो विचारः श्रीपण्डितभगवद्दत्तविरचिते 'वैदिकवाङ्मय का इतिहास' ग्रन्थस्य प्रथमभागस्य द्वितीयखण्डे ( पृ० ३५–३७ ) द्रष्टव्यः।

शिष्टाश्चत्वारिंशदुत्तरशतं द्विपदा एव द्विपदापक्षे चतुष्पदापक्षे च सङ्ख्याभेदं जनयन्ति । अतो द्विपदापक्षे सप्ततिसङ्ख्यैव परिवर्जनीया, नाष्टसप्ततिरिति दिक् ।

एतदनन्तरमृग्वेदस्य वर्गसङ्ख्या निदर्शयन्नेवमृक्सङ्ख्यामाह—

> एकर्च एको वर्गः स्याद् द्व्यृचौ द्वौ नवकावुभौ ।
> एकोनं स्यात् त्रिकशतं चतुष्कं पञ्चसप्ततिः ॥
> अधिकं च शतं वर्गाश्चतुःपञ्चाशदष्टकाः ।
> एकविंशशतं प्राहुः सप्तकानां च वैदिकाः ।
> त्रीणि शतानि षट्कानां चत्वारिंशत् त्रयस्तथा ।
> पञ्चकानां सहस्रं च द्वे शते नवकं तथा ॥

एषा वर्गसङ्ख्या तदनुसारिणी चर्क्सङ्ख्येत्थमवगन्तव्या—

| प्रतिवर्गमृक्सङ्ख्या | | वर्गसङ्ख्या | | ऋक्सङ्ख्या |
|---|---|---|---|---|
| १ | × | १ | = | १ |
| २ | × | २ | = | ४ |
| ३ | × | ९९ | = | २९७ |
| ४ | × | १७५ | = | ७०० |
| ५ | × | १२०९ | = | ६०४५ |
| ६ | × | ३४३ | = | २०५८ |
| ७ | × | १२१ | = | ८४७ |
| ८ | × | ५४ | = | ४३२ |
| ९ | × | २ | = | १८ |
| योगः | | २००६ | | १०४०२ |

एवमृग्वेदे षडधिकद्विसहस्रं वर्गाः, द्व्यधिकचतुःशतोत्तरदशसहस्रमृचश्च परिसङ्ख्याताः ।

तदनन्तरमनुवाकानुक्रमण्युक्तर्चां गणनां दूषयन्नाह—

> ऋचां दशसहस्राणि ऋचां पञ्चशतानि च ।
> ऋचामशीतिः पादश्च पाठोऽयं न समञ्जसः ॥

एतेन प्रतीयते माधवोऽनुवाकानुक्रमण्युक्तपरिगणनाप्रकारं नावबुबुधे, अन्यथा तद्गणनां नादूदुषत् । ( सावशेषम् )

# भाषा नाम का ?

श्रीको०अ०सुब्रह्मण्य-अय्यर , लक्ष्मणपुरविश्वविद्यालय , लक्ष्मणपुरम् ।

प्रायेण सर्वेषु भारतीयेषु संस्कृतमहाविद्यालयेषु विश्वविद्यालयान्तर्गतेषु संस्कृतविभागेषु च संस्कृतभाषाया संस्कृतवाङ्मयस्य च या पठनपाठनशैली प्रचलिता दृश्यते तस्या इदमेव स्वरूप यत् संस्कृतवाङ्मये तेषु तेषु शास्त्रेषु समुपलभ्यमानाना तत्त्वानामर्थाना च संस्कृतभाषया वाङ्गलभाषया वा तत्तद्देशभाषाभिर्वा विद्यार्थिनामवबोधार्थ विविच्य साम्प्रदायिक्या तुलनात्मिकयैतिहासिक्या वा दृष्ट्या प्रतिपादनमिति । शोभन चेद कार्यमित्यत्र नास्ति कोऽपि संदेह । पर तु विदितमेवेद सर्वेषा यदद्य खलु पाश्चात्त्यदेशेषु विविधानि विज्ञानानि शास्त्राणि च वृद्धि भजन्ते यदीयानि तत्त्वानि तत्तत्पाश्चात्त्यभाषामयेषु ग्रन्थेषु निबन्धेषु चाविष्क्रियन्त इति । कि तेषा तत्त्वाना संस्कृतभाषया प्रतिपादनमशक्यक्रियम् ? कि वा विद्वज्जनानर्हं तत्कर्म ? नोभयमिति ममाभिप्राय । तादृशे कर्मणि कृत प्रयत्नो भवेद्विद्यावृद्धावुपयोगीति मनसि निधायैव मया "भाषा नाम का" इत्यय निबन्धविषयो निर्धारित । अद्य खलु पाश्चात्त्यदेशेषूत्तरोत्तर विकसत्सु विज्ञानेष्वन्यतमं भवति भाषाविज्ञानम् । सर्वेष्वपि पाश्चात्त्यदेशेषु तस्मिन् क्षेत्रे प्रयतमानाना विदुषा सख्या भवति भूयसी । अतस्तद्विषय-मधिकृत्य प्रतिवर्ष तत्तत्पाश्चात्त्यभाषाभिर्विरच्यमानाना प्रकाश्यमानाना च निबन्धानामपि सख्या भवति विपुला । एतेषु निबन्धेषु भाषाविषयकाणि बहूनि मतानि तत्त्वानि च प्रतिपाद्यन्ते । तेष्वे-कस्य तत्त्वस्य वा तत्त्वद्वयस्य वा संस्कृतभाषया प्रतिपादने क्रियमाणो यत्नो विफलो न भवेदिति मन्यमानेन मया निबन्धोऽयं विरच्यते ।

प्राचीनसंस्कृतवाङ्मये वाग् वाणी-गी -शब्द-भाषेत्येवमादय परस्परसबद्धार्थाभिधायिनो बहव. शब्दा प्रयुक्ता दृश्यन्ते । तेषु वाक्-शब्द-भाषेत्येतत्पदत्रयस्यार्था विशेषतो विचारणीया अस्माभि । श्रुतिषु वाक्शब्दस्यासख्यानि प्रयोगस्थलानि विद्यन्ते । कदाचित् स सब्दो निखिलस्यास्य जगतोऽ-धिष्ठानभूतमद्वयचैतन्य ब्रह्म द्योतयति, यथा ऋग्वेदीयदशममण्डलस्य पञ्चविंशत्युत्तरशततमे सूक्ते । कदाचिच्छ्रुतिस्तैस्तैरिन्द्रवायुचन्द्रादित्याग्निविराट्प्रजापतिसमुद्रसलिलसवत्सरसावित्रीसरस्वतीसुपर्णीद्यौ-रन्तरिक्षपृथिवी-अनुष्टुब्बृहती-मनोमतियज्ञादिभिस्तत्त्वैर्वाचस्तादात्म्य प्रतिपादयति । प्रायेण तु वाक्शब्देन सा शक्तिरभिप्रेता यया मनुष्य स्वकीयाश्चित्तवृत्ती पदवाक्यादिप्रयोगेण परान् बोधयति ।

इयमेव शक्तिवाङ्नामकं कर्मेन्द्रियमिति वक्तुं शक्यते। शब्दशब्दश्च प्रायेण ध्वन्यात्मके वर्णात्मके वा श्रोत्रग्राह्येऽर्थे प्रयुज्यते, आप्तोपदेशरूपे प्रमाणेऽपि। केचिच्छब्दस्य द्रव्यत्वमिच्छन्ति, परे गुणत्व-मित्यन्येयं कथा। भाषाशब्दोऽष्टाध्याय्यां महाभाष्ये च प्रायेण छन्दोभिन्नां लौकिकीं व्यावहारिकीं भाषां बोधयति। भाषाशब्दो हि छन्दःशब्दप्रतिद्वन्द्वित्वेन प्रयुज्यते भाष्ये, यथा—'यद्येवं तर्हि च्छन्दस्यवग्रहशब्दात् परच्छाया स्यज् भवत्येव भाषायामपि प्राप्नोति" ( म० भा० ३ १ ८. ), इति। 'यद्येवं तर्हि च्छन्दस्यनादेशस्यापि गमेरार्धधातुके भवति, एवं भाषायामपि प्राप्नोति' ( म० भा० ३ ४ ७६ ) इत्यादिवाक्यम्।

अधुनाधुनिकैर्विद्वद्भिर्भाषा नाम कया दृष्ट्याधीयते, तन्मतानुसारेण भाषायाः किं स्वरूपमिति विचारणीयम्। अद्यत्वे खलु विविधशास्त्रोपासकैर्विद्वद्भिर्भाषामधिकृत्य विचारः क्रियते। भाषणं नाम काचिच्छारीरिकी क्रिया यस्यां बहूनि शारीरकाण्यङ्गानि व्याप्रियन्ते। अतः शरीरविज्ञानव्यसनिनो वागिन्द्रियव्यापाराणामध्ययनं कुर्वन्ति। भाषणं खलु मानसी क्रियापि भवति। अत एव मनोविज्ञान-कोविदा ज्ञानानां वाचश्चान्योन्यसम्बन्धस्वरूपावबोधने विपुलं प्रयत्नं कुर्वन्ति। एकसमाजान्तर्गतानां मनुष्याणां परस्परव्यवहारसिद्ध्यर्थमुपयुज्यते भाषेति भाषणं नाम सामाजिकी क्रियापि भवति। अतः समाजशास्त्रोपासकाः सततपरिवर्तमानायाः सामाजिकव्यवस्थायाः भाषाणां विकासे प्रभावं प्रदर्शयन्ति। अन्ततो जगति तत्र तत्र तदा तदा तास्ता भाषाः प्रचलिता दृष्ट्वैतिहासिकास्ता भाषास्तेषु तेषु भाषापरिवारेषु विभजन्ते।

एवं बहुविधैर्विद्वद्भिरद्यत्वे भाषामधिकृत्य विचारः क्रियते। यद्यप्येवं तथापि तेषां दृष्टिः स्वस्वशास्त्रप्रभाविता भवतीति स्वाभाविकमेतत्। न खलु शरीरविज्ञानव्यसनिनां वा मनोविज्ञानविदां वा समाजशास्त्रोपासकानां वैतिहासिकानां वा भाषा नाम मुख्योऽध्ययनविषयः। प्रसङ्गत एव तैर्भाषास्वरूपावबोधने प्रयत्नः क्रियते। ये पुनराधुनिकाः शाब्दिकास्तेषां पुनर्भाषैव मुख्योऽध्ययन-विषयः। अतस्तेषां दृष्टिबाढं भिन्ना भवति, सैव चास्माकं विशेषतो विचारार्हा। यतः सैव भाषाणा-मध्ययने मुख्या दृष्टिः। का सा दृष्टिरिति चेत्, सा खल्वित्थं निरूपयितुं शक्यते—निखिलोऽपि लोकव्यवहारस्तदैव प्रसिध्यति यदा मनुष्यः स्वगतान् भावानर्थांश्च परान् बोधयितुं शक्नोति। न खल्वेते मनुष्यस्याभ्यन्तरा भावाः परस्य साक्षाद्बाह्येन्द्रियगोचरा भवन्ति। अतस्तदभिव्यञ्जने कश्चिदुपा-योऽवश्यमाश्रयणीयः। यतस्तदधीनं हि समस्तं सामाजिकजीवितम्। अत्रायमेवोपायो भवितुमर्हति यद्बाह्येन्द्रियग्राह्याणामाभ्यन्तरभावावेदकानां प्रतीकानां समाश्रयणम्। तेन हि मनुष्यस्य चित्तवृत्तयः परप्रतीतिगोचरा भवन्ति। यदृच्छया मार्गे दृश्यमानं मित्रं प्रति य आदरोऽस्माकं हृदये समुद्बोध्यते

न साक्षाद्बाह्येन्द्रियगोचर इति कृत्वेव तत्प्रदर्शनार्थं मित्रस्य पुरतश्चक्षुरिन्द्रियग्राह्योऽञ्जलिबन्ध क्रियतेऽस्माभि । प्रतिस्मृता श्रोतु भाषितु वाऽशक्ता गिविधाभिश्चेष्टाभि सवाद कुर्वन्तोऽस्माभि सदृष्टा । अत्राञ्जलिबन्धादिकं चक्षुरिन्द्रियग्राह्य गमक भवति आदरादिक च गम्यम् । नाट्यशास्त्रे वर्णितानि शिरोहस्तोर पार्श्वकटीपादानामङ्गाना नेत्रभ्रूनासाधरकपोलचिबुकानामुपाङ्गाना च कर्माणि तत्तद्वस्तूना तत्तद्भावाना चावेदकानीति सर्वविदितमेतत् । कदाचिद् गम्यगमके भिन्नबाह्येन्द्रिय-गोचरे भवत । यथा वर्णमालान्तर्गता वर्णा भवन्ति श्रोत्रेन्द्रियगोचरा, तद्बोधकानि लिप्यक्षराणि तु चक्षुरिन्द्रियगोचराणि । श्रुतिस्मृतिविहिततत्कर्मानुष्ठानावसरेऽस्माभिस्ताम्ता हस्तचेष्टारूपा मुद्राः क्रियन्ते या विविधाध्यात्मिकतत्त्वाना प्रतीकानि भवन्ति । त्वगिन्द्रियग्राह्यमपि गमक भवितु शक्नोति, यथा पाश्चात्त्यदेशेषु सुहृदो समागमावसरे परस्पर पाणिनिपीडनम् । न चेय रीति केवल पाश्चात्त्य-देशेषु प्रसिद्धेति भ्रमितव्यम । श्रूयता श्रीरामचन्द्रेण सख्यमिच्छत सुग्रीवस्य वचन वाल्मीकि-रामायणगतम्—

> रोचते यदि वा सख्यं बाहुरेष प्रसारित ।
> गृह्यता पाणिना पाणिर्मर्यादा बध्यता ध्रुवा ॥ इति,

ततश्च—

> एतत्तु वचन श्रुत्वा सुग्रीवेण सुभाषितम् ।
> स प्रहृष्टमना हस्त पीडयामास पाणिना ॥ इति च ।

एवमस्माभिर्विविधा गम्यगमकपद्धतयो लोकव्यवहारसिद्ध्यर्थमुपयुज्यन्ते । एतासा पद्धतीना साधर्म्यवैधर्म्यविवेचकप्रयोजनकमेक नवीन विज्ञान पाश्चात्त्यदेशेषु विकास भजते यत् प्रतीक-विज्ञानम (the Science of Symbols) इति वक्तु शक्यते । तस्यैवाङ्गभूतमिद भाषाविज्ञान नाम शास्त्रम् । यतः सर्वास्वपि गम्यगमकपद्धतिष्वाङ्गलभाषाया Systems of Symbols इति नाम्ना प्रसिद्धासु सैवाभ्यर्हिता या भाषेति व्यवह्रियते । अस्या हि भाषानाम्न्या गम्यगमकपद्धतौ वर्णात्मकशब्द श्रोत्रेन्द्रियग्राह्यो गमको भवति विपुलवैचित्र्यभाग्, वक्तृबुद्धि-गतोऽर्थश्च भवति गम्य । महती खल्वियं भाषानाम्नी गम्यगमकपद्धति, अथवा सज्ञासज्ञिपद्धतिः । इतश्चास्या इतरसज्ञासज्ञिपद्धत्यपेक्षयाभ्यर्हितत्व यदत्र सज्ञाना सज्ञिना च महद् वैचित्र्य वैपुल्य चोपलक्ष्यते, येन लोकव्यवहारः सुष्ठु सपन्नो भवति ।

एवभूताया भाषानाम्न्या सज्ञासज्ञिपद्धतेराधुनिकशाब्दिकदृष्ट्या कि कि वैशिष्ट्य-मित्यधुना विचारणीयम् । अस्माक प्राचीनै शाब्दिकैर्यानि वाचश्चत्वारि पदानि परापश्यन्ती-

मध्यमावैखरीनामकानि वर्णितानि तथापि इयं न पाश्चात्यानां शाब्दिकानां विमर्शविषयः । यतस्ते तत् स्वाध्ययनक्षेत्राद् बहिर्भूतं मन्यन्ते । भवेत् तत् केषाञ्चित् पाश्चात्यानां दार्शनिकानां मनोविज्ञानविदां च विचारविषयः । येयं मध्यमा तामधिकृत्य यद्यपि कैश्चित् पाश्चात्यैः शाब्दिकैः स्वकृतिषु किञ्चित् किञ्चिल्लिखितं दृश्यते तथापि वस्तुतः साऽपि न तेषां विचारविषयः । वैखर्येव तेषां मुख्योऽध्ययनविषयः । तस्याः पाश्चात्यैः शाब्दिकैः स्वस्वरीत्याऽध्ययनं क्रियते । इदमस्माभिः सर्वदा स्मरणीयं यत् पाश्चात्याः शाब्दिका विभिन्नदेशीया विविधभाषाभाषिणो विविधसम्प्रदायानुसारिणश्च भवन्ति । यद्यपि तेषां शाब्दिकत्वं समानं तथापि तेष्ववान्तरभेदा बहवः सन्ति, बहुषु विषयेषु च तेषां विप्रतिपत्तिर्दृश्यते । अतस्तेषां भाषाविषयकेषु मतेषु महद् वैचित्र्यं समुपलभ्यते । यानि मतानि प्रायेण सर्वैः स्वीक्रियन्ते तान्येवात्र प्रतिपादनमर्हन्ति । यदिदं वैखरीनामकं वाच्यं पदं तत् वस्तुतो दृष्टं न तु किञ्चिद् वस्तु, परं शब्दोच्चारघटितम् । तेष्वङ्गद्वयं विशेषतोऽस्माकं ग्रहणार्हम् । किं तदङ्गद्वयमिति चेत्, उच्यते । स्वामिनमनुगच्छन्तीं कृष्णां सवत्सां गां दृष्ट्वा तस्य स्वानुभवस्याऽन्यस्य परावबोधनार्थं वक्ता—"कृष्णा सवत्सा गौरागच्छति" इति वदति । एवं वक्तुं प्रवृत्तो वक्ता शक्तिग्रहेण पूर्वशिक्षितानां शब्दानां प्रयोगं करोति । यद्यपि शब्दाः पूर्वशिक्षितास्तथापि तेषां प्रयोगस्तु तात्कालिकः । एवमन्यत्र किञ्चित् पूर्वसिद्धं वस्तु किञ्चिच्च तात्कालिकम् । यत् पूर्वसिद्धं वस्तु तस्य सिद्धौ शक्तिग्रह एक एवोपायः । शक्तिग्रहश्च कथं भवतीति प्रश्ने समुदिते पाश्चात्याः शाब्दिका अपि तानेव शक्तिग्रहोपायानभ्युपगच्छन्ति येऽस्माकं शास्त्रकारैः —

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

इत्यादिवाक्येषु निर्दिष्टाः । संस्कृतभाषागतानां शब्दानां शक्तिग्रहे व्याकरणकोशाप्तवाक्यानां प्राधान्यम्, आङ्ग्ली-हिन्दी आदिभाषागतानां शब्दानां शक्तिग्रहे व्यवहारस्य प्राधान्यमित्यन्यदेतत् । भवतु प्राधान्यं यस्य कस्यचनोपायस्य । इदं त्ववश्यमस्माभिरवगन्तव्यं यत् पाश्चात्यशाब्दिकमतानुसारेण प्रयोगात् प्रागेव सिद्धं वस्त्वेव भाषाशब्दवाच्यं भवति । वस्तुपदवाच्यं पूर्वसिद्धं तद्वस्तु । वक्ता तत्पूर्वसिद्धं वस्तु शैशवे महता कालेन महतायासेनानेकस्खलितान्यनुभूयात्मसात् करोति । यद्यपि वक्ता तदात्मसात् करोति तन्न वक्तृधर्मत्वेन गण्यते । तत्रायमेव हेतुर्यद् वक्ता तद् यथासिद्धमेवात्मसात् करोति । न स्वेच्छया तत् परिवर्तयितुं शक्नोति । तथाकरणेऽपशब्दनिष्पत्तिः स्यात् । 'कृष्णा सवत्सा गौरागच्छति' इत्यत्र गोशब्दस्य स्त्रीलिङ्गत्वं कृष्णा-सवत्सेतिविशेषणयो-

र्विशेष्यलिङ्गानुयायित्व गमेर्मकारस्य छत्वमित्यादौ विषये वक्तुर्न कोऽपि स्वेच्छया परिवर्तनाधिकारः। यथाशक्तिग्रहमेव प्रयोगोऽनुमत.। अत एव वक्त्रपेक्षया पूर्वसिद्धमिद वस्तु समाजधर्मत्वेन गण्यत आधुनिकशाब्दिकै। एव भाषा नाम सामाजिको धर्मः, तस्या यस्तात्कालिक' प्रयोगः स तु वक्तृगतो धर्म। प्रयोगो नाम वक्त्रा बुद्धिपूर्वक क्रियमाणा काचित् क्रिया। वक्ता हि स्वगतान् भावानर्थांश्च प्रकटयितु वाक्यानि रचयति। रचितानि च वाक्यानि तद्गतवर्णाना स्थानकरणप्रयत्नाद्यनुसारेणोच्चारयति। वाक्यरचनायामस्ति वक्तु' किञ्चित् स्वातन्त्र्यम्। स एवानुभवः सर्वैर्वक्तृभिस्तैरेव वाक्यैः प्रकटयितव्य इति नास्ति नियम। न च स सभवति। कश्चित्–"कृष्णा सवत्सा गौरागच्छति" इति वदेत्, अन्यस्तु–"असिता वत्ससहिता धेनुरायाति" इति वदेत्। स्वानुभवावेदकशब्दनिर्धारणे भवति वक्तु' किञ्चित् स्वातन्त्र्यम्। निर्धारिताना शब्दाना सस्कारविषये तु नास्ति वक्तुः स्वातन्त्र्यम्। एव स्वानुभवावेदकवाक्यरचन रचितवाक्यानामुच्चारणमित्यङ्गद्वयघटिता या क्रिया सैव प्रयोगः, आङ्गलभाषाया 'Speech' इति, फ्रेंचभाषाया 'Parole' इति चोच्यते। सस्कृतभाषाया 'भाषणम्' इति वक्तु शक्यते। एव वैलर्या वाचो यन्मुख्यमङ्गद्वय तत्रैक शक्तिग्रहोपायाश्रयेग वक्तुः पूर्वसिद्ध वक्तृस्वातन्त्र्यागोचर सामाजिकधर्मभूतं भाषेत्युच्यते। अपर च तात्कालिक वक्तृस्वातन्त्र्यगोचर वक्तृधर्मभूत भाषणमित्युच्यते।

यदिद वक्तु' स्वातन्त्र्यागोचर पूर्वसिद्ध भाषानामकमङ्ग तस्यास्त्यशत्रयम्—वर्णमाला, शब्दकोशः, सस्कारसपच्चेति। एते त्रयोऽप्यशा' परस्परसबद्धाङ्गघटिताः। एते त्रयोऽपि वक्त्रपेक्षया पूर्वसिद्धा, वक्त्रा च शैशवे महताभ्यासेन गृह्यन्ते। प्राचीनभारते सस्कृतभाषासंबन्धिनामेषा त्रयाणामशानामध्ययनार्थं पृथक् पृथक् शास्त्राणि प्रतिष्ठापितान्यभवन्। वर्णमालाविषयक शास्त्र शिक्षा, शब्दराशिविषयक शास्त्र कोशसाहित्यममरसिहादिप्रणीतम, संस्कारविषयक च शास्त्र व्याकरण पाणिन्यादिप्रणीतम्। यद्यपि शास्त्राणि भिन्नानि तथापि परस्परमत्यन्तसबद्धा एते भाषाशा इति त्रिविधा अपि शास्त्रकारा शाब्दिका एव। य एते त्रयोऽशास्त्रिष्वपि, तेष्वस्ति किञ्चिद् गमक किञ्चिच्च गम्यम्। यतो भाषा नाम काचिद् गम्यगमकपद्धतिरथवा सज्ञासज्ञिपद्धतिरिति पूर्वमवोचाम। अतो भाषाया सर्वष्वपि भागेष्वस्ति किञ्चिद् गमक किञ्चिच्च गम्यम्। प्रायेण शब्दरूप भवति गमक गम्य चार्थरूपम्। शब्दराशिरूपे भाषाशे शब्दरूप भवति गमकमर्थरूप च गम्यमिति विशेषतो विवेचन नापेक्षते, यतोऽतीव स्पष्टमिद तत्त्वम्। सस्काररूपे भाषाशेऽपीयमेव दशा। तत्र हि प्रत्ययागमविकरणोपसर्गादिशब्दरूपाणि गमकानि, तेषा कारकसख्याकाललिङ्गोपग्रहपुरुषादिरूपा अर्थाश्च गम्याः शास्त्रे वैशद्येन प्रतिपादिता'। अधुना प्रश्नोऽय समुल्लसति–

आधुनिकशाब्दिकदृष्ट्यैतयोर्गम्यगमकयोरर्थशब्दयोः परस्पर कः सबन्ध , तयोश्च कि किं स्वरूप-मिति । नास्माक भारतीयाना नूतनः कश्चित् प्रश्नोऽयम । समुद्भावित एवाय प्रश्नोऽस्माक पूर्वाचार्यैं । समाहितश्च स्वस्वमूलसिद्धान्तानुसारेण । महर्षे. कात्यायनस्य सर्वप्रथमे—"सिद्धे शब्दार्थ-सबन्धे" इति वार्त्तिके प्रतिपादित एव स्पष्ट वैयाकरणसिद्धान्तः । सिद्धशब्दस्य नित्यपर्यायत्व नित्यत्वस्य कूटस्थनित्यत्व प्रवाहनित्यत्वमिति द्वैविध्यम् , 'तदपि नित्य यस्मिस्तत्त्व न विहन्यते" इति नित्यलक्षणमित्येतत् सर्व सिद्धशब्दव्याख्यानावसरे भाष्यकारे प्रतिपादितम् । यद्यपि पाश्चात्त्याः शाब्दिका शब्दार्थसबन्धस्य प्रवाहनित्यत्व वा, "तदपि नित्य यस्मिस्तत्त्व न विहन्यते" इति लक्षित नित्यत्व वानायासेन स्वीकुर्युस्तथापि शब्दार्थयो क सबन्ध इति प्रश्न कुर्वता तेषा न नित्यत्वानित्यत्वविषयक प्रश्न. । तेषामभिप्रायस्त्वयम्—कि तत्तद्भाषागताना शब्दाना तत्त-दर्थबोधने काचिद् विशिष्टा योग्यतास्ति यान्येषु शब्देषु न विद्यते । शब्दानामर्थबोधकत्व कि स्वाभाविक स्वरूपाधीनमाहोस्वित् कृत्रिम समाजकृतमिति । एव प्रश्न समुद्भाव्य प्रायेण तैरित्थ समाधीयते—नास्ति शब्दार्थयो कश्चित् स्वाभाविकः सबन्धः । अस्माच्छब्दादयमर्थो बोद्धव्य इति य' समाजकृत सङ्केतस्तज्ज्ञानमेव शब्दस्य स्वार्थबोधकत्वे कारणम् । न च समाजः प्रायेण शब्दस्य स्वरूपे कञ्चिद् विशेष दृष्ट्वा त स्वार्थबोधने सङ्केतयति । शब्दस्वरूपे कस्यचिद् विशेषस्या-भावेऽनावश्यकत्वे चेदमेव प्रमाण यत्तत्तद्भाषागतानि परस्परभिन्नस्वरूपाणि पदानि तस्यैवार्थस्य बोधने समर्थानि दृश्यन्ते । आङ्गलभाषागतः H O R. S E–वर्णसमुदायात्मक' Horse शब्दो यथा तुरगरूपमर्थ बोधयति तथैव अ-श्-व्-अ-वर्णसमुदायात्मक' संस्कृतभाषागतोऽश्वशब्द' । घ्-ओ-ड्-आ वर्णसमुदायात्मको हिन्दीभाषागतो घोडाशब्द' । एतेषा भिन्नस्वरूपाणा त्रयाणा शब्दाना तुरगरूपार्थावबोधने तुल्य सामर्थ्य प्रतीयतेऽस्माभि. । अत एवाधुनिकैः शाब्दिकै शब्दार्थसबन्धस्य स्वाभाविकत्वमर्थात् शब्दस्वरूपगतविशेषायत्तत्वं न स्वीक्रियते । यस्य कस्यापि शब्दस्य यस्य कस्याप्यर्थस्य बोधने शक्तिर्भवेत् , समाजेन तत्र सकेत. क्रियेत चेत् । अत्राधुनिक-शाब्दिकाना मत स्पष्टीकरणमर्हति । ते जानन्त्येव यत् प्रायेण सर्वास्वपि भाषासु केचिदेवभूता अपि शब्दा सन्ति येषा स्वरूप स्वार्थावबोधने विशेषतो योग्य प्रतिभाति । यथाङ्गलभाषाया पक्षिविशेषवाचकः Cuckoo शब्दस्तत्पक्षिकृतशब्दानुकरणस्वरूपस्तत्पक्षिबोधने विशेषतो योग्य प्रतिभाति । यथा वाङ्गलभाषागताः Splash-bubble-sizzle-प्रभृतय शब्दा जलकृत-शब्दानुकरणरूपास्तच्छब्दबोधने विशेषतः समर्था प्रतिभान्ति । एवमेतेषा शब्दाना स्वस्व-शब्दैः सह स्वाभाविक सबन्धो दृश्यते, न कृत्रिमः । अत. कथमुक्तं शब्दार्थयो' कश्चित्

स्वाभाविकः सबन्धो नास्तीति, सामयिकः स सबन्धः, समयश्च समाजकृत इति ।

अत्रोच्यते । आधुनिकाना शाब्दिकानामयमभिप्रायः—सर्वास्वपि भाषासु स्वल्पसख्याका एव-भूता' शब्दा अवश्य भवेयुः । पर तु भूयास शब्दा नैताइशा' । न च तेषा स्वार्थबोधनक्षमताया काचिन्न्यूनता प्रतीयते । अतः कुत्रचित् सत्यपि स्वाभाविके सबन्धे शब्दार्थयो' प्रायेण समाजकृतेन सामाजिकेन सबन्धेनैव शब्दः स्वार्थं बोधयतीत्येव यथार्थम् । यथोक्तमनुमानशब्दयो पार्थक्य साधयद्भिः पार्थसारथिमिश्रैः शास्त्रदीपिकायाम्—"शब्दस्य तु प्रथम गमकत्व वृद्धेभ्यो गृह्यते, न सबन्धान्तरम् । तद्ग्रहणादेव गमकता भवति । यद्गमकत्वावगमादेव गमयति तदभिधायकम् । न हि शब्दार्थस्वरूपयोर्देशतः कालतो वान्वयव्यतिरेकौ विद्येते" इति ।

एव शब्दार्थयोः सबन्धे निरूपिते सति तयोराधुनिकशाब्दिकदृष्ट्या कि स्वरूपमिति निरूपणीयम् । अयमपि प्रश्नोऽतीव प्राचीनोऽस्मिन्देशे । गौरित्यत्र क' शब्द इति प्रश्न समुद्भाव्य गकारौकारविसर्जनीया वर्णा एव शब्द इति मीमासकाः, तदतिरिक्तः स्फोटः शब्द इति वैयाकरणाश्च समादधिरे । एवं सर्वेषा शब्दानामसत्योपाध्यवच्छिन्न ब्रह्मतत्त्व वाच्यमिति वा महासत्ताख्या जातिरेव वाच्येति वा व्याडिवाजप्यायनाभ्या महावैयाकरणाभ्यामर्थमविकृत्य मतद्वयमभ्युपेतम् । अर्थस्वरूपस्य तादृश विवेचन तु वैयाकरणाभ्यामपि सद्भ्या ताभ्यामाचार्याभ्या वस्तुत' सर्वेषु वैचित्र्यवत्सु पदार्थेष्वनुगतस्य कस्यचित् तत्त्वस्यान्वेषणपरया दार्शनिकया दृष्ट्या कृतम् । आधुनिका शाब्दिकास्तु नात्मान दार्शनिकान् मन्यन्ते । अतोऽविद्यापदपतितवैखरीस्वरूपमात्रविवेचनपरै' सर्वामपि भाषा गम्यगमकपद्धतिमभिमन्यमानैराधुनिकशाब्दिकैर्गमकस्य सत' शब्दस्य कि स्वरूप गम्यस्य सतोऽर्थस्य च कि स्वरूपमित्येव विचारः कृत' ।

भाषाया वर्णमाला, शब्दकोशः, सस्कारसपद् इत्यस्यत्रयम् । त्रिष्वप्येतेष्वशेष्वस्ति किञ्चिद् गमक किञ्चिच्च गम्यम् । तत्र प्रत्येकस्मिन्नशे गमकस्य कि स्वरूप गम्यस्य च कि स्वरूपमित्यधुना विवेचनीयम् । शब्दकोशनामको भाषाया अश प्रथम परीक्ष्यते । अमरकोशादिग्रन्थेषु तस्य तस्यार्थस्य वाचकास्ते ते शब्दा स्मृता दृश्यन्ते । एतेषा शब्दाना गमकत्व किकृतम् । कि केवल क्लृप्तवर्णात्मकत्वकृत तेषा गमकत्वमाहोस्विदन्यतरत्वकृतमपि । शब्दस्य य इतरशब्देभ्यो वर्णतोभेदस्तत्कृतमपि भवति तस्य गमकत्वम् । अत एवानेकार्थाना शब्दाना प्रकरणादिसाहाय्य विना स्वत एव निश्चितार्थबोधकत्वं नास्ति । श्लोकशब्दस्य प्रकरणादिसाहाय्य विना यशोरूपार्थगमकत्व नास्ति, पद्यरूपार्थबोधकश्लोकशब्देन समानवर्णत्वात् । अतः शब्दस्य बोधकत्वे न केवल क्लृप्तवर्णात्मकत्व हेतु, पर त्वितरशब्देभ्यो वर्णतो भिन्नत्वमपि । यः शब्द इतरशब्देभ्यो वर्णतो भिन्नत्वेन न प्रती-

यत तस्य गमकत्व किञ्चित् कुण्ठित भवति । अत एवापेक्षिक गमकस्य शब्दस्य स्वरूप मन्यन्त आधुनिकशाब्दिका । गम्यस्यार्थस्यापीयमेव दशा । संस्कृतभाषागतो लिङ्गशब्द आङ्गलभाषाया Gender शब्देनानूद्यते । किं लिङ्ग-जेण्डरशब्दौ पर्यायौ ? न वस्तुतः पर्यायौ । तत्रायमेव हेतुर्यल्लिङ्गशब्दस्य संस्कृतभाषाया 'Sex' इत्यप्यर्थो भवति । अस्ति चानयोरर्थयो॰ परस्पर भेद॰ । जेण्डरनाम शब्दधर्म , 'Sex' तु वस्तुधर्म । संस्कृतभाषागतो लिङ्गशब्द उभय बोधयति । आङ्गलभाषाया त्वेकैक शब्द एकैकमेवार्थ बोधयति । लिङ्गशब्दार्थो जेण्डर-शब्दार्थापेक्षया व्यापक । संस्कृतभाषाया केवलजेण्डरवाचकशब्दाभावात् । जेण्डरसेक्सशब्दयो-रर्थौ परस्पर सकोचयत । एकभाषागतानामन्योन्यसदृशाना शब्दानामर्था अन्योन्य सकोचयन्ति । अत एव गम्यस्यार्थस्याप्यापेक्षिकता स्वीकुर्वन्त्याधुनिकशाब्दिका । हिन्दीभाषागत॰ चाचाशब्द आङ्गलभाषाया Uncle पदेनानूद्यते । पर तु हिन्दीभाषाया मामा मौसा-फूफादिशब्दाना सद्भावात् तदर्थे चाचाशब्दार्थ सकुचितो भवति । आङ्गलभाषाया तु तादृशशब्दानामभावात् Uncle शब्दस्यार्थोऽतीव व्यापको भवति, बहुविधान् यौनान् सबन्धान् क्रोडीकरोति । शब्दार्थ-स्यावधि॰ स्वभाषाया सजातीयशब्दसद्भावापेक्ष इति हेतोर्गम्यार्थस्यापेक्षिकत्व प्रोद्घोष्यत आधुनिकशाब्दिकै ।

सस्कारांशेऽपीद तत्त्व सुष्ठूपलक्ष्यते । देव देवौ देवा , देव देवौ देवान् इत्यादिशब्देषु विभक्तिप्रत्यया श्रूयन्ते, तेषा सख्याकारकादयोऽर्था अपि प्रतीयन्ते । पर त्वेषा प्रत्ययाना यत् स्वार्थगमकत्व कि कृत तत् । कि केवल तद्घटकश्रुतवर्णश्रवणायत्तम् ? एव न भवितु-मर्हति । एकत्वद्वित्वबहुत्ववाचकाना रूपाणामन्योन्यभेदोऽपि तत्र हेतु । अत एवार्थकृत्, अर्थ-कृतौ, अर्थकृत इत्यत्रैकत्वबोधकविभक्तिप्रत्ययस्याश्रवणेऽपि भवत्येव बोध एकत्वस्य, त्रयाणा रूपाणामन्योन्यभेदस्य सत्त्वात् । एवं सस्कारांशेऽपि गमकस्यापेक्षिक स्वरूप स्पष्ट भवति । तत्र यो गम्यो भागस्तत्रापीद तत्त्वमनुगत दृश्यते । विभक्तिप्रत्ययानामर्थेषु सख्यापि वर्तते । तत्र बहुवचनस्यार्थ॰ परीक्ष्यताम् । किं तस्य परिनिष्ठित किञ्चिद् रूपमस्ति, आहोस्विदापेक्षिक तत् । आपेक्षिकमित्येव वक्तव्य भवति । यतः सस्कृतभाषाया द्विवचनस्य सत्वाद् बहुवचन त्रित्वादीना मेव सख्याना बोधक भवति । हिन्द्यादिभाषासु द्विवचनस्याभावाद् बहुवचनप्रत्ययो द्वित्वादीना सख्याना बोधको भवति । अतो विभक्तिप्रत्ययानामर्थोऽपि सजातीयप्रत्ययसद्भावाभावापेक्ष इत्यापेक्षिक इति वक्तु शक्यते । इदमापेक्षिकत्व भाषायास्तृतीयांशे वर्णमालायामप्यनुगत प्रतीयत । तत॰ प्रत्येकस्य वर्णस्य स्वरूपे परीक्ष्यमाण इद सिध्यति यत्तदपि परिनिष्ठित किञ्चि-

न्नास्ति। न सर्वैर्वक्तृभिस्तथैवोच्यते स एव वर्ण.। सर्वैस्तस्य स्वरूपे स्वल्प परिवर्तन क्रियते, पर न केनापि वर्णस्य स्वरूप तथा परिवर्त्येत यथा तदितरवर्णस्वरूपाभिन्न सञ्जायेत। तथा सति श्रोतुरर्थावबोधो न भवेत्, वक्ता चोपहासास्पद भवेत्। वर्णाना योऽन्योन्य भेद' स सर्वथा रक्षणीय । वर्णानामर्थावबोधकत्वे न केवल तत्स्वरूप प्रयोजक पर त्वितरवर्णेभ्यो भेदोऽपि। वर्णाना स्पष्टमुच्चारणमित्यस्यायमेवार्थो यदितरवर्णेभ्य स्पष्ट भिन्नतयोच्चारणमिति। अय भेदोऽपि वर्णस्वरूपकोटिमेवारोहति। अत एव वर्णस्वरूपमन्यापेक्षिकमित्याधुनिकशाब्दिकाः।

एव य. प्रश्नोऽस्य निबन्धस्य विषय वेनादावेवोद्भावितस्तस्याधुनिकशाब्दिकदृष्ट्येदमुत्तर सिध्यति—भाषा नाम काचिद् गम्यगमकपद्धति । सर्वासु गम्यगमकपद्धतिषु सैवाभ्यर्हिता। वर्ण-माला, शब्दकोश, सस्कारसपच्चेत्यस्यास्त्रयोऽङ्गा । सर्वेष्वपि तेष्वस्ति किञ्चिद् गमक किञ्चिच्च गम्यम्। उभयमपि तदापेक्षिकमिति ॥



# वाक्यविचारः

श्रीमुरलीधरमिश्र , राजकीयसंस्कृतमहाविद्यालय, काशी ।

इह जगति नानाविधव्यवहारसंकुले स्वयप्रकाशस्य शब्दब्रह्मण सर्वसृष्ट्युपादाननिमित्तकारण-भूतस्य खपराख्यस्य सत्ता स्वीकार्यैव । अन्यथा मूलभूतकारणाभावे कार्यस्योन्मेष एव न संभाव्येत । परं येषां मते नैव शब्दब्रह्मण सृष्टि, किन्त्वीश्वररूपनिर्मित्तकारणात्परमाणुरूपोपादानकारणात् सृष्टिः, अथ च सत्त्वरजस्तमोगुणात्मिकाया प्रकृते, किं वा परब्रह्मणः, तेषामपि व्यवहारप्रयोजकस्य प्रदीपवत् स्वयप्रकाशस्य ग्राह्यत्वग्राहकत्वशक्तिद्वयविशिष्टस्य शब्दस्य सत्ताऽवश्यमभ्युपेया । असत्यां शब्दसत्तायां परोन्निनीषितस्यार्थस्य पर प्रति ज्ञान गगनकुसुमायित स्यात् । तदुक्तं वाक्यपदीये—

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाश प्रकाशेत सा हि प्रत्यवमर्शिनी ॥ इति ।

तत्रैव विचारस्समारोहति–किं शब्दोऽर्थस्य कारणम्, उतार्थ. शब्दस्य कारणम् । यदि हि शब्दोऽर्थस्य कारणमिति निश्चयश्च स्यात् तदा शब्दमन्तराऽर्थस्योन्मेषो न स्यात्, परन्तु विपरीत एव हि शाब्दिकाना सिद्धान्त । यतो हि शाब्दिकशिरोमणयः परमर्षयो महाभाष्यकारा आद्यन्ता-विति सूत्रे कण्ठरवेणोद्घोषयन्ति—"अर्थनिमित्तक एव शब्द । अर्थनिमित्तकेन नाम शब्देन भवि-तव्यम्, न शब्दनिमित्तकेन नाम ह्यर्थेन" इति । तत्र ह्येव मम विचारा. प्रचरन्ति यदुभय-निमित्तकत्वमुभयस्येति । तत्रैव व्यवस्था भवितुमर्हति । वक्तरि शब्दस्यार्थनिमित्तकत्वमेव, कुत. ? पूर्वं हि वक्तृबुद्धावर्थ एवोपतिष्ठमान पर प्रति स्वप्रकाशनाय शब्दं प्रति व्यापारकरणाय प्रयोज-यति । ततोऽर्थेन नियुज्यमानो वक्ता शब्दजनकवायुद्वारा तदभिव्यञ्जकवायुद्वारा वा शब्दान्निर्मिमीते-ऽभिव्यञ्जयति वा । अत पाणिनिं वक्तारमभिकृत्यैव तद्भाष्य प्रवर्तते । बोद्धृबुद्धौ तु शब्दश्रवणेन बुद्धौ तद्विषयक सस्कार. तत्सबद्धस्यार्थस्योन्मेष जनयति, शब्दार्थयोर्नित्यसबद्धत्वात् । इति बोद्धृ-बुद्धिमादाय शब्दकारणकत्वमर्थस्येत्यविसंवादेन सर्वेषा तन्त्रविदा सिद्धान्त. ।

तत्रैव सिद्धे शब्देन बोद्धृबुद्धावर्थेऽवभास्यमाने वाक्यमेवार्थस्यावभासकम्, न तु पदानि पदा-वयवा वा । अत एव शाब्दबोधो वाक्यादेव भवति, न तु पदात् पदावयवाद्वा । यद्यपि शक्त पदमिति नैयायिकादीना मते पदादपि प्रकृतिप्रत्ययघटिताच्छाब्दबोधो भवति, पदस्यापि पदसमुदाय-रूपत्वात्, तथापि वैयाकरणाना मते पदे न पदसमुदायरूपत्वमिति न पदाच्छाब्दबोध. । भूषणादौ पचतीत्यादितः स्वीकृतोऽपि शाब्दबोधो मन्मते मानस ज्ञानमेव न तु शाब्दबोध । अन्यथा केव-

लया प्रकृत केवल प्रत्ययादपि शाब्दबोधापत्ते.। शाब्दबोधस्य शब्दजन्यप्रतीतिविषयत्वात् तत्रापि तत्सत्त्वात्। अत शाब्दत्व नाम न शब्दजन्यप्रतीतिविषयत्वम्, अपि तु शब्दजन्यप्रतीति-विषयत्वे सति प्रवृत्तिनिवृत्त्युपयोगित्वम्। शाब्दस्य प्रमारूपफलत्वात्। वैयाकरणैर्हि शब्दप्रमाणस्य सर्वेषु प्रमाणेषु श्रैष्ठ्य स्वीक्रियते। यतो ह्युक्त महाभाष्यकृता ह्यनेकश–"शब्दप्रमाणका वयम्, यच्छब्द आह तत्प्रमाणमिति"। तत्र प्रत्यक्षादिप्रमाणेन या प्रमा जायते तत्र स्वकीयस्यैव ज्ञानस्य स्फोरणम्, शब्देन तु न स्वकीयस्य ज्ञानस्य स्फोरणम, अपि तु परकीयज्ञानस्य स्फोरणम्। परन्तु पर कुत्रचित्प्रवृत्तिनिवृत्तिविषय एव ज्ञापयितुमिच्छति, अन्यत्र ज्ञापनस्य जलताडनादिवन्निष्फल-त्वात्। तादृश च ज्ञान नैकेन पदेन कथञ्चिद्भवितुमर्हतीत्यनायत्या वाक्यादेव शाब्दबोधः स्वीकार्य.। अत एव सर्वैस्तान्त्रिकै. पदादुपस्थितिमात्र स्वीक्रियते। सोपस्थिति स्मृतिर्वा ज्ञानान्तर वेत्यन्य-देतत्। अत एव वैयाकरणा वाक्यस्फोटस्यैव मुख्यत्व स्वीकुर्वन्ति। तस्यैव शाब्दबोधरूपप्रमाजन-कत्वात्, तेनैवार्थसमाप्तेश्च। न्यायवार्तिककृताप्युक्तम्—"पदसमूहो वाक्यमर्थसमाप्तौ" इति। तत्र समर्थमित्यस्याध्याहार। अत एव वैयाकरणभूषणकारिकायामप्युक्तम्—

"हरेऽवेत्यादिक दृष्ट्वा वाक्यस्फोट निनिश्चिनु।" इति।

"वाक्यादेरामन्त्रितस्यासूयासमतिकोपकुत्सनभर्त्सनेषु" "वाक्यस्य ट प्लुत उदात्त" इति सूत्र-द्वये वाक्यस्य चर्चा श्रूयते। "इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ" इति सूत्रे साक्षाद्वाक्यस्य न निर्देश, तथापि वाक्यद्वय एव प्रायेणान्वादेशो भवतीति वाक्यस्योपयोगोऽन्वादेशविषयेऽपि। वार्त्तिके च बहुत्रो-पयोगः। यथा–"समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्या.", "एकतिङ् वाक्यम्", "आख्यात सविशेषण वाक्यम्", "सक्रिया विशेषण च", "अन्वादेशे नपुसके एनद्वक्तव्य" इति। भाष्यवार्त्तिके च–"अतिङ्ग्रहणमनर्थक समानवाक्याविकारात्", "वाक्यप्रतिषेधोऽर्थवत्त्वात्" इत्यादिः। महा-भाष्येऽपि–"इहापि भार्या राज्ञ, पुरुषा देवदत्तस्येति योऽयो वाक्येन गम्यते नासौ जातु समासेन गम्यते", पदानि सस्कृत्य वाक्यान्यपोद्ध्रियन्ते तत्र यथेष्टमभिसबन्धो भवति। पात्रमाहर आहर पात्र-मिति" इति। एव बहुत्र महाभाष्ये वाक्यशब्दस्य प्रयोग। तत्र किं तावद्वाक्यत्वमिति गवेषणायाममर-कारेणोक्तम्–"सुप्तिङन्तचयो वाक्य क्रिया वा कारकान्विता" इति। सुबन्त च तिङन्त च सुप्तिङन्ते, तयोश्चय.। अपर च सुबन्त च सुबन्त च सुबन्त च सुबन्तानि, तिङन्त च तिङन्त च तिङन्त च तिङन्तानि, तेषा चय। एव च सुबन्तसमुदायस्य तिङन्तसमुदायस्य सुबन्ततिङन्तसमुदायस्य च वाक्यत्वम्। क्रिया वा कारकान्वितेति कथनेनानन्वितपदघटितसमुदायस्य न वाक्यत्वम्। अत एव केवल प्रविशेत्याद्युक्तौ गेहमिति पदाध्याहारोऽन्यैस्तान्त्रिकै. क्रियते। कैश्चित्त्वर्थाध्याहार एव

क्रियते । तेषां मतेऽपि पदविशिष्टस्यैवार्थस्याध्याहारो न तु केवलस्यार्थस्याध्याहारः । अन्यथा चैत्र ओदनमित्यत्र तात्पर्यवशात् पचतीति प्रतीतिजन्यस्यार्थस्याध्याहारेऽपि तिङोऽभावात्तेनानुक्तत्वेन चैत्र इत्यत्र तृतीयापत्तिः, सर्वं ज्ञानं शब्दानुविद्धं चेति वैयाकरणसमयभङ्गश्च । शब्दविशिष्टार्थाध्याहारे तु समभिव्याहृतेन पदेनोक्तत्वाभावेऽपि समभिव्याहृतार्थविशेषणीभूतपदेनाभिहितत्वस्य सत्वान्न दोषः । अर्थाध्याहारव्यवहारस्तूपस्थितपदार्थानवबोधमूलक एव । एवं महावाक्येऽपि वाक्यत्वं गच्छत्येव, तस्यापि वाक्यविशेषरूपत्वात् । एतदर्थकमेव जैमिनिसूत्रेऽप्युक्तम्—"अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति । वाक्यपदीयेऽप्यर्थतो जैमिनिसूत्रमेवोपन्यस्तम्—

साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम् ।
क्रियाप्रधानं गुणवदेकार्थं वाक्यमुच्यते ।। इति ।

अत एव विधेयभेदाद्वाक्यभेद इति तेषां डिण्डिमः । तत्र विधेयभेदेनार्थभेदादेकवाक्यत्वाभावात् । यद्यप्येवं स्वीकारेऽनर्थकपदसमुदायेऽर्थाभावादर्थैक्यस्य दूरापास्तत्वेन वाक्यत्वाभावात् "वाक्यप्रतिषेधोऽर्थवत्त्वात्" इति वार्त्तिकोदाहरणेऽनर्थकवाक्यस्य वाक्यत्वेनोपन्यस्तस्योदाहरणरूपस्यासंगतिः स्यात्, लोकेऽपि—वाक्यमिदमनर्थकमिति कथनासंगतिश्च, तथापि वाक्यसदृशत्वेनानर्थकपदसमुदायस्य वाक्यत्वेन व्यवहार इति नास्ति तत्र मुख्यं वाक्यत्वमिति न काप्यसंगतिः । परन्त्वेतादृशवाक्यलक्षणे "ओदनं पच तव भविष्यति", "अयं दण्डो हरानेन" इत्यादिपदसमुदायस्यापि वाक्यत्वापत्त्या निघाताद्यापत्तिः । अतो वार्त्तिककृता—"आख्यातं साव्ययकारकविशेषणं वाक्यम्" इति लक्षणं कृतम् । एवं सत्यपि मृदु पचतीत्यादौ वाक्यत्वाभावेन पचतीत्यस्य निघातानापत्तिः । अतः "सक्रियाविशेषणं च" इति वार्तिककृतोक्तम् । तत्र कारकस्यैव यद्विशेषणं तत्क्रियाविशेषणमिति कैयटः । एवं च "ब्रूहि ब्रूहि" इत्यत्र वाक्यत्वं न स्यात्, आख्यातस्य साव्ययकारके विशेषणस्याभावात्, सक्रियाविशेषणाभावाच्च ।

ननु माभूद्वाक्यत्वं का नो हानिरिति चेन्न "अनन्त्यस्यापि प्रश्नाख्यानयोः" इति सूत्रेण विहितस्य प्लुतस्यैव फलत्वेनेष्टस्यासिद्धेः । आख्यातपदेन च क्रियाप्रधानत्वं लभ्यते, तेन "त्वया शयितव्यम्" इत्यत्र तिङोऽभावेऽपि न वाक्यत्वभङ्गः, प्रधानत्वेन क्रियावाचकत्वस्य शयितव्यमित्यत्र सत्त्वेनोक्तदूषणप्रसराभावात् । अतो वार्त्तिककारेण "एकतिङ् वाक्यम्" इत्युक्तम् । नन्वेतादृशलक्षणस्वीकारेऽपि भक्षितेऽपि लशुने न शान्तो व्याधिरिति न्यायेन "ब्रूहि ब्रूहि" इत्यत्र दोषः स्यादेव तिङन्तद्वयस्यात्र सत्त्वादिति चेन्न, एकतिङित्यस्यैकानुपूर्वीकतिङन्तघटितमित्यर्थकरणेनादोषात् । तिङन्तपदं च मुख्यविशेष्यतया क्रियावाचकपदपरम् । अन्यथा "त्वया शयितव्यम्"

इत्यत्र वाक्यसंज्ञानापत्ति । यद्यपि पाणिनेर्मामासकादिमतलक्षितलक्षणमेवाभिप्रेतम् , तथापि यथो-त्तर मुनीनां प्रामाण्यमित्याश्रित्य वार्त्तिककारलक्षणमेव वैयाकरणानां सम्मतमिति मान्यो मार्गः । परन्तु वाक्यलक्षणमिदं समानवाक्याधिकार एव । अन्यत्र तु पूर्वलक्षणमेव । अन्यथा पश्य मृगो धावतीत्यत्र भाष्यसिद्धस्यैकवाक्यत्वस्यानापत्तिः । अत एव भाष्येऽप्युक्तम्—"इदमद्यापूर्वं क्रियते वाक्यसंज्ञा समानवाक्याधिकारश्च तदद्वेष्य विजानीयात् सर्वमेतद्विकल्पते । तद्याचार्यं सुहृद्भूत्वाऽन्वाचष्टे चादिभिर्योगे यथान्यासमेव" इति । 'विकल्पते' इत्यस्य व्याप्नोतीत्यर्थः । एतेन भाष्येण समानवाक्याधिकार एवेयं वाक्यसंज्ञेति स्पष्टं प्रतीयते । अतोऽन्यत्र तु क्वचित्प्लुता-दिविषयेऽपीति "ब्रूहि ब्रूहि" इत्यादौ प्लुतसिद्धिः । एवं च पचति भवतीत्यादौ निघाताभावस्य, व्रजानि देवदत्तेत्यादौ देवदत्तस्य तिङन्तार्थक्रियाविशेषणत्वेन तिङन्तार्थविशेष्यकवाक्यघटकत्वान्नि-घातस्य च सिद्धिः ।

वस्तुतस्तु वैयाकरणानां मते वाक्यत्वं कारकाद्यन्वितक्रियाबोधकत्वमेव । अत एव यथा पदे तदेकदेशस्वरूपे वा पृथक्शक्तिः, तेन सत्यभामा सत्या-भामेत्यादिपदे स्वातन्त्र्येणैव बोधो न त्वेक-देशेनैकदेशः स्मृतः, तथैव वाक्ये प्रविश गृहमित्यतस्तदेकदेशरूपप्रविशेत्यतश्च स्वातन्त्र्येणैव बोधः । तदुक्तं वाक्यपदीये—

> वाक्यं तदपि मन्यन्ते यत्पदं चरितक्रियम् ॥
> आख्यातशब्दे नियतं साधनं तत्र गम्यते ।
> तदप्येकं समाप्तार्थं वाक्यमित्यभिधीयते ॥ इति ।

एवं च तत्रापि वाक्यलक्षणस्य नाव्याप्तिः । मुण्डयतौ मुण्डशब्दादिव पिण्डीमित्यादितोऽपि क्रियाबोधे न काचित् क्षतिः । तत्र वाक्ये पक्षभेदमाश्रित्याष्टधा विकल्पो दर्शितः । अस्य च विस्तरो मदीये 'शाब्दतत्त्वविमर्शः' इति शीर्षके 'सुषमायाः' पञ्चवर्षद्वितीयाङ्के प्रकाशिते निबन्धे द्रष्टव्यः ।



# स्फोटब्रह्मनिरूपणम्

श्रीबालकृष्णशर्मपञ्चोली, राजकीयसंस्कृतमहाविद्यालय , काशी ।

द्विविधा सृष्टि । शब्दरूपा, अर्थरूपा च । तथा च श्रुति'—"नामरूपे व्याकरवाणि" इति । तत्र नामपदेन शब्द , रूपपदेनार्थश्चावगम्यते । तत्र शब्दोऽर्थश्च द्विविध'—सूक्ष्म., स्थूलश्च । तत्र सूक्ष्मो निखिलशब्दकारणीभूत , तथाऽर्थोऽपि निखिलार्थकारणीभूत । सूक्ष्मरूप यन्निखिल-कारण तदेव—"अथातो ब्रह्मजिज्ञासा ' इत्यादौ ब्रह्मपदेनाभिधीयते । तच्च केषाञ्चिन्मतेऽर्थात्मकम् , वैयाकरणनिकाये शब्दात्मकम् । तदेव ब्रह्म स्फोटरूपत्वेनात्र व्यवस्थाप्यते ।

व्यवस्थापन नाम बाधकयुक्तिनिराकरणपूर्वकसाधकहेतुभि सिद्धान्तनिर्णय. । शाब्दबोध प्रति शब्दो न स्वरूपत कारणम् , किन्तु शब्दविषयक ज्ञानम् । अत एव "राज्ञ पुरुष." इति वक्त्रोच्चारिते श्रोत्रा च "राजा पुरुष " इति श्रुते तत्राभेदसाधनीभूतसमानविभक्तिकत्वाभावेऽपि 'राजाभिन्नपुरुष." इत्येव बोधो जायते, न तु "राजनिरूपितसत्त्ववान्पुरुष " इति । एव च वैयाकरणेतरेषा मते शब्दप्रमाणज्ञानमसभवि, गौरवग्रस्त च । तथा हि—"शब्दोऽनित्य " इति नैयायिकवैशेषिका । तथा च गौतमसूत्रम्—"आदिमत्वाद् ऐन्द्रियकत्वात् कृतकवदुपचाराच्च" [ २।२।१३ ] इति ।

अत्र वात्स्यायन'—"आदि = योनि = कारणम् , आदीयतेऽस्मादिति कारणवदनित्य दृष्टम् । सयोगविभागजश्च शब्द कारणवत्त्वादनित्य इति । किमुत्पत्तिकारणं सयोगविभागौ शब्दस्य ? आहोस्विदभिव्यक्तिकारणम् ? इत्यत आह—ऐन्द्रियकत्वादिति । इन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियकः । इन्द्रियग्राह्यत्वादनित्यः शब्दो रूपादिवत् ।

किमय व्यञ्जकेन समानदेशोऽभिव्यज्यते ( ज्ञायते ), रूपादिवत् ? अथ सयोगजाच्छब्दात् शब्दसन्ताने सति श्रोत्रप्रत्यासन्नो गृह्यते" इति ।

दारुव्रश्चने दारुपरशुसयोगनिवृत्तौ दूरस्थेन शब्दो गृह्यते । न च व्यञ्जकाभावे व्यङ्ग्यस्य ग्रहण भवति, तस्मान्न व्यञ्जकः सयोग । उत्पादके तु सयोगे सयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नस्य ग्रहणमिति ।

नन्वैन्द्रियकत्वादनित्य इति नाय नियम., "येनेन्द्रियेण यद् गृह्यते तज्जातिरपि तेन" इति घटत्वस्य चाक्षुषत्वेऽपि नित्यत्वदर्शनात्। अत आह—गौतमसूत्रे "कृतक" इति। इतश्च शब्दो नाभिव्यज्यते, कृतकवदुपचारात्। तीव्र मन्दमिति कृतकमुपचर्यते, तीव्र सुख मन्द सुखम्, तीव्र दु.ख मन्द दु खमिति। उपचर्यते च तीव्र' शब्दो मन्द' शब्द इति।

न च व्यञ्जकस्य सयोगस्य नित्यशब्दे तीव्रमन्दत्वोपचार', प्रकाशस्य तीव्रमन्दतया रूपज्ञानस्य यथा तीव्रमन्दत्वमिति वाच्यम् तीव्रो भेरीशब्दो मन्द तन्त्रीशब्दमभिभवति, भेदाभावेऽभिभवानुपपत्ते.। किञ्च, व्यञ्जकत्वपक्षे व्यञ्जकभेरीदेशस्थेन शब्देन भिन्नदेशस्थस्य तन्त्रीशब्दस्याभिभवोऽनुपपन्न, परस्परसबद्धस्यैवाभिभावकत्वाभिभूतत्वयोरुल्काप्रकाशसूर्यप्रकाशयोर्दर्शनात्। अत एव रात्रिस्थोल्काप्रकाशस्यादित्यप्रकाशेनापिभवो न जायते, असबद्धत्वात्।

शब्दोत्पत्तिपक्षे तु वीचितरङ्गन्यायेन भेरीजशब्दजशब्दस्य तन्त्रीजशब्दशब्देन सबद्धत्वादभिभव उपपद्यते। सबन्धाभावेऽप्यभिभवस्वीकारे भेरीशब्दे जाते जगति तन्त्रीशब्दो न श्रूयेत। इत्थ बहुभिस्तर्कैद्वितीया याये द्वितीयाह्निके त्रयोदशसूत्रमारभ्यैकोनषष्टितम सूत्र यावन्न्यायदर्शने शब्दानित्यत्व व्यवस्थापितम्।

तत्र प्रथमक्षणे वर्ण उत्पद्यते, द्वितीयक्षणे तिष्ठति। पूर्ववर्णस्थितिक्षण एव द्वितीयो वर्ण उत्पद्यते। तृतीयक्षणे पूर्ववर्णो नश्यति, द्वितीयो वर्णस्तिष्ठति। तत्रैव वर्णान्तरमुत्पद्यते, द्वितीयश्च नश्यति। इत्येव क्रमेणोत्पन्नाश्च शब्दा. शब्दान्तरमुत्पादयन्तः श्रोतु कर्णदेश गत्वा श्रावणप्रत्यक्षविषयता यन्ति।

प्रयत्नजनित. शब्दो वायु प्रेरयति, स च वायुः पूर्वशब्दाच्छब्दान्तरमुत्पादयति, सोऽय शब्दसन्तानो यावद्वायुवेगमनुवर्तते, वेगोपरमे चोपरमति। एतेन शब्दाच्छब्दान्तरोत्पत्तिस्वीकारे शब्दधारा नोपरमेदिति परास्तम्।

न्यायमूलभूता वैशेषिका इत्थ शब्दस्यानित्यत्व समर्थयन्ति। तथा हि—"कर्माप्याशु विनश्यति, शब्दोऽप्याशु विनश्यति। सोऽय गुणस्य सतोऽप्यपवर्ग (आशुविनाश)। स खलु कर्मभि' साधर्म्यम्" इति। अनित्यस्य कर्मण' साधर्म्याच्छब्दोऽप्यनित्य इति भाव'। तथा च सूत्रम्—"गुणस्य सतोऽपवर्ग' कर्मभिः साधर्म्यम्" [ २।२।२५ ] इति। सतो नित्यस्य शब्दस्य लिङ्गाभावान्नित्यत्वसाधकप्रमाणाभावादनित्यत्वम्। यदा त्वसौ नोपलभ्यते तदैतस्य सत्त्वे न किञ्चित्प्रमाणमस्ति। नित्यत्वे प्रमाणाभावादनुपलब्धिकाले नास्तीति प्रतीयते।

न च नित्यस्यापि शब्दस्यावरणेनावृतत्वान्नोपलब्धिः, वस्त्राद्यावृतरूपादिवदिति वाच्यम्, रूपावरणवस्त्राद्युपलब्धेरिव शब्दावरणानुपलब्धेः। तदुक्तम्—"सतो लिङ्गाभावात्" [ २।२।२६ ] इति। 'चैत्रो वक्ति', 'मैत्रो वक्ति' इति कुड्यादिनाऽऽवृतोऽपि चैत्रादिर्वचनेनानुमीयते, तत्तद्वचनस्य भिन्नरूपत्वात्। शब्दस्यानित्यत्वे तु तस्यैक्याद् भिन्नभिन्नवक्त्रनुमित्यनुपपत्तिः। तदुक्तम्—"नित्यवैधर्म्यात्" [ २।२।२७ ] इति।

यत्तु—"नित्यः शब्दः, अनित्यत्वे द्वयोर्गुरुशिष्ययोरध्यापनेऽध्ययने च या प्रवृत्तिस्तस्या अभावप्रसङ्गात्। आचार्यस्थः शब्दो यदन्तेवासिनमापद्यते तदध्यापनम्। यदि नित्यः शब्दस्तदा विद्यमानस्य देशान्तरप्राप्तिरुपपद्यते। अनित्यत्वे देशान्तरप्राप्तिर्न घटते। किञ्चाध्यापनं शिष्येभ्यः शब्दस्य दानम्। स यदा स्थिरो भवेत् तदा तस्य दानं सम्भवेत्। किञ्च, दीयमानं वस्तु दातृप्रतिगृहीत्रोरन्तराले तिष्ठति, गौरिव। अयं शब्दोऽपि तादृशः, अन्तरालस्थेनाऽपि श्रवणात्। अनित्यस्य मध्ये स्थितिर्न स्यात्। किञ्चाभ्यासादपि शब्दस्य नित्यता, यथा "पञ्चकृत्वो रूपं पश्यति" इति स्थिरस्य रूपस्याभ्यासो दृष्टः, तथा "दशकृत्वोऽधीतोऽनुवाकः" इत्यभ्यासः शब्दस्य स्थैर्ये प्रमाणम्। एकस्यैव दशवाराध्ययने हि तथा व्यवहारात्। सिद्धे च स्थैर्ये विनाशकानुपलब्धेः 'तावत्कालं स्थिरं चेनं कः पश्चान्नाशयिष्यति' इति न्यायान्नित्यत्वम्" इति।

तन्न, अनित्यत्वे नानात्वेऽप्यध्ययनस्य, अभ्यसनस्य, प्रत्यभिज्ञानस्य च दृष्टत्वात्। तथा हि—"नृत्यमधीते, नृत्यमभ्यस्यति, द्विरनृत्यत्, यदेव नृत्यं परुदकार्षीत् तदेव ऐषमः करोति, यदेव नृत्यमेकेन चारणेन कृतं तदेवायं करोति" इत्यादौ क्रियारूपे नृत्ये शब्दनित्यत्ववादिनाऽपि नित्यतुल्यव्यवहारस्य दृष्टत्वात्, अध्ययनादिना शब्दनित्यत्वस्य साधयितुमशक्यत्वात्।

न चोपाधिभेदान्नानात्वं शब्दानाम्, आनन्त्यत्वादिति वाच्यम्, जवासापिञ्जादिसंयोगान्नीलपीतादिभावेन भासमानस्य स्फटिकमणेः, कृपाणमणिदर्पणेषु दीर्घादिभावेन च भासमानस्य मुखस्य, सहस्रदीपाभिव्यक्तघटस्य च नानात्वादर्शनेनोपाधिना शब्दे भेदस्य वक्तुमशक्यत्वात्।

मीमांसकाः, वेदान्तिनः, साङ्ख्याः, योगिनश्च शब्दानां नित्यत्वं सङ्गिरन्ते। तथा हि—"गौः" इत्यत्र वर्णा एव शब्दः, तेषामेवार्थेन शक्तिरूपः सम्बन्धः। न च स्फोटात्मकः शब्दः, वर्णत्रयातिरिक्तस्य बुद्धावप्रतिभासमानत्वेन तदभावात्। न चार्थप्रतीतिरूपकार्येण तदवगतिः, अन्योन्याश्रयत्वात्, स्फोटरूपकारणसिद्धावर्थप्रतीतिरूपकार्यसिद्धिः, अर्थप्रतीतिरूपकार्यसिद्धौ च स्फोटावगतिरिति।

वर्णनित्यतावादिना तु गकारौकारविसर्जनीया एव 'गौ' शब्दः। ते च श्रोत्रग्राह्याः। अत एव लोके श्रोत्रग्राह्यवस्तुनि शब्दप्रयोगः। ते च वर्णा परमाणुवन्निरवयवाः। एते चैकत्वविशिष्टा एव। यथैक एवाकारः, इकार, उकारश्चेत्येवरूपेण। अवर्णादेरेकत्वे तत्रात्वकत्वादिजातयोऽपि न सन्त्येव, अनेकवृत्तित्वाभावात्। अत एव सोऽयं गकार इति व्यक्त्यैकत्वप्रत्यभिज्ञापि सङ्गच्छते।

नन्वकारादीनामैक्ये ह्रस्वदीर्घप्लुतोदात्तादिभेदो न स्यादिति चेन्न, व्यञ्जकध्वनिधर्माणां ह्रस्वत्वादीनामेव वर्णेष्ववभासात्। एवमेव कत्वादीनामवभासोऽपि बोध्य। एवं च परमार्थतो न वर्णधर्मा ह्रस्वकत्वादयः, किन्तु ध्वनिधर्मास्त्वेते वर्णे केवलमाभासन्ते।

ननु वायवीयाना ध्वनीनां श्रोत्रेन्द्रियाग्राह्यत्वात् कथं वर्णेषु कत्वादिधर्मावभासः? उच्यते, द्विविधः शब्दः—वर्णो ध्वनिश्च। शब्दत्वमुभयानुगतम्—वर्णविशेषाः ककारादयः, ध्वनिविशेषाः शङ्खघोषादयः। ध्वन्यात्मकश्च शब्दो वायुः, स च वायौ कर्णविवरं प्राप्ते सति संयुक्तसमवायेन श्रोत्रेन्द्रियं संस्कृत्य श्रोत्रेण गृह्यमाणः कदाचित्कत्वादिधर्मैर्रहितः शङ्खघोषादिषु केवलो गृह्यते, कदाचिच्च वर्णानभिव्यञ्जयन् वर्णोपश्लिष्ट एव प्रतीयते।

अथवा नास्त्येव ध्वनीनां ग्रहणम्, वायवीयत्वात्। परन्तु द्रुतादिवृत्तिसंस्कृतं श्रोत्रेन्द्रियमेकस्मिन्नपि गकारादौ संस्कारानुसारेण भेदप्रत्ययं जनयति। यथैव हि गत्वादिजातिवादिवैशेषिकनयेऽविद्यमानमेव शब्देऽल्पत्वं महत्त्वं च ध्वनिसंस्कारानुसारिण्या बुद्ध्या प्रतीयते, तथा द्रुतादिकमपि। श्रोत्रेन्द्रियं प्राप्य क्षिप्रमन्यतः प्रयातेषु ध्वनिषु तत्तत्संयोगरूपसंस्कारस्य श्रोत्रेऽल्पकालमवस्थानाच्छब्दोऽपि तत्क्षण एवाविर्भूय तिरोऽभवन् द्रुत इति गृह्यते, तथा मध्यमो विलम्बित इति च।

युक्तो हि व्यञ्जकधर्माणां द्रुतत्वादीनां व्यङ्ग्ये शब्दे भ्रान्त्या समारोप इति। न च कथमनवगतेषु ध्वनिषु तद्धर्मप्राप्तिर्व्यङ्ग्येषु शब्देष्विति वाच्यम्, यथा पित्तदोषदूषितं रसनेन्द्रियं मधुरगतं मधुरत्वमगृह्णदेव मधुरं तिक्तत्वेन गृह्णाति, यथा वा चक्षुरिन्द्रियं पीतगतं पीतत्वमगृह्णदेव शङ्खगतं श्वेतत्वं पीतत्वेन गृह्णाति, तथा ध्वनिगतान् द्रुतादीनगृह्णदेव श्रोत्रं द्रुतादित्वेन शब्दं प्रतिपद्यते।

एवं वर्णैक्यनित्यत्ववादिमीमांसकानां मते वर्णातिरिक्तं पदं वाक्यं च नास्त्येव, गकारादीनामयौगपद्यात्, सर्वगतत्वाच्च। गोपदादिरूपावयव्यारम्भकं सामर्थ्यमपि नोपपद्यते, युगपदवस्थितैरेवानेकावयवैरवयव्युत्पत्तिदर्शनात्। वर्णानां भिन्नप्रयत्नाभिव्यङ्ग्यत्वेनोपलब्ध्या यौगपद्याभावात्।

किञ्च, तन्तुपटयोरिव कारणपरिमाणादधिकं प्रमाणं कार्यस्य। न च विभुभ्यो वर्णेभ्यः परिमाणाधिक्यं पदादिरूपकार्यस्य संभवति, अतो नावकल्पतेऽवयवी।

न च वर्णमात्रस्वीकारेऽर्थबोधानुपपत्तिः, प्रत्यक्षरं बोधादर्शनात्। न च वर्णसमुदायादर्थधीः, युगपदभिव्यक्तिरहितानां समुदायस्याप्यसंभवादिति वाच्यम्, क्रमवर्त्तिनां वर्णानां क्रमिकसंस्कारेण साहित्यकल्पनात्। यथा "स्वर्गकामो यजेत" इत्यत्र क्रियारूपयागस्य क्रमिकत्वेन समुदायासंभवाद् विनाशित्वाच्च कालान्तरभाविं स्वर्गं प्रति वेदबोधितकारणत्वानुपपत्त्या चिरस्थायियागजन्यमदृष्टं कल्प्यते, तथैकवर्णेनार्थबोधादर्शनात् सकलोच्चारणेऽर्थबोधदर्शनाच्च सहत्यकारित्वे निश्चिते युगपदनवस्थानात् स्वरूपतो वर्णसमुदायासंभवेन संस्कारतः समुदायकल्पनम्, तत एव चार्थबोधोपपत्तिः।

अत्र स्फोटवादिनो वैयाकरणाः—शब्दानित्यत्ववादिनामनन्तवर्णानन्ततद्ध्वंसप्रागभावकल्पनम्, पदादीनां बोधकत्वसिद्धये पदादिप्रयोजकानन्तसंस्कारानन्तस्मृतिकल्पने च महद्गौरवम्।

एवं मीमांसकादीनां मते वर्णानां विभुत्वनित्यत्वस्वीकारे यद्यप्यनन्तवर्णतद्ध्वंसप्रागभावाऽकल्पनया वर्णानित्यत्ववादिनोऽपेक्षया लाघवं वर्तते, तथापि नव स्वराणाम्, त्रयस्त्रिंशद् व्यञ्जनानाम्, विसर्गादीनां च नित्यतया स्वीकरणे तद्व्यञ्जकानां ध्वनीनां क्रमेणाभिव्यक्तिमतां प्रत्येकवर्णेनार्थाबोधात् सकलोच्चारणानन्तरं बोधदर्शनात् सहत्यकारित्वोपपत्तये तत्प्रयोजकभावनाऽऽख्यस्मृतिसंस्कारकल्पने च गौरवात् सर्वानुभूतपदवाक्यादीनां मिथ्यात्वकल्पनस्यानुचितत्वाच्च तन्मतं चिन्त्यम्।

अतोऽल्पत्वकत्वादिधर्मवन्तो वर्णरूपा ध्वनय एवार्थप्रत्यायकं ध्वनिरूपरूपितं कालत्रयाबाधितं शब्दब्रह्मैव व्यञ्जयन्ति। तदेव शब्दब्रह्म स्फोट इत्युच्यते। स्फुटत्यर्थोऽनेनास्माद्वा स्फोटः, करणेऽपादाने वा "अकर्त्तरि च कारके संज्ञायाम्" इति घञि साधु। स एव स्फोटस्तत्तदर्थनिरूपिततत्तच्छक्तिमान्, अल्पत्वकत्वादिविशिष्टवर्णातिरिक्तः पूर्वपूर्ववर्णानुभवसहचरितान्त्यवर्णानुभवव्यङ्ग्योऽर्थप्रत्यायकः शब्दः इति यावत्। तत्तदर्थनिष्ठविषयतानिरूपकशक्तिमत्वं स्फोटत्वम्। अत एव "सर्वे सर्वार्थवाचकाः" इति सिद्धान्तोऽपि विशेष्यभूतं स्फोटमादाय सङ्गच्छते।

न च शब्दस्य श्रोत्रेन्द्रियरूपप्रत्यक्षप्रमाणग्राह्यत्वात् श्रोत्रेण च वर्णातिरिक्तस्य शब्दस्यानुभवाभावात् स्फोटासिद्धिः, "गौः" इत्येकं पदं, "गामानय शुक्लाम्" इत्येकं वाक्यम्, इत्येकपदवाक्यानुभवस्य "सोऽयं ककारः", "सोऽयं गकारः" इति प्रत्यभिज्ञायाश्च प्रमाणत्वात्। न च वर्णविषयत्वेनैव तदुपपत्तिः, वर्णानां नानात्वेनैकत्वानुभवस्य तत्र बाधितत्वात्। न च वर्णसमुदायविषयकं तत्, वर्णोत्पत्तेस्तदभिव्यक्तेर्वा क्षणस्थायित्वेन क्रमिकत्वेन च समुदायासंभवात्। न च प्रत्येकवर्णा-

नुभवभावित. संस्कारे सह.य सर्ववर्णविषयैक. स्मृतिर्जायत इति स्मृतिगनकत्वमादाय तथा व्यवहार, असति व्यावके "एक पदम्, एक वाक्यम्" इत्यनुभवे मिथ्यात्वस्य वक्तुमशक्यत्वात्।

न च वर्णष्वेवोपाधिकैकत्वग्रह, तादृशोपाधेर्वक्तुमशक्यत्वात। उपाधि. खलु—एकधीविषयत्वम्, एकार्थबोधकारणत्व वा। तथा हि—चरमवर्णप्रत्यक्षानन्तर बोधदर्शनान्यथानुपपत्त्या नानावर्णविषयकसस्कारकल्पनयैका स्मृति कल्प्यत इत्येकस्मृतिरूपधीविषयत्वस्योपाधे सत्त्वेनैकत्व वाच्यम्, तच्च न सम्भवति, एकधीविषयाणा शशकुशपलाशानामैक्यापत्त्या "शशकुशपलाशा" इति बहुवचनानापत्ते। नाप्येकार्थबोधकारणत्वस्योपाधित्वम्, प्रतिवर्ण बोधादर्शनेन वर्णेषु बोधहेतुत्वस्याभावात्।

न च चरमवर्णानुभवानन्तर दृष्टबोधान्यथानुपपत्त्योक्तसाहित्यकल्पनया समूहे च बोधहेतुत्वस्य सत्त्वात् तादृशोपाधिकृतमेकत्व वर्णेषु सुलभमिति वाच्यम्, बोधहेतुत्वे सति साहित्यकल्पनम, साहित्ये सति बोधहेतुत्वसिद्धिरित्यन्योन्याश्रयस्य दुष्परिहरणीयत्वात्। तस्मादनुपाधिकोऽबाधितश्च पदवाक्यैकत्वप्रत्ययो वर्णातिरिक्तवाचकमन्तरा न सम्भवतीति तादृशप्रत्ययविषय स्फोट स्वीकार्य्य।

ननु स्फोटवादिमतेऽपि प्रत्येकवर्णाभिव्यक्तस्फोटेनार्थबोधादर्शनाद् वर्णसमुदायाभिव्यक्तस्फोटस्यैव वाचकता वाच्येति समुदायस्यावश्यकत्वे तेनैवार्थप्रतीतिसिद्धौ स्फोटो व्यर्थ इति चेन्न, प्रत्येकवर्णाभिव्यक्तस्फोटस्यैव वाचकत्वेनैवोपपत्तो वर्णसमुदायकल्पनस्यानावश्यकत्वात्, अन्तिमवर्णातिरिक्तपूर्वपूर्ववर्णेनाभिव्यक्तात् स्फोटादर्थबोधस्तु न, रत्नपरीक्षणन्यायात। यथा वज्रादिरत्नाना परिचयो बहुवार चाक्षुषप्रत्यये कृते जायते, एव पूर्वपूर्ववर्णनाभिव्यक्तस्फोटविषयकप्रत्ययेनाऽऽहितसस्कारे चित्तदेशेऽन्तिमवर्णाभिव्यक्तस्फोटेनैवार्थप्रत्ययो न पूर्ववर्णाभिव्यक्तेन, शब्दशक्तिस्वभावात्।

यथा दूरेऽवस्थित सहकारतरुर्हस्तिपलालराशिरूपेण प्रतिभाति, ततोऽपि सामीप्ये वृक्षत्वेन, तत. सहकारात्मना प्रतीयते तथैवान्तिमवर्णाभिव्यक्त सम्यक्प्रतीत स्फोटोऽर्थबोध जनयति।

तथा च "ऋलृक्" इति सूत्रे भाष्य उक्तम्—"उभयतः स्फोटमात्र निर्दिश्यते, रश्रुतेर्लश्रुतिर्भवति" इति। तत्रोभयत इत्यस्योद्देश्यदले विधेयदले चेत्यर्थ। "तपरस्तत्कालस्य" इति सूत्रभाष्येऽपि—"एव तर्हि स्फोट. शब्द, ध्वनि. शब्दगुण (शब्दव्यञ्जकत्वेनोपकारक.)। कथम्? भेर्याघातवत्। तद्यथा भेर्याघातः (भेरीताडक) भेरीमाहत्य कश्चिद्विंशति पदानि[1] गच्छति, कश्चित्

---

1. अत्र भाष्ये "पदानि" इत्यस्य द्वितीयान्तत्वान् तत्सामानाधिकरण्येन विंशत्यादिपदा-

त्रिशतम्, कश्चिच्चत्वारिंशतम्। स्फोटस्तावानेव' इति। वृद्धिश्च ध्वनिकृता। तदुक्तं भाष्ये—

ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते।
अल्पो महांश्च केषाञ्चिदुभयं तत्स्वभावतः॥ इति।

एतेनाव्यक्तध्वनिस्थलेऽपि स्फोटोऽस्त्येवेति ध्वनितम्।

ननु भेर्याघातस्थलेऽर्थबोधकस्फोटाभावात् स्फोटस्तावानेवेति भाष्यासङ्गतिरतो भाष्ये ध्वनिरिति।

भेर्याघातस्थले ध्वनिः स्फोटश्च स्तः। व्यञ्जको ध्वनिः, स्फोटश्च व्यङ्ग्यः। परन्तु व्यङ्ग्यानां स्फोटरूपाणां शब्दानां व्यञ्जकत्वेन सम्बन्धी यो ध्वनिः स एवाल्पो महांश्च प्रतीयते। व्यङ्ग्यस्फोटस्त्वभिन्नकाल एव, नित्यत्वेन कालानवच्छिन्नत्वात्।

अयं भावः—ध्वनिर्द्विविधः। प्राकृतो वैकृतश्च। तत्र प्राकृतः कत्व-ह्रस्वत्व-उदात्तत्व-अनुनासिकत्वादिधर्मविशिष्टः। स्फोटः स्वयंप्रकाशोऽपि स्तिमित(पिण्डीभूत)वायुना प्रतिरुद्ध इति तदवरोधनिराकरणद्वारा स्वाभिन्नत्वेनेव स्फोटं प्रकाशयति। अत एको नित्यो व्यापकः स्फोटो नानारूपध्वनिरुपाक्रान्तो ज्ञातवृत्तिकोऽनेकरूपेण भासमानोऽन्तिमवर्णाभिव्यक्तोऽर्थं प्रत्याययति। प्राकृतो ध्वनिरेव वर्णशब्देन व्यवह्रियते।

तदुक्तं भाष्ये—"अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते। तद्यथा 'शब्दं कुरु', 'मा शब्दं कार्षीः', 'शब्दकार्ययं माणवकः' इति ध्वनिं कुर्वन्नेवमुच्यते। तस्माद् ध्वनिः शब्दः" इति। वर्णरूपानाक्रान्तः स्फोटः पृथङ् नैव प्रतीयत इति सूक्ष्मेक्षिकया पर्य्यालोचयन्तो नैयायिकादयः स्फोटो नैवास्तीति ब्रुवन्ति।

वैकृतो ध्वनिश्च प्राकृतध्वनिनाभिव्यक्तस्य स्फोटस्योपलब्धौ चिराचिरकालत्वसम्पादकः। अत-एव—"एक एवाकारोऽनेन द्रुतमुच्चरितोऽनेन विलम्बितम्" इति वृत्तिभेदेऽपि वर्णस्यैकत्वव्यवहारः सङ्गच्छते। द्रुतत्वादेर्वृत्तिगतत्वादेव—

अभ्यासार्थे द्रुता वृत्तिर्मध्या वै चिन्तने स्मृता।
शिष्याणामुपदेशाय वृत्तिरिष्टा विलम्बिता॥ इत्युक्तम्।

भाष्ये ध्वनिकृता वृद्धिरित्यस्य वैकृतध्वनिकृतोपलब्धिकालवृत्तिरित्यर्थः।

---

नामपि द्वितीयान्तत्वमेवोचितम्, प्रथमान्तपाठस्तु लेखकप्रमादात्। समासस्तु न, सञ्ज्ञात्वाभावात्, "दिक्संख्ये सञ्ज्ञायाम्" इति नियमात्।

अत्र स्फोटशब्दश्च योगरूढः। योगमात्रस्वीकारे त्वर्थ्योऽर्थान्तर व्यज्यत इत्यर्थस्यापि स्फोटत्वापत्ति। किञ्च, चेष्टयाऽप्यर्थबोधनाच्चेष्टायामतिव्याप्तिः। नापि केवलरूढत्व तस्य, व्याकरणकल्पितप्रकृतिप्रत्ययजन्यबोधाभावसमानाधिकरणसमुदायशक्तिनिरूपकार्थविषयकबोधजन-कत्वरूपरूढलक्षणानाक्रान्तत्वात।

स च स्फोटोऽष्टविध—१ वर्णस्फोट, २ पदस्फोट, ३ वाक्यस्फोट, ४ वर्णजाति-स्फोट, ५. पदजातिस्फोट, ६ वाक्यजातिस्फोट, ७ अखण्डपदस्फोट, ८ अखण्डवाक्य-स्फोटश्चेति।

वर्णस्फोटस्य सखण्डाखण्डभेदेन द्वैविध्य तु न, सुबन्ततिङन्ततदादिभिन्नस्य वाक्यभिन्नस्य च प्रकृतिप्रत्ययसमुदायरूपस्य च प्रकृतिरूपस्य प्रत्ययरूपस्य च वर्णस्फोटघटकवर्णशब्देन ग्रहणात्, तदवयवानां चार्थप्रत्यायकतयाऽर्थप्रत्यायकस्यैव खण्डस्य सखण्डस्फोटपदेन ग्रहणात् सखण्ड-स्फोटानुक्तिरित्याशय।

१ वर्णपदबोध्यचरमवर्णाभिव्यक्तस्फोटेन यत्र बोधस्तत्र वर्णस्फोटपदव्यवहार्यत्वम्।

२ सुबन्ततिङन्ततदादिघटकान्त्यवर्णाभिव्यक्तस्फोटेनार्थप्रतीतौ पदस्फोट इति व्यवहार।

३ सुबन्ततिङन्तपदजन्यबोधपूर्वकवाक्यचरमवर्णाभिव्यक्तस्फोटस्य बोधकत्वे वाक्यस्फोट इति।

४ प्रकृतिजन्यबोधाभावे सति पदस्फोटेन बोधेऽखण्डपदस्फोटः। यथा—मणिः, नूपुरादि, व., नः, इति।

५. पदजन्यबोधाभावे सति वाक्यस्फोटेन बोधेऽखण्डवाक्यस्फोट। यथा—व्याकरणज्ञान-शून्याना वाक्यतो बोधे वाक्यम्।

६ वर्णगतजातिव्यङ्ग्यस्फोटेन बोधे वर्णजातिस्फोटः।

७. पदगतजातिव्यङ्ग्यस्फोटेन बोधे पदजातिस्फोट.।

८ वाक्यगतजातिव्यङ्ग्यस्फोटेन बोधे वाक्यजातिस्फोट इत्युच्यते।

तत्र वाक्यस्फोटज्ञानार्थमेवान्यस्फोटानामुपयोग, वाक्यस्फोटस्यैव मुख्यत्वात्। न च स्फोटस्य प्रतीयमानत्वात् "उच्चरित. शब्द प्रत्यायको भवति न प्रयीयमान" इति "अणुदित्" सूत्रभाष्यविरोधात स्फोटेन बोधानापत्तिरिति वाच्यम्, "न प्रतीयमान." इति भाष्यस्याश्रूयमाणः सन् प्रतीयमान प्रत्यायको न भवतीत्यर्थात्। स्फोटस्य च व्यञ्जकरूपत्वेन श्रोत्रग्राह्यत्वेन भाष्यविरोधाभावात् सज्ञासज्ञिभावेन प्रतीयमानस्यैवानुच्चारितप्रत्यायकत्वमिति तदर्थाद्वा।

## स्फोटब्रह्मनिरूपणम्

अत्र नागेशः—"गुणत्रयात्मकाद्बिन्दोः शब्दब्रह्मापरनामधेयम्, वर्णादिविशेषरहितम्, ज्ञानप्रधानम्, सृष्ट्युपयोग्यवस्थाविशेषरूपम्, चेतनमिश्रम्, नादमात्रमुत्पद्यते। एतज्जगदुपादानमेव रवपरादिशब्दैर्व्यवह्रियते।

तदुक्तं प्रपञ्चसारे—

> बिन्दोस्तस्माद्भिद्यमानाद् रवोऽव्यक्तात्मकोऽभवत्।
> स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते॥

तदेव शब्दब्रह्म प्राणिनां मूलाधारे सम्भूतपवनेनाभिव्यक्तं सत् 'परा वाग्' इत्युच्यते। परवागूपं च ब्रह्म सूक्ष्मतमं योगिनां समाधौ निर्विकल्पज्ञानविषयः। तदेव नाभिप्रदेशस्थवायुनाऽभिव्यक्तं योगिनां समाधौ सविकल्पज्ञानविषयः सूक्ष्मतरा 'पश्यन्ती' इत्युच्यते। हृदयगतवायुनाऽभिव्यक्तं तत्तदर्थविशेषतत्तच्छब्दविशेषोल्लेखिन्या बुद्ध्या विषयीकृता सूक्ष्मा 'मध्यमा वाग्' इत्युच्यते। आस्यगतवायुना तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या स्थूला 'वैखरी वाग्' इत्युच्यते। तत्र मध्यमाया यो नादस्तस्यैव स्फोटात्मनो वाचकत्वम्" इति।

विद्वन्मूर्धन्यैः श्रीमद्भी रामाज्ञापाण्डेयमहोदयैः स्फोटसंख्याविषये व्याकरणदर्शनभूमिकायाम्—"यदि वर्णस्फोटस्योदाहरणं प्रकृतिव्यङ्ग्यः प्रत्ययव्यङ्ग्यश्च वर्णस्फोट इति, तदा वाक्यार्थज्ञानानुमापकं कृते वाक्यस्फोटस्य विलय एव स्यात्। नापि पचतीत्यादौ पदस्फोटव्यवहारः, तथा चात्र व्यवहारो न युक्तियुक्त इत्युक्तम्। अत एव नागेशभट्टो न ह्यष्टौ स्फोटान् नञ्जपाया निरदिक्षत्, किन्तु केवलनामान्तरव्यपदेशेन द्वौ स्फोटौ प्रदर्श्य वाक्यस्फोटस्य जातिव्यक्तिभेदेन द्वावेव भेदौ प्रादर्शयत्। तथा च व्यवहारदृष्ट्या वाक्यस्फोटप्रदर्शने प्राप्ते वक्ष्यमाणरीतिरस्माभिरवलम्बनीया।

तथा हि—"व्यक्तिः पदार्थः" इति व्याडिमते व्यक्तिः स्फोटः, "जातिः पदार्थः" इति वाजप्यायनस्य मते जातिः स्फोटः, इत्येवंरूपेण द्वौ स्फोटावभ्युपगन्तव्यौ। यदि चावान्तरस्फोटप्रतिपादन आग्रहस्तर्हि कल्पितानि पदानि, कल्पितपदेषु कल्पितौ प्रकृतिप्रत्ययावादाय वक्ष्यमाणपद्धत्या स्फोटः स्वीकार्यः। एवं सति (१) प्रकृतिस्फोटः, (२) प्रत्ययस्फोटः, (३) प्रकृतिजातिस्फोटः, (४) प्रत्ययजातिस्फोटः, (५) पदस्फोटः, (६) पदजातिस्फोटः, (७) वाक्यस्फोटः, (८) वाक्यजातिस्फोटः, (९) अखण्डपदस्फोटः, (१०) अखण्डपदजातिस्फोटः, (११) अखण्डवाक्यस्फोटः, (१२) अखण्डवाक्यजातिस्फोटश्चेति द्वादश स्फोटा भविष्यन्ति। वस्तुतो वर्णस्फोटो-

ऽप्यधिकस्तत्र निवेशयितु शक्यते, "अइउण्" सूत्रे "अथवोभयतः स्फोटमात्र निर्दिश्यते" इति भाष्योक्त्या शुद्धेषु लकारादिषु वर्णेषु स्फोटसत्ताया अभ्युपगमात्। तथा च जातिव्यक्तिवर्णभेदेन द्वौ वर्णस्फोटावधिकौ सनिवेश्याविति चतुर्दश स्फोटाः। प्रकृतिप्रत्ययविषयेऽप्यखण्डसखण्डभेदेन द्वयोः समेलने च षोडश स्फोटा सपद्यन्ते" [ व्या० द० भू० पृ० ४३-५० ] इत्युक्तम्।

स्फोटस्यार्षत्वेऽपि स्फोटसख्याविषये न ह्यार्ष वचनमुपलभ्यते। भट्टकोण्डस्य, मौनिभट्टकृष्णादीना ग्रन्थेष्वष्टौ स्फोटाः स्वीकृताः। तत्र किमपि प्रमाणं नोपन्यस्तम्। कल्पनामात्रं चैतत्सर्वं तेषाम्। किञ्च, वर्णपदेन प्रकृतप्रत्यादीना ग्रहणे नाक्षरस्वारस्यम्। किञ्च, वर्णपदेन प्रकृतिप्रत्यययोरेव ग्रहणे "उभयतः स्फोटमात्र निर्दिश्यते" इति "ऐऔच्" सूत्रस्थभाष्यविरोधः। एव स्थितौ "षोडश स्फोटा" इत्युक्तिर्नासङ्गता, तादृशकल्पनाया अपि तत्र सभवादित्यलमतिविस्तरेण ॥



# तर्कशास्त्रीयाऽऽत्मदृष्टिः

श्रीढुण्ढिराजशास्त्री, नित्यानन्दवेदविद्यालय, काशी ।

प्रथितमिदं विपश्चिदपश्चिमानां यद्धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयेऽपवर्ग एवात्यन्तिकः पुरुषार्थ इति । तत्सम्पत्तिश्च—"श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादिश्रुतिवाक्येन श्रवण-मनननिदिध्यासनपरम्पराधीनात्मतत्त्वसाक्षात्कारायत्तेति ।

ननु सिद्धरूपात्मसाक्षात्कारे शब्दश्रवणरूपविचारो न स्यात् कारणम्, विनापि श्रवणमहं सुख-मनुभवामीति प्रत्ययो हि सकलानुभवपथमध्यास्ते । अपि च सत्यपि श्रवणे नात्मसाक्षात्कारोऽखिल-बन्धनिवृत्तिसाधनं कस्यापि । तदुक्तम्—"मननादिप्रतीत्या च कार्यार्थादात्मनिश्चय" इति । इति चेन्न, अप्रामाण्यज्ञानानास्कन्दितात्मतत्त्वसाक्षात्कारो हि न श्रवणादिकं विना जायते । सत्यपि श्रवणे प्रति-बन्धकविशेषेण तदनुत्पत्त्या हि नासाधनत्वनिर्णयः संभवति, मण्यादिप्रतिबन्धकविशेषेणाग्निनापि दाहानुत्पत्त्या दाहकत्वानुपपत्तेः । आत्मसाक्षात्कारस्य ह्यपवर्गसाधनत्वं मिथ्याज्ञाननिवृत्तिद्वारक-मेवेति समूलस्य बन्धजातस्योच्छेदे आत्मतत्त्वश्रवणमावश्यकम् ।

नन्वेवमात्मतत्त्वश्रवणेनैवेष्टप्राप्तिसंभवादात्मतत्त्वनिश्चयाच्चात्मनि सन्देहाभावेन सिद्धसाधनात् किं मननापरपर्यायेणानुमानेन, अत एवोक्तमाचार्यपादैः—"श्रुत्यैकगम्य" इति, "तं त्वौपनिषदं पुरुषं पृच्छामि" इति श्रुतेश्चेति चेन्न, साध्यज्ञानं तावन्न स्वतः साध्यज्ञानविरोधि येन सिद्धसाधन-दोषः स्यात्, धारावाहिकज्ञानसत्त्वात् । नाप्यनुमितिप्रतिबन्धकं प्रत्यक्षाधिगतस्याप्यनुमितिदर्शनात् । किन्तु सिषाधयिषाघटितपक्षताविघटनद्वारा । सिषाधयिषा च साध्यज्ञानेच्छा । सा च द्विविधा—साध्य-ज्ञानमात्रे, तद्विशेषे च । तत्राद्या श्रौतात्मतत्त्वज्ञानान्निवर्तताम्, यत्किञ्चिद्विशिष्टसिद्ध्यैव सामान्ये-च्छाविच्छेदात् । अन्यथा निखिलविशेषसिद्धेरसंभवेन तद्विच्छेदः क्वापि न स्यात् । या त्वनुमितिरूपसाध्यज्ञानेच्छा सा कथं निवर्तेत, तद्विषयस्य ज्ञानविशेषस्यासिद्धेः, इच्छाया स्वविषयसिद्धिप्रतिबध्यत्वनियमात् । तथा चात्र "श्रोतव्यो मन्तव्य" इति श्रुत्या, "आगमेनानु-मानेन ध्यानाभ्यासरसेन च । त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥" इति स्मृत्या च मननस्येष्टसाधनत्वावगते श्रौते आत्मतत्त्वज्ञाने संपन्नेऽपि मननस्यान्वीक्षिकीमात्रप्रतिपादितस्या-सिद्धत्वात्तत्रेच्छा प्रेक्षावतां भवत्येवेति न सिषाधयिषाविघटनद्वारकदूषणस्य सिद्धसाधनस्यावकाशः ।

अत एव—"सिद्धसाधन दशाविशेषे दोष. पृथक्च न दूषणम्, असिद्ध्युपजीव्यत्वेऽपि बाधवत् स्वतो दूषकत्वाभावात्। किन्तु दूषकतायामुपाधेरिव परमुखनिरीक्षकत्वात्" इति नव्यन्यायसम्प्रदायप्रवर्तका गङ्गेशोपाध्याया। उपनिषद्वगम्यमेवात्मतत्त्वमिति वदद्भिर्मायावादिभिरपि विचारापरपर्यायानुमानस्य श्रवणानन्तरमात्मतत्त्वसाक्षात्कारे प्रयोजकत्वमवश्यमङ्गीकर्तव्यमिति समाहित मधुसूदनसरस्वतीभि सिद्धान्तबिन्दौ।

## आत्मतत्त्वविचारस्यावश्यकत्वम्

नन्वेवमपि संशयबीजभूतविप्रतिपत्त्यभावादापामरसाधारणानुभवसिद्धात्मगोचर मननात्मकमनुमान कथ सम्भवतीति चेन्न, पूर्वपक्षोत्तरपक्षघटकदार्शनिकमतिवैभवादनेकशो विप्रतिपत्तिवैचित्र्यसम्भवात्। तथा हि—प्रथम तावदात्मतत्त्वविचारे क्रियमाणे बहिरर्था एवापाततो भासन्ते, यानाश्रित्य पूर्वमीमासकमतोत्थापनम्। देहाकारपरिणतानि भूतानि, चक्षुरादीनीन्द्रियाणि, मन, प्राण एव वात्मेति चार्वाकतदेकदेशिमतानि च। तत्प्रतिपादनार्थमेव—"पराञ्चि खानि" इत्यादिवाक्यजातानि पूर्वपक्षतयोपनिषत्सूद्भावितानि, उत्तरपक्षतया च—"पर कर्मभ्य" इत्यादीनि।

अर्थाकारतयाऽऽत्मभानमवलम्ब्य विशिष्टाद्वैतमतसमुत्थापनम्। "आत्मैव तत्त्वतो ज्ञय." इति श्रुतिमूलमर्थस्याकारमात्रमात्माध्यस्त प्रकाशत, न त्वाकार्यर्थोऽपीति तेषामभिप्राय। अस्याप्युत्तरपक्षतया—"अगन्धमरसम्" इत्यादिश्रुति। अर्थमात्राभावमाश्रित्याद्वैतदाकारमात्रोपसहार।

प्रपञ्चस्य मिथ्यात्वदर्शनादेवात्मनोऽपि तदन्तर्गतत्व मन्वानैर्बौद्धै शून्यत्वनैरात्म्यादिक समुत्थापितम्। अत एव माध्यमिकमतमवलम्बमानैर्नागार्जुनाचार्यैर्विग्रहव्यावर्त्तिन्याम्—"सर्वेषा भावाना सर्वत्र न विद्यत स्वभावश्चेत्। त्वद्वचनमस्वभाव न निवर्तयितुमस्वभावमलम्॥" इत्यादिना वादिवचनस्य शून्यत्वादन्यथा प्रतिज्ञाहाने. प्रामाण्यासिद्धेश्च भावाना शून्यत्वमयुक्तम्, कुशलादिधर्माणा कुशलादिस्वभावताभ्युपगमादित्यादिहेतुभिश्च भावाना सस्वभावत्वमेवाङ्गीकर्तव्यमिति पूर्वपक्षद्वय समुत्थाप्य, "हेतुप्रत्ययसामग्र्या पृथग्भावेऽपि मद्वचो न यदि। ननु शून्यत्व सिद्ध भावानामस्वभावत्वात्॥ यश्च प्रतीत्यभावो भावाना शून्यतेति सा ह्युक्ता। प्रतीत्य यश्च भावो भवति हि तस्याऽस्वभावत्वम्॥" इत्यादिनोत्तरपक्षेण भावाना शून्यत्व समाहितम्। एतदर्थश्च वृत्तिकारेणैव व्याख्यात—"भावाना शून्यतार्थमज्ञात्वा प्रवृत्त उपालम्भ वक्तु 'त्वद्वचनस्य शून्यत्वात् त्वद्वचनस्यास्वभावत्वात्' एव त्वद्वचनेन नि स्वभावेन भावाना स्वभावप्रतिषेधो नोपपद्यत इति, इह हि प्रतीत्य भावाना भाव. सा शून्यता, कस्मात्? नि.स्वभावत्वात्। ये हि प्रतीत्यसमुत्पन्ना

भावास्ते न सस्वभावा भवन्ति स्वभावाभावात्। कस्माद्धेतुप्रत्ययापेक्षत्वात्। यदि हि स्वभावतो भावा भवेयु प्रत्याख्यायापि हेतुप्रत्यय भवेयुर्न चैव भवति, तस्मान्नि स्वभावा। नि स्व-भावत्वाच्छून्या इत्यभिधीयन्ते" इत्यादिना। तत्प्रतिपादिका एव—"असदेवेदमग्र आसीत्" इत्याद्या. पूर्वपक्षश्रुतय, एतन्निरासार्थाश्च "अन्ध तम प्रविशन्ति" इत्याद्या।

भोक्तैव केवलबोधात्मक आत्माऽनात्मभ्य प्रकृत्यादिभ्यो विवेक्तव्य इति विवेकमादायैव साङ्ख्ययोगमतोपसहार, अत एव–"प्रकृते. परस्तात्" इत्यादीनि पूर्वपक्षोद्भावकानि, "नान्य-त्स्मत्" इत्यादीनि चोत्तरपक्षोल्लेखीनि श्रुतिवाक्यानि।

अविद्यया कर्तृत्वादिधर्मभाक् परमार्थतो निर्धर्मक परमानन्दबोध एवात्मेत्यौपनिषदा। अत्र केवलात्मभानमुपादायाद्वैतमतोपसहार, "न पश्यतीत्याहुरेकीभवन्ति" इत्यादि तदुत्थापक वाक्यम्, नाद्वैत नापि च द्वैतम्" इत्यादिवचनैश्चास्यापि हेयत्वम्।

तत समस्तसंस्काराभिभवात्केवलात्मनोऽपि न विकल्प इत्याश्रित्य चरमवेदान्तिमतम्, तत्प्रतिपादिकाश्च–"यतो वाचो निवर्तन्ते" इत्याद्या श्रुतय.। सैवावस्थोपादेया, मोक्षपुरनगरा-यमाणत्वान्निर्वाणस्य स्वय सिद्धत्वात्। यामाश्रित्य "अथ यो निष्काम आत्मकाम" इत्यादिना न्यायमतोपसहार। तथा चैवविधवादिविप्रतिपत्तिभि सदिग्धे सामान्यतोऽह प्रत्ययसिद्धेऽप्या त्मनि तद्विशेषनिर्णयाया मतत्त्वावधारणार्थ तद्विचारस्यावश्यकतेति सिद्धम्।

## सौगतमत आत्मस्वरूपम्

यद्यपि पूर्वपक्षमतनिरसनमृते सिद्धान्तमतेनात्मस्वरूपव्यवस्थापनस्याशक्यतया सौगतमतमिवा-न्येषामपि मतानि दूषणार्हाणि, तथाप्यन्यत्र तेषा निराकृतत्वाद्विलीनप्रायत्वाच्चान्यनास्तिकदर्शनानाम्, बौद्धमतप्रचारस्यैव भारतवर्षे बहुलमुपलब्धे., सौगतमतपङ्कनिमग्न जगदुद्दिधीर्षुभिराचार्योदयनपादै-स्तन्महताऽऽडम्बरेणोन्मूलितमिति जानन्त्येव दार्शनिका.।

तत्र प्रत्यक्षानुमानाभिध प्रमाणयुगलमुररीकुर्वता सौगताना तावद्वक्ष्यमाणचतुर्विधभावनया परमपुरुषार्थसिद्धिरिति सिद्धान्तानुसरणेन माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकेति चतस्र सज्ञा प्रथिता। यद्यपि भगवान् बुद्ध एक एव बोधयिता तथापि बोद्धव्यमतिवैचित्र्यवैभवादुक्त-चातुर्विध्य समजनि। तथा हि–"गतोऽस्तमर्क" इत्युक्ते जारचोरानूचानादय स्वस्वेष्टार्थानुसारे-णाभिसरणपरस्वहरणसदाचरणादिसमयमुक्तवाक्याभिप्राय विदन्तीति लोकसिद्धम्। तत्र तावत्कदा-चिदुपसन्नान् शिष्यानवधाय–"सर्व क्षणिक क्षणिकम्", 'सर्व दुःख दुःखम्", "सर्व स्वलक्षण

स्वलक्षणम्'', ''सर्व शून्य शून्यम्'' इति भावनाचतुष्टय परमाचार्येणोपदिष्टम् । उक्तभावनाचतुष्टय-चिन्तनबलान्निखिलैहिकामुष्मिकविषयवासनानिवृत्तौ शून्यात्मक निरालम्ब परनिर्वाण सेत्स्यतीति वय कृतार्था भवेम, नास्माकमुपदेश्य किञ्चिदत परमस्ति । अन्तेवासिभिश्चाप्राप्तार्थस्य लब्धये पर्यनु-योगरूपो योग', गुरूपदिष्टस्यार्थस्याङ्गीकरणस्वरूप आचारश्चेति द्वयं विधेयमित्याकर्ण्य कैश्चिच्छात्रै-राचार्योपदिष्टस्याङ्गीकारेणोत्तमा. पर्यनुयोगस्याकरणेन चाधमा इत्येव 'माध्यमिक'-सज्ञा सम्प्राप्ता, स्वीकृत च सर्वशून्यत्वम् ।

इदमत्र तात्पर्यम्—नीलादिक्षणाना सत्त्वेन क्षणिकत्वमनुमातव्यम् । यत्सत्तत्क्षणिक यथा जलधर-पटलम्, सन्तश्चामी सर्वे भावा इति । न चायमसिद्धो हेतु , अर्थक्रियाकारित्वरूपसत्त्वस्य नीलादि-क्षणेषु प्रत्यक्षसिद्धत्वात्, व्यापकनिवृत्त्या व्याप्यनिवृत्तिरिति न्यायेन व्यापकक्रमाक्रमनिवृत्तावक्षणि-कात्सत्त्वनिवृत्तेः सिद्धत्वाच्च । तच्चार्थक्रियाकारित्व क्रमाक्रमाभ्या व्याप्तम् । न च क्रमाक्रमाभ्यामन्यो विधिरस्ति, ''परस्परविरोधे हि न प्रकारान्तरस्थिति. । नैकतापि विरुद्धानामुक्तिमात्रविरोधत. ।।'' इति न्यायेन व्याघातसम्भवात् । तौ च क्रमाक्रमौ स्थायिनो व्यावर्तमानावर्थक्रियामपि व्यावर्तयन्तौ क्षणिकत्वपक्ष एव सत्त्व व्यवस्थापयत इति । अत एवोक्त ज्ञानश्रिया—

> यत्सत्तत्क्षणिक यथा जलधरा सन्तश्च भावा अमी
> सत्ताशक्तिरिहार्थकर्मणि मिते सिद्धेषु सिद्धा हि सा ।
> नाप्येकैव विधाऽन्यथा परकृतेनापि क्रियादिर्भवेत्
> द्वेधापि क्षणभङ्गसङ्गतिरत साध्ये च विश्राम्यति ।। इति ।

सामान्यविशेषसमवायानामसत्त्वप्रसङ्गात्सत्तासामान्ययोगित्वरूप सत्त्व न निर्वक्तुं शक्यम्,अनु-वृत्तप्रत्ययश्चापोहालम्बन एवेति सर्व क्षणिकमिति भावनीयम् । एवमेव सकलस्य ससारस्य दु खा-त्मकत्व सर्वशास्त्रकृत्सम्मतम् । अन्यथा तन्निवृत्सूना तन्निवृत्त्युपाये प्रवृत्त्यनुपपत्ते' । अतः सर्व दु.ख दुःख-मित्यपि भावनीयम् । ईदृक्प्रतिज्ञा साधकदृष्टान्ताभावात्कथ सिद्धेदिति न शङ्कनीयम्, स्वलक्षणाना क्षणाना स्वालक्षण्याभावादेतेन सदृशमिदमिति दृष्टान्तस्य वक्तुमशक्यत्वात् । अत एव स्वलक्षण स्वलक्षणमिति तृतीया भावना कर्तव्या । एव शून्य शून्यमित्यपि भावनीयम्, स्वप्ने जागरणे च न मया दृष्टमिद रजतादीति विशिष्टनिषेधस्योपलब्धेः । यदि दृष्ट सत्तदा तद्विशिष्टस्य दर्शनस्येदन्ताया अधिष्ठानस्य च तत्राध्यस्तस्य रजतत्वादेस्तत्सम्बन्धस्य च समवायादे. सत्त्व स्यात् । न चैतदिष्ट कस्यापि । न चार्धजरती युक्ता । तस्मादध्यस्ताधिष्ठानतत्सम्बन्धदर्शनद्रष्टृणा मध्य एकस्यानेकस्य वाऽसत्त्वे निषेधविषयत्वेन सर्वस्यासत्त्व बलादापतेद् भावनाचतुष्टयस्येति ।

आचार्योपदिष्ट भावनाचतुष्टय बाह्यार्थशून्यत्व चोररीकृत्याऽऽन्तरस्य विज्ञानस्य कथ शून्यत्व-मुपदिष्ट प्रथमभावनयेति पर्यनुयोगकरणादितरेषा 'योगाचार' इति प्रथा पप्रथे ।

एतन्मते खलु स्वसवेदन विज्ञानमेवार्थोऽन्यथा जगदान्ध्यापत्ति । अत एवोक्तम्—"अप्रत्यक्षो-पलम्भस्य नार्थदृष्टिः प्रसिध्यति" इति । ग्राह्यस्तु बाह्योऽर्थो नास्त्येव, ज्ञानग्राह्यस्योत्पन्नस्य तस्य स्थित्यभावादनुत्पन्नस्य चासत्त्वात् । वर्तमानतावभासविरोधादतीतार्थोऽपि ज्ञानजनको न सभवति । एवमतीन्द्रियत्वात्कृत्स्नैकदेशवृत्तित्वासभवाच्च परमाणुरूपोऽवयविरूपो वार्थोऽपि न प्रमाणपदवी-मारोढुमर्हति, तस्मात्स्वभिन्नग्राह्याभावात्तदात्मिका बुद्धि' स्वात्मरूपप्रकाशिका प्रकाशवदिति सिद्धम् । अत एवोक्त वार्त्तिकालङ्कारे—

नान्योऽनुभाव्यस्तेनास्ति तस्या नानुभवोऽपर ।
तस्यापि तुल्यचोद्यत्वात् स्वय सैव प्रकाशते ॥
नीलादिरूपस्तस्यासौ स्वभावोऽनुभव श्रम ।
नीलाद्यनुभव ख्यात स्वरूपानुभवोऽपि सन् ॥

इत्यादिना विज्ञप्तिमात्रतासाधकप्रकरणे । यद्वेद्यते येन वेदनेन तत्ततो न भिद्यते, यथा ज्ञाने-नात्मा । वेद्यन्ते तैश्च नीलादय इत्यनुमानेन ग्राह्यग्राहकयोरभेदश्च साधनीय । भेदे हि तादात्म्यस्य नियामकस्याभावादर्थस्याधुना संबन्धो न भवेदुत्पत्तेरनियामकत्वात् । ग्राह्यग्राहकसवित्तिभेदावभास-स्त्वेकस्मिश्चन्द्रे द्वित्वावभास इव भ्रममूलक । अत एवोक्तम—"सहोपलम्भनियमादभेदो नील-तद्धियोः । भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये ॥" इति । तस्माद्बुद्धिरेवानादिवासनावशादने-काकाराऽवभासत इति । ततश्च प्रागुक्तभावनाभ्यासबलान्निखिलवासनोच्छेदविगलितविविधविषया-कारोपप्लवविशुद्धविज्ञानोदयो महोदयोऽपवर्गापराभिध इति विशेष. ।

रूपविज्ञानवेदनासस्कारसज्ञाख्यपञ्चस्कन्धात्मक सर्व बाह्याभ्यन्तर तत्त्व दु'ख दु खायतन दु खसाधन चेति विभाव्य तन्निरोधोपाय तत्त्वज्ञान साधयेत् । एव च दुःखसमुदयनिरोधमार्गा-श्चत्वार एव सुगताभिमताः पदार्थाः । तत्र दु.ख प्रसिद्धमेव बाधना पीडाद्यपरपर्यायम् । समुदयो दुःखकारणम् । प्रत्ययोपनिबन्धहेतूपनिबन्धभेदेन द्विविधस्य दु.खस्य निवृत्तिर्निरोध. । तन्निरोधो-पायश्च मार्ग । स च तत्त्वज्ञानमेव । तच्च प्रागुक्तसर्वशून्यत्वभावनाबलादेवोत्पद्यते । तदनन्तर विमलज्ञानोदय एवापवर्ग इति सूत्रस्यान्त पृच्छतामन्तेवासिनाम्—'भवन्त सूत्रस्यान्तं पृष्टवन्त. 'सौत्रान्तिका' भवन्त्विति भगवता बुद्धेनान्वर्थसज्ञाविधानात् 'सौत्रान्तिक' इति प्रसिद्धिरभू-

द्वौद्धदर्शनेषु। सौत्रान्तिका खलु प्रमाणाभावाद्बाह्य वस्तुजात नास्तीति पूर्वोक्त मत नाद्रियन्ते। न च सहोपलम्भनियमस्तत्र प्रमाणमिति वाच्यम् वेद्यवेदकयोरभेदसाधकस्य तस्याप्रयोजकत्वेन संदिग्धविपक्षव्यावृत्तिकत्वात्। ज्ञानस्वरूपोऽपि नीलाद्याकारो भ्रान्त्या बहिर्वदवभासत इत्यप्ययुक्तम्। बाह्यार्थाभावे तद्व्युत्पत्तिराहित्येन बहिर्वदित्युपमोक्तेरसङ्गतत्वात्। नहि चैत्रो वन्ध्यापुत्रवदिति कश्चित्प्रेक्षावानाचक्षीत। भेदप्रतिभासस्य भ्रान्तत्वेऽभेदप्रतिभासस्य प्रामाण्यम्, तत्प्रामाण्ये च भेदप्रतिभासस्य भ्रान्तत्वमित्यन्योन्याश्रयाच्च। न च ज्ञानातिरिक्तकालस्यार्थस्य ग्राह्यत्वमिति वक्तव्यम्, इन्द्रियसन्निकृष्टस्यार्थस्योत्पाद्ये ज्ञाने स्वाकारसमर्पकतया समर्पितेनाकारेण विषयस्यानुमेयतापत्तेः। तथा हि—ये यस्मिन् सत्यपि कादाचित्कास्ते तदतिरिक्तसापेक्षाः, विवक्षुपुरुषान्तरसापेक्षा, विवक्षुमद्वचनप्रतिभासादिवत्। विवादास्पदाश्चैते प्रवृत्तिप्रत्यया आलयविज्ञाने सत्यपि कदाचिदेव नीलाद्युल्लेखिन इति। तस्मादालयविज्ञानसन्तानभिन्नः कादाचित्कप्रवृत्तिहेतुर्बाह्योऽर्थो ग्राह्य एव, न वासनाकादाचित्कत्वहेतुक इति सौत्रान्तिकमतरहस्यसंक्षेप।

ततश्चापरे तदनुयायिनो बाह्येषु गन्धादिष्वान्तरेषु च पञ्चस्कन्धेषु विद्यमानेष्वपि तत्रानास्थामुत्पादयितु सर्व शून्यमिति प्राथमिकविनेयानुपदिश्याचार्यो द्वितीयान् विज्ञानमात्रग्रहाभिनिविष्टान् विज्ञानमेवैक तत्त्व बाह्य तु शून्यमेवेत्याख्याय तृतीयानुभय सत्यमित्यङ्गीकुर्वतो विज्ञेयमनुमेयमिति विरुद्धा भाषामुपवर्णयामासेति वर्णयन्तो वैभाषिकाख्यया विख्याता बभूवुः। इयं ह्येतेषा परिभाषा—सौत्रान्तिकमतेनार्थस्यानुमेयत्वे कस्यचिदप्यर्थस्याप्रत्यक्षत्वाभावेन व्याप्तिग्रहाभावादनुमानप्रवृत्त्यनुपपत्तिः, सार्वजनीनानुभवविरोधश्च। स चार्थो ग्राह्याध्यवसेयभेदाद् द्विविधः। तत्र ग्रहण निर्विकल्पकरूप प्रमाण कल्पनापोढत्वात्। अध्यवसायश्च सविकल्पकापरपर्यायो न प्रमाणम्, कल्पनात्मकत्वात्। अत एवोक्तम्—

> कल्पनापोढमभ्रान्त प्रत्यक्ष निर्विकल्पकम्।
> विकल्पो वस्तुनिर्भासादसंवादादुपप्लवः॥
> ग्राह्य वस्तु प्रमाण हि ग्रहण यदितोऽन्यथा।
> न तद्वस्तु न तन्मान शब्दलिङ्गेन्द्रियादिजम्॥ इति।

न चैव विनेयाशयानुरोधेनोपदेशभेदः साम्प्रदायिकत्वाननुरोधात्कथ प्रमाणपदवीमारोढुमर्हतीति साम्प्रतम्, "देशना लोकनाथाना सत्त्वाशयवशानुगाः। भिद्यन्ते बहुधा लोक उपायैर्बहुभिः पुनः॥ गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणा। भिन्ना हि देशनाऽभिन्ना शून्यताद्वयलक्षणा॥" इति बोधिचित्तविवरणोक्तवाक्यजातैरन्तेवासिबुद्धिवैलक्षण्येन देशनाना भेदसंभवेऽपि

शून्यताद्वयत्व एवाचार्योपदशतात्पर्यावधारणात् । अत एव विवेकविलासे सागतमततत्त्वमित्थ-मभ्यधायि—

बुद्धाना सुगतो देवो विश्व च क्षणभङ्गुरम् । आर्यसत्याख्यया तत्त्वचतुष्टयमिद क्रमात् ॥
दु खमायतन चैव तत समुदयो मत । मार्गश्चेत्यस्य च व्याख्या क्रमेण श्रूयतामत ॥
दु.ख ससारिण स्कन्धास्ते च पञ्च प्रकीर्तिता । विज्ञान वेदना सज्ञा सस्कारो रूपमेव च ॥
पञ्चेन्द्रियाणि शब्दाद्या विषया पञ्च मानसम् । धर्मायतनमेतानि द्वादशायतनानि च ॥
रागादीना गणो यस्मात्समुदेति नृणा हृदि । आत्मात्मीयस्वभावाख्य स स्यात्समुदय खलु ॥
क्षणिका सर्वसस्कारा इति या वासना स्थिरा । स मार्ग इति विज्ञेय' स च मोक्षोऽभिधीयते ॥
प्रत्यक्षमनुमान च प्रमाणद्वितय तथा । चतुष्प्रस्थानिका बौद्धा ख्याता वैशेषिकादय. ॥
अर्थो ज्ञानान्वितो वैभाषिकेण बहु मन्यते । सौत्रान्तिकेन प्रत्यक्षग्राह्योऽर्थो न बहिर्मत. ॥
आकारसहिता बुद्धिर्योगाचारस्य समता । केवला सविद स्वस्था मन्यन्ते मध्यमा. पुन ॥
रागादिज्ञानसन्तानवासनोच्छेदसभवा । चतुर्णामपि बौद्धाना मुक्तिरेषा प्रकीर्तिता ॥ इति।

यद्यपि सौगताना देहाद्यतिरिक्त पञ्चस्कन्धातिरिक्तो वाऽऽत्मा नास्तीत्येवोपलब्धग्रन्थेभ्यो ज्ञातत्वात्सर्वेषा विश्वासस्तन्मूलक एव चोदयनादीना बौद्धमतनिरासप्रयासस्तथापि समितीया वज्जिपुत्तकाश्च पुद्गलवादिनो बौद्धा. शरीराद्यतिरिक्तस्यात्मनः साधका आसन्निति इतिहासदृष्ट्या स्फुटमुन्नीयते । वज्जिपुत्तका' खलु मूलसघात्पूर्वमेव भेदमापन्ना इति तेषा प्राचीनत्वे न कोऽपि सदेह । सयुत्तनिकायाख्ये सुत्तपिटकान्तर्गतग्रन्थविशेषे भारहारसूत्राभिध किमपि सूत्रमुपलभ्यते, यत्र भार-तद्धारकतद्ग्रहणतत्त्यागरूपवस्तुचतुष्टय साधु प्रतिपादितम् । तत्र भारस्य पञ्चस्कन्धात्मतया व्याख्या-तत्वात्तद्धारकस्य पुद्गलत्व स्कन्धाद्यतिरिक्तत्व चेति व्यक्त प्रतिभासते । तृष्णैव च भारग्रहणम् । उपरमात्मकस्तृष्णाच्छेद एव तत्त्याग' । बुद्धघोष-वसुबन्धु चन्द्रकीर्ति यशोमित्रादिभि सूत्रस्या-न्यथा व्याख्यातत्वेऽपि स्कन्धाद्यतिरिक्तात्मसिद्धावेवास्य तात्पर्यमित्युद्योतकरकृतोक्तसूत्रव्याख्यान-दर्शनादपि निर्धार्यत इति केषाञ्चिद्दार्शनिकाना मत विभावनीयम् ।

एव नैरात्म्यवादिना चतुर्विधबौद्धाना नैयायिकाभिमतदेहादिसघातातिरिक्तस्थिरात्मसाधने क्षणभङ्गो वा, बाह्यार्थभङ्गो वा, गुणगुणिभेदभङ्गो वा, अनुपलम्भो वेति विप्रतिपत्तिचतुष्टयमेव बाधक सभवति । वेदान्तिनोऽप्यापाततो नैरात्म्यवादिन एवेति तन्मतमपि दूष्यमेव । तथा च श्रुतिसम-धिगतेऽप्यात्मन्यस्थिरतानिवृत्तय आन्वीक्षिकीप्रतिपाद्यन्यायप्रयोगावश्यकता । न्यायेनावधारण चोक्तविधस्यात्मनो बाधकनिवारण विना नाङ्ग धारयतीति तन्निरासायैव प्रथममात्मतत्त्वविवेकाख्ये

निबन्ध आचार्यप्रवरै: परिकरो बद्ध । अत्र क्षणभङ्गे नित्यत्वभङ्ग, बाह्यार्थभङ्गे गुणगुणिभेदभङ्गे च ज्ञानभिन्नस्यात्मनोऽसिद्धिः, अनुपलम्भे स्वरूपासिद्धिरिति बाधकचतुष्टयफल पूर्वपक्षिमतेन यथासख्य वेदितव्यम् ।

तत्र क्षणभङ्गनिरासाय सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मससर्गादेर्भेदसाधकत्वाभावाद्यत्सत्तत्क्षणिकमिति प्रतिबन्धासिद्धि, सहकारिसमवधानासमवधानाभ्यामेव बीजादङ्कुरोत्पादसम्भवे क्षणिकेऽपि कुर्वद्रूपदृष्टान्तेन तत्कल्पना व्यर्थेत्याशयेन भावानामुत्पादविनाशस्वभावासम्भव, सव्यतिरेकविवरणम्, क्षणिकत्वसत्त्वयोर्व्यतिरेकव्याप्त्यसिद्धि, ध्रुवभावितया विनाशस्याहेतुकत्वेन भावाना विनाशस्वभावत्वस्यानुपपत्तिरित्यादयो युक्तयो दत्ता । प्रत्यभिज्ञानक्षणिकत्वानुपपत्तिभ्या स्थिरात्मसाधनानन्तरमतद्व्यावृत्तिरूपान्यापोहेनैवानुगतबुद्धिसम्भवे कृत विधिरूपातिरिक्तजातिपदार्थेनेति पूर्वपक्षिमतसमुन्मूलनपूर्वक शब्दलिङ्गविकल्पानामलीकविषयत्वखिलीकरणेन बाह्यार्थसद्भावमङ्गीकुर्वतो विज्ञानाकारवादिनः सौत्रान्तिकान् प्रद्राव्य जातिबाधकनिरसनपूर्वकमपोहनिरासोपसहारद्वाराऽऽत्मनि क्षणभङ्गरूपबाधकनिराकरण यथा प्रगाढपाण्डित्येन विहित तथा तत्रैव द्रष्टव्यम् ।

बाह्यार्थभङ्गो वेत्यादियोगाचारीयद्वितीयविप्रतिपत्तिभङ्गाय च ग्राह्यग्राहकयोस्तादात्म्यनिरसनमुखेन तयोर्भेदस्य काल्पनिकत्वानुपपत्त्या भेदस्य तात्त्विकत्वव्यवस्थापनम्, चित्राकारविज्ञानवादिरत्नकीर्तिमतखण्डनम्, आश्चर्यरूपत्वाच्चतुःशिखरशून्य चित्रमिति चित्राद्वैतमतस्य चित्राद्वैतापत्त्या प्रतिबन्दि, एकजातीयविकल्पद्वयनिरासपूर्वक ग्राह्यग्राहकैक्यनिराकरणोपसंहारश्चाचार्यैर्विहितः । तत्रैव च विश्वस्य विचारासहत्वाच्छून्यत्वमिति माध्यमिकाक्षेपस्य विश्वशून्यतासाधकप्रतिज्ञाहेतुदृष्टान्ताना दूषणेन खण्डनम्, दूषणोपक्रमविचारेण वस्तुनिषेध-भेदनिषेधनिराकरणम्, विरुद्धधर्माध्यासरूपपञ्चविधावयविबाधकदूषणम्, चित्रावयविबाधकखण्डनम्, अनुपम्भस्यावयविनि बाधकत्वासम्भवात्परमाणुनिवृत्तेः सर्वविलोपाच्छून्यत्वमिति माध्यमिकमतस्य च परमाणुसाधनेन निराकरणम्, निरवयवत्वानुमानखण्डनपूर्वक निरवयवविज्ञानवादिमतखण्डन च प्रधानतयाऽऽचार्यप्रवरै कृत विस्तरेण तत्रैव द्रष्टव्यम ।

गुणगुणिनोरभेदात्क्षणिकज्ञानातिरिक्त आत्मा नास्तीत्याशयेन गुणगुणिभेदभङ्गो वेति तृतीयविप्रतिपत्तिदूषणाय च प्रतिसधानस्य स्थिरात्मविषयत्वप्रसाधनम्, गुणिनि सबन्धाभावव्यापकत्वयोर्बाधकत्वनिरसनम्, गुणगुणिनो सहोपलम्भनियमदूषणम्, नैरात्म्यवादखण्डन चात्मतत्त्वविवेके तृतीयपरिच्छेदे द्रष्टव्यम् ।

शशविषाणवदनुपलम्भादात्मसत्त्वाभाव इति मन्वानाना बौद्धानामनुपलम्भो वति चतुर्थ-विप्रतिपत्ति निरस्यन्त आचार्या आहु —"सर्वादृष्टेश्च सन्देहात् स्वादृष्टेर्व्यभिचारत." इति, नहि सर्वादृष्टिरात्मनि निश्चेतु शक्याऽत सा सन्दिग्धासिद्धा, बाह्वीया दृष्टिरूपानुपलब्धिश्च स्वरूपायोग्ये दूरवर्तिनि वा पदार्थेऽसत्ताव्यभिचारिण्यतो न नैरात्म्यसाधिकेति तदर्थ । ननु क्षणभङ्गादीना नात्मनि बाधकत्वामसत्त्वेऽपि साधकाभावान्न स सिद्ध्येदिति चेन्न अहमिति विकल्पस्य प्राण-भृन्मात्रसिद्धत्वादिच्छाद्यात्मसाधकाना हेतूनामनुसन्धानाभावेऽप्यहमित्यादिस्वानुभवसिद्धत्वादात्म-सिद्धेः । अनादिवासनावशादनादिरयमवस्तुको विकल्प इति न युक्तम् । नीलादिविकल्पसाधार-ण्यादिह वासनामुपादायानाश्वासे प्रमाणान्तरेऽपि क. समाश्वासो यतो नीलादिविकल्पेषु समाश्वास स्यात् । तस्माद्वासनामात्रवाद विहायागन्तुकमपि किञ्चित्कारण वाच्यम् , तच्चासानातशब्दो वा लिङ्गतदाभासौ वा प्रत्यक्षतदाभासौ वेति । तत्र यथा प्रथममन्यमप्रकाशभावान्नीलविकल्पश्चरम कल्पमालम्बते तथाहमिति विकल्पोऽपि । न च बाह्यप्रत्यक्षनिवृत्तावेव निर्मूलत्वम्, बुद्धिविकल्पस्यापि तथात्वप्रसङ्गात् । तत्र स्वसवेदन मूलमिहापि मानसप्रत्यक्षमिति न कश्चिद्विशेष' । ननु प्रत्यक्ष-सिद्धेऽपि तवात्मनि स्थिरे किमनुमान प्रमाण येन परितोष स्यादिति चेच्छृणु तावत्—अहमिति प्रत्ययालम्बन स्थिर ताद्रूप्येण प्रत्यभिज्ञायमानत्वाद्धटादिवदिति प्रतिसन्धानमनुमानमत्र लिङ्गमिति । एव प्रतिसन्धानेनैककर्तृकत्वसाधन प्रकारान्तरैश्च स्थिरात्मसाधन भूतेन्द्रियाद्यात्मवादखण्डनपुरस्सर विदधताचार्येण "महतो महीयान्" इत्याद्यागमस्यार्थवादत्वमित्याक्षेपोऽपि निरस्त ।

स्यादेतत्, सिद्धोऽप्यात्मा हेय एव । आत्मदृशा हि तदुपकारिणि रज्येत, तदपकारिणश्च द्विष्यात् । रागद्वेषौ च मूल ससारस्य । यस्तु त न पश्येत् नास्य तदुपकारापकारिणमपि च । ततो न रज्येन्नापि द्विष्यान्न ससरेदिति जाङ्गलिकेन निर्विष्यवन्मुमुक्षुणापि नैरात्म्यमेव भावनीयमिति चेन्न , अनात्मदर्शिनो मुमुक्षुत्वव्याघातात् । न ह्यात्मानमप्रतिसन्धाय कश्चिद् दुःख हातुमिच्छेत् सुख वा प्राप्तुम् । मया स्वर्गापवर्गफलभागिना भवितव्यमित्यभिप्रायस्य यावदभियोगमनुवृत्तेरननु-वृत्तावभियोगनिवृत्तौ फलासिद्धे । इय च नैरात्म्यदृष्टिर्नास्तिक्य दृढयेत् । तच्च प्रबलविषयतृष्णा-परिप्लुतमनर्थमनन्त प्रसुवीत । न चेदेव कुत 'यावज्जीव सुख जीवेत्" इत्यादयो नि शङ्कप्रलापा । यत्तूक्तमुपकारिणि रज्येदपकारिणि द्विष्यादिति । तत्तु न दोषाय प्रत्युत गुणायैव । यतो यो हि मोक्ष-मुपकार मनुते स तद्धेतो रक्तस्तमुपाददानस्तत्परिपन्थिन द्वेषाद्दराप्रत्ययाद्वा परिहरन्नेव समीहित समासादयेन्न विपर्ययात् । यश्च भोग सोऽपि तथेत्यनुकूलमेव प्रतिकूल गृहीत मन्दैर्बौद्धै. । अन्यत्रा-प्यनुरज्येदन्यदपि द्विष्यादिति तु न दृष्ट गोवैनयिकेऽपीति 'अशरीर वाव सन्तम्' इत्याद्याम्नाय-

सारसग्रहप्रदर्शनेनात्मतत्त्व प्रसाधयद्भिराचार्यैराम्नायाप्रामाण्याक्षेपपरिहारपुरस्सरमाम्नायप्रामाण्य व्यवस्थाप्येश्वरसाधकानुमानेषु दोषोद्धारपूर्वकमीश्वरे सार्वज्ञ्य वेदवक्तृत्व च प्रसाध्य महाजनपरिगृहीतत्व वदार्थेष्वेव न सौगताद्यागमार्थष्विति व्यवस्थापितम् । एव च स्थिरात्मतत्त्वसाधक तर्कशास्त्रमेवाप्तोक्तवेदानुकूलतया ग्राह्यम्, महाजनपरिग्रहादिना प्रामाण्यनिर्धारणात् । न च कथ सुगताद्यागमेष्वनादरश्छान्दसानाम् ? वेदविद्वेषिदर्शनान्त पातिपुरुषप्रणीतत्वादिति मा शङ्किष्ठा, जिनेन्द्रजगदिन्दुप्रणीतेष्वप्यादरात् । तत्कस्य हेतो ? महाजनपरिगृहीतपूर्वागमाविरुद्धतया तदनुसारित्वात् । कुतस्तर्हि तत्र छान्दसानादरः? सिद्धप्रामाण्यवेदविरोधात् । कथ तर्हि कतिपयपरिग्रह ? आयासभीरुभिर्दु.खमयजात्यकर्मविद्वेषात्, उत्तरगतीयतन्तुवायवत् । न त्वेव वेदे कर्मण्येव निर्भरत्वात्, त्रैवर्णिकबहिष्कृतैरनधिकारिभिरनन्यगतिकत्वात् कीर्तिप्रज्ञाकरवत् । न त्वेव श्रुतौ, परे पूज्यमानानामप्यत्राप्रवेशात् । इत पतितानामपि परैरुपादानात् । भक्ष्यपेयाद्वैतरुचिभिश्च रागात् शरभादिवत् । न त्वेवमाम्नाये तद्विभागव्यवस्थापनात् । एव च यथायुर्वेदे नैरुज्यकाम प्रवर्तते तथा यागादौ स्वर्गादिकामो न तु विप्रलम्भादिति वैदिकात्मतत्त्वविवेचन परमावश्यकम् । स चात्मा कि स्वप्रकाशसुखस्वभावोऽन्यथा वेति चेत्, वेदान्तिमते स्वप्रकाशसुखस्वभावोऽपि "अह जाने, अह सुखी" इत्याद्यनुभवेन ज्ञानाद्याश्रय एवेति जानीहि । अत एवोक्तमुदयनाचार्यै.—

> श्रुते. श्रुत्वात्मान तदनु समनुक्रान्तवपुषो
> विनिश्चित्य न्यायादथ विहितहेयव्यतिकरम् ।
> उपासीत श्रद्धाशमदमविरामैकविभवो
> भवोच्छित्त्यै चित्तप्रणिधिविहितैर्योगविधिभि. ॥इति ।



# ज्यौतिषे वैज्ञानिकी दृष्टिः

श्रीमीठालाल ओझा, राजकीयसंस्कृतमहाविद्यालय, काशी।

रजन्या चञ्चच्चन्द्रिकं रमणीदुकूलमिवाम्बरतल्पमवलोक्यते। तच्च ज्योतिश्चक्रं ज्यौतिषशास्त्रस्य मूलकारणम्। ज्योतिश्चक्रं सप्तविंशतिधा विभक्तमिति तैत्तरीयसंहितायां स्पष्टतमुपवर्णितमास्ते। तद्यथा—

"कृत्तिकानक्षत्रमग्निर्देवताग्नेरुचस्थ प्रजापतेर्धातु सोमस्यर्चे त्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वा रोहिणीनक्षत्रं प्रजापतिर्देवता मृगशीर्षं नक्षत्रं सोमो देवतार्द्रानक्षत्रं रुद्रो देवता पुनर्वसूनक्षत्रमदितिर्देवता तिष्यो नक्षत्रं बृहस्पतिर्देवताऽऽश्लेषानक्षत्रं सर्पा देवता मघानक्षत्रं पितरो देवता फल्गुनीनक्षत्रमर्यमा देवता फल्गुनीनक्षत्रं भगो देवता हस्तो नक्षत्रं सविता देवता चित्रानक्षत्रमिन्द्रो देवता स्वातीनक्षत्रं वायुर्देवता विशाखे नक्षत्रमिन्द्राग्नी देवतानूराधानक्षत्रं मित्रो देवता रोहिणीनक्षत्रमिन्द्रो देवता विचृतौ नक्षत्रं पितरो देवताषाढानक्षत्रमापो देवताषाढानक्षत्रं विश्वेदेवा देवता श्रोणानक्षत्रं विष्णुर्देवता श्रविष्ठानक्षत्रं वसवो देवता शतभिषङ्नक्षत्रमिन्द्रो देवता प्रोष्ठपदानक्षत्रमज एकपाद्देवता प्रोष्ठपदानक्षत्रमहिर्बुध्नियो देवता रेवतीनक्षत्रं पूषा देवताऽश्वयुजौ नक्षत्रमश्विनो देवतापभरणीर्नक्षत्रं यमो देवता पूर्णापश्चाद्यत्ते देवा अदधु।" [तै० सं० ४ ४. १०]

एतज्ज्योतिश्चक्रं द्वादश राशिषु विभक्तमिति तैत्तरीयब्राह्मणवचनैः स्पष्टं प्रतीयते। तद्वचनानि—

"आदित्योऽसि दिवि श्रित। चन्द्रमस प्रतिष्ठा। । चन्द्रमा अस्यादित्ये श्रितः। नक्षत्राणां प्रतिष्ठा। । नक्षत्राणि स्थ चन्द्रमसि श्रितानि। संवत्सरस्य प्रतिष्ठा युष्मासु। संवत्सरोऽसि नक्षत्रेषु श्रितः। ऋतूनां प्रतिष्ठा। .. । ऋतव स्थ संवत्सरे श्रिता। मासानां प्रतिष्ठा युष्मासु।" [तै० ब्रा० १ ११ १]

अपि च—

> द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य।
> आ पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः॥
>
> [ऋ० सं० १ १६४ ११]

मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्चेषश्चोर्जश्च सहश्च ।
सहस्यश्च तपश्च तपस्यश्चोपयामगृहीतोऽसि सं सर्पोऽस्य हस्पत्याय त्वा ॥

[तै० सं० १ ४ १४]

इत्यादिवचनपर्यालोचनया स्पष्टमाभाति यद् द्वादशराशिकल्पना भारतीयानामेव । भारतीयैर्विदेशाद् गृहीतेति शङ्कास्पदं नास्त्येव । ज्यौतिषशास्त्रस्योत्तरोत्तरोत्कर्षावसरे महाभारतज्योतिषार्षसिद्धान्तग्रन्थेषु मेषादिरूपेण स्पष्टतया सर्वेषां पुरस्तादुद्गतेति तद्विदुषामतिरोहितमेव ।

द्वादशराशिगुणधर्मा जातकग्रन्थेषु सम्यग् वर्णिता सन्ति । ते च वक्ष्यमाणग्रहराशिसंबन्धविचारोपयोगितया प्रथममत्र प्रतन्यन्ते—

तत्रादौ मेषराशिस्वरूपम्—रक्तवर्णो बृहद्गात्रश्चतुष्पाद्रात्रिविक्रमी । पूर्ववासी नृपज्ञाति' शैलचारी रजोगुणी ॥ पृष्ठोदय पावकी च मेषराशि' कुजाधिप' ॥ १ ॥

वृषभराशिस्वरूपम्—श्वेत शुक्राधिपो दीर्घश्चतुष्पाच्छर्वरी बली ॥ याम्येट् ग्राम्यो वणिग्भूमी रज' पृष्ठोदयो वृष ॥ २ ॥

मिथुनस्वरूपम्—शीर्षोदय नृमिथुन सगद च वीणकम् । प्रत्यक् गमी द्विपाद्रात्रिबली ग्राम्यो व्रजोऽनिली ॥ समगात्रो हरिद्वर्णो मिथुनाख्यो बुधाधिप ॥ ३ ॥

कर्कराशिस्वरूपम्—पाटलो वनचारी च ब्राह्मणो निशि वीर्यवान् । बहुपादुत्तर स्थूलतनु सात्त्वगुणी जलम् ॥ पृष्ठोदय कर्कराशिर्मृगाङ्काऽधिपति स्मृत ॥ ४ ॥

सिंहराशिस्वरूपम्—सिंह सूर्याधिप सत्त्वी चतुष्पात् क्षत्रियो बली । शीर्षोदयो बृहद्गात्र पाण्डु. पूर्वेट् द्युवीर्यवान् ॥ ५ ॥

कन्याराशिस्वरूपम्—पार्वतीयाथ कन्याख्या राशिर्दिनबलान्विता । शीर्षोदया च मध्याङ्गा द्विपाद्याम्यचरा च सा ॥ सस्यदहना वैश्या चित्रवर्णा प्रभञ्जिनी । कुमारी तमसा युक्ता बालभावा बुधाधिपा ॥ ६ ॥

तुलाराशिस्वरूपम्—शीर्षोदयो द्युवीर्याढ्य. स्थूल कृष्णो रजोगुण । पश्चिमो भूचरोघाती शूद्रो मध्यतनुर्द्विपात् ॥ शुक्राधिप ॥ ७ ॥

वृश्चिकस्वरूपम्—अथ स्वल्पाङ्गो बहुपाद ब्राह्मणो बली । सौम्यस्थो दिनवीर्याढ्य पिशङ्गो जलभूवह । रोमस्वाढ्योऽतितीक्ष्णाङ्गो वृश्चिकश्च कुजाधिपः ॥ ८ ॥

धनु'स्वरूपम्—पृष्ठोदयस्त्वथ धनुर्गुरुस्वामी च सात्त्विक । पिशङ्गो निशि वीर्याढ्य' पावकः क्षत्रियो द्विपात् । आदावन्ते चतुष्पाद समगात्रो धनुर्धर. ॥ ९ ॥

मकरस्वरूपम्—पृष्ठस्थो वसुधाचारी तेजस्वी निशि वीर्यवान्। मन्दाधिपस्तमोभूमियाम्येट् पृष्ठोदयस्तथा ॥ मकरस्तु बृहद्गात्रः कर्बुरो वनभूचर। आदौ चतुष्पादन्ते तु द्विपदो जलगो मतः ॥१०॥

कुम्भस्वरूपम्—कुम्भः कुम्भी नरो बभ्रुवर्णो मध्यतनुर्द्विपात्। द्युवीर्यो जलमध्यस्थो वातः शीर्षोदयस्तमः ॥ शूद्रः पश्चिमदेशस्थः स्वामी दैवाकरिः स्मृतः ॥११॥

मीनस्वरूपम्—मीनौ पुच्छास्यसंलग्नौ मीनराशिर्दिवाबली। जली सत्त्वगुणाढ्यश्च स्वस्थो जलचरो द्विजः ॥ अपदो मध्यदेही च जीवस्वाम्युभयोदयः ॥१२॥

नक्षत्रराशिविभागादिपर्यालोचनया स्पष्टमेव यदेकराशौ सपादद्वयनक्षत्रम्। अत्र राशीनां गुणधर्मस्वरूपादिविचारे वेदानुसरणमावश्यकमेव। यतो ब्रह्मसिद्धान्ते श्रीशाकल्यवचनम्—

> अतीन्द्रियार्थविज्ञाने प्रमाणं श्रुतिरेव हि।
> श्रुतिर्यत्र प्रमाणं स्याद्युक्तिः का तत्र नारद ॥
> जिज्ञासोर्युक्तिरिष्टाऽस्ति यदि श्रुत्यनुसारिणी। इति।

अतो राशीनां गुणधर्मस्वरूपादिनिर्णयेऽतीन्द्रियाणामृषीणां वचनान्येव प्रमाणम्। सूक्ष्मेक्षणयन्त्रद्वारा विचारे क्रियमाणे वस्तुतस्तद्वस्तुनिश्चयं कर्तुमशक्यः। तस्मादर्वाचीनैः शास्त्रानुसारी विस्तरः स्वस्वग्रन्थेषु विहितः। अर्थात् प्राचीनैः फलविचारे दा या कल्पनाः कृतास्तास्ता अनुसृत्याधुनिकैः फलनिर्णयः कृतः। यथाऽधुना मिथुनराशौ सूर्यस्योदये तथापि फलविचारे मेषराशौ सूर्योच्च मत्वा फलादेशः क्रियते। अत्र प्रत्यक्षविरुद्धमेव दृश्यते। एवमेवान्येषां ग्रहाणाम्। अत एव सर्वत्र वैज्ञानिकी दृष्टि प्रसरं नावहते। तथापि राश्याधिपमित्रामित्रदृष्टिविषये विचारः प्रस्तूयते—

राश्याधिपाः सप्तग्रहा ऋषिभिर्निर्दिष्टा सन्ति। सप्तविंशतिनक्षत्राणि द्वादशराश्यधीनानि, राशयश्चाकाशीयसप्तग्रहाधीना इति युक्तमेव। तत्राकाशे शनिगुरुभौमसूर्यशुक्रबुधचन्द्रा क्रमशोऽधोऽधोगता इति प्रत्यक्षमेव। तथा च सूर्यादेव प्राप्ततेजस्का ग्रहा इति सिद्धान्तज्योतिषे शुक्लादिवृद्ध्या स्पष्टमेवास्ति। सूर्यो दिनकर, चन्द्रश्च रजनीनायक। अतोऽहोरात्रकरणे द्वयोरपि प्राधान्यम्। तयोश्च सूर्य प्रबल, अतो वार (एकानन्तरमपरस्यावसरो वार) प्रथमः सूर्यस्य। शास्त्रे कस्य प्रथमवार इत्यत्र युक्तिर्नो दर्शिता। यथा सूर्यसिद्धान्ते—

> मन्दादधः क्रमेण स्युश्चतुर्था दिवसाधिपाः ॥ इति।

अत्र प्रथमं सूर्यस्य प्राधान्यात् प्रथमदिवसाधिपत्यं युक्तमेव। ततस्तदवरस्य चन्द्रस्य। स्वपार्श्वस्थाः स्वपार्श्वपार्श्वस्था अपि प्रीतिभाज इति लौकिकसिद्धान्तेन कक्षाक्रमे भौमः सूर्यसन्निधिगः।

अतश्चन्द्रानन्तरं भौमस्य वार.। एवं च चन्द्रेणापि स्वकक्षासमीपस्थाय बुधाय वारो दत्तः। ततः सूर्येण कक्षाक्रमेण स्वपार्श्वपार्श्वस्थाय गुरवे वारः प्रदत्त'। एवमेव चन्द्रेणापि शुक्राय। पुन सूर्येण शनये। इत्येव क्रमेण सूर्यचन्द्रभौमबुधगुरुशुक्रशनयो वासराधिपाः सजाता ।

अथ द्वादशराशिमध्ये कस्य ग्रहस्य कतरद्राश्याधिपत्यमिति विचारे प्रथम तावद्राशीनामिव ग्रहाणामपि गुणधर्मा अपेक्षिता सन्ति। तस्मादत्र प्रदर्श्यन्ते—

सूर्यस्य—मधुपिङ्गलदृक् चतुरस्रतनु पित्तप्रकृति. सविताल्पकच ।

चन्द्रस्य—तनुवृत्ततनुर्बहुवातकफ प्राज्ञश्च शशी मृदुवाक्छुभदृक् ।

भौमस्य—क्रूरदृक् तरुणमूर्त्तिरुदारः पैत्तिक. सुचपल. कृशमध्य ।

बुधस्य—श्लिष्टवाक्सततहास्यरुचिर्ज्ञ पित्तमारुतकफप्रकृतिश्च ।

गुरो.—बृहत्तनुः पिङ्गलमूर्धजेक्षणो बृहस्पति श्रेष्ठमति कफात्मक ।

शुक्रस्य—भृगु' सुखी कान्तवपुः सुलोचनः कफानिलात्मासितवक्रमूर्द्धज ।

शने —मन्दोऽलस कपिलदृक् कृशदीर्घगात्रः स्थूलद्विज परुषरोमकचोऽनिलात्मा ।

[ बृहज्जातके ]

इति सक्षेपतो ग्रहस्वरूपम्।

अत्र सिंहस्य सूर्यस्य च गुणधर्मसाम्यात् समानशक्तिसत्त्वात् सूर्यस्य सिंहराश्याधिपत्यम्। सिंहराशे. समीपस्थ' कर्कराशिर्जलराशिश्चन्द्रश्च जलात्मक',अतश्चन्द्रस्य कर्कराश्याधिपत्यम्। एवं च द्वाभ्या नायकाभ्या राशिविभागो गृहीतः। अर्थात् सिंहादिराशिषट्कस्य स्वामी सूर्य । कर्काद्यनुलोमराशिषट्कस्य स्वामी चन्द्र'। उक्त च—

सिंहादिषट्कस्य पतिर्दिनेश. कर्कान्तषट्कस्य पतिर्निशेशः।
ताभ्या प्रदत्त क्रमशोऽधिकारो ज्ञशुक्रभौमेज्यशनैश्चरेभ्य ॥

बुध' सूर्यस्यानुचर आकाशमार्गे, चन्द्रस्य च पुत्रः। अतो द्वाभ्यामपि स्वस्वसमीपग एकैको राशि' प्रदत्त.। तेन बुधस्य मिथुनकन्याराश्योराधिपत्यम्। ततो देदीप्यमानायानुगामिने शुक्राय सूर्येण तुलाराशिः प्रदत्तः, अतश्चन्द्रेणापि वृषभराश्याधिपत्य प्रदत्तम्। एवमेव ततोऽदरतेजस्विने भौमाय वृश्चिकमेषराशी प्रदत्तौ। ततोऽवशिष्टेन शनैश्चरेण मकरकुम्भराश्याधिपत्य लब्धम्। अत्र तत्तद्राशीना ग्रहाणा च गुणधर्मसाम्येनापि राश्याधिपत्य स्वयमायाति। बुधेन सूर्यायात्मसमर्पण कृतम्, अतस्तस्य प्रथमप्रीतिभाजनत्व युक्तमेव। तदनन्तर तेजोविशेषस्यादरक्रमेणाधिपत्यम्। एकैकग्रहस्य राशिद्वयप्रदान गृहपते. स्वपोष्यगृहसदस्येभ्योऽधिकप्रदानमिव शोभास्पदमेव,

कण्ठीरव विक्रमिण विलोक्य स्वीय पद तत्र चकार सूर्य ।
मैत्र्या तदामन्नतया कुलीरे निज बबन्धालयमेणलक्ष्मा ॥
अन्ये ग्रहा गृहयियाचिषया क्रमेण शीतांशुतिग्ममहसो सदन समीयु ।
प्रातक्रमेण ददतुर्भवनानि तौ तु ताराग्रहा द्विभवनास्तत एव जाता ॥

इति प्रामाण्यात ।

## अथ ग्रहोच्चविचार

सूर्यस्योच्च मेषराशि । चन्द्रात् क्रमशो वृषभमकरकन्याकर्कटमीनतुलाराशय उच्चानि । सिद्धान्तज्यौतिषदृष्ट्योच्चस्थानानि चलानि । अत्राऽत्रोच्चस्थानपदेन ग्रहस्य विशेषोत्कर्षाधायक स्थान गृह्यते, न तु सिद्धान्तोपदिष्ट स्थानम् । अथोच्चत्वे कारण विचार्यते—

अश्विनीनक्षत्रस्य स्वामिनावोषधिप्रवर्तकौ, सूर्यश्चापि वनौषधिकारणम् । अत साधर्म्यात् सूर्यस्य मेषराशिरुच्चस्थान युक्तमेव । चन्द्रो जलग्रह, कृत्तिका, चाग्निदैवतम् अग्निजलयोरन्योन्याश्रयत्वम्, तेन तत्र वृषभराशौ चन्द्रस्योच्चस्थानम् । भौमो भूमिजनितो भूतत्त्वमयो वा, धनिष्ठानक्षत्र च वसुदेवतम्, भूमिश्च वसुन्धरा, तेन भौमस्य मकरराशावुच्चत्वम्, एककारणत्वात् । ग्रहेषु बुधस्य कुमारस्थानम् । उक्त च बृहज्जातके—

राजानौ रविशीतगू क्षितिसुतो नेता कुमारो बुध ।
सूरिर्दानवपूजितश्च सचिवौ प्रेष्य सहस्राशुज ॥ इति ।

चित्रानक्षत्रं त्वष्टा( विश्वकर्मा )दैवतम् । विश्वकर्माऽनेकक्रीडनकानि निर्माति । कुमारस्य तदेवाभीष्टमतस्तत्र कन्याराशौ तस्योच्चत्वम् । पुष्यनक्षत्र बृहस्पतिदैवत बृहस्पतेरुच्चस्थानमिति किं विचित्रम् । रेवतीनक्षत्र पूषादैवतम् शुक्रश्च वीर्याधिष्ठाता जन्तूना पोषक, तेन द्वयोः साधर्म्यात्तत्र मीनराशौ शुक्रस्योच्चत्वम् । एव च स्वातीनक्षत्र वायुदैवत शनिश्च मारुत्याधिष्ठितस्तेन मरुत्साधर्म्यात् शनेस्तुलाराशावुच्चत्वमिति ।

उच्चादीनामशाश्च तारतम्यादवगन्तव्या । उच्चान्नीच सप्तमराशिर्भवति । अत्रोत्कर्षाद विरुद्धस्यापकर्षस्थानस्य सप्तमराशेर्नीचस्थलकल्पन समुचितमेव ।

## अथ ग्रहाणां मूलत्रिकोणविचार

सूर्यादीना ग्रहाणा मूलत्रिकोणराशय इमे—सिंहवृषमेषकन्याधनुस्तुलाकुम्भेति । अत्र मूलत्रिकोणराशावुच्चापेक्षया किञ्चिन्न्यूनफलदाता ग्रहो भवति । अत्र युक्ति विचारयाम —

सिंहस्य तेजोविशेषादात्मबलशालित्वम् । मेषराशौ सूर्यस्यौषधिपोषकत्वाल्लोकोपकारकत्वम् ।

अतः पूर्वापेक्षयोत्तरस्य विशेषमहत्त्वम्। तेन सिंहपूर्वार्धे सूर्यो मूलत्रिकोणक । चन्द्रस्य रोहिणी भार्येति पौराणिकी कथा। अथवा रोहिणीतारकासयोगे चन्द्रस्य शोभाविशेषत्वम्। अतः कृत्तिकाया साधर्म्यादुच्चत्वम्, रोहिण्या च मूलत्रिकोणकत्व सूक्ष्मदृष्ट्या परिणमति। हस्तनक्षत्र सूर्यदैवतम्। बुधः सूर्ये विलीनः। तस्मात् सूर्यदैवत उच्चत्वम्। बुधस्य कुमारत्वात् तत्समीपस्थे त्वष्टानक्षत्रे मूलत्रिकोणकम्, तत. पर स्वस्थानम्। गुरुरिन्द्रपुरोहितो ब्राह्मणः, पूर्वाषाढानक्षत्र जलदैवतम्, जल च पवित्रताजनकम्, तेन तत्र धनूराशौ गुरोर्मूलत्रिकोणकम्। शुक्रो हि रत्नादीना कारक., रत्नादीना च तुलासबन्धात् तुलाराशौ मूलत्रिकोणकम्। अथवा विशाखानक्षत्र शक्राग्नीदैवतद्वयम्, शुक्रश्च प्रथम शक्रस्य पुरोहित आसीत्। तदनन्तरमग्निसदृशान् तेजस्विनोऽग्न्युपासकान् वा राक्षसानाश्रितवान्। अतस्तुलाराशौ मूलत्रिकोणकम्। शनिः कुम्भराशौ मूलत्रिकोणवान्। यतो हि शनिः सेवकग्रहः, कुम्भराशिश्च घटवान् पुरुषः। द्वयोरेकधर्मत्वाच्छनेस्तत्र मूलत्रिकोणक युक्तमेव। उक्त च—

'सिंहो वृष. प्रथमषष्ठहयाङ्गतौलिकुम्भास्त्रिकोणभवनानि भवन्ति सूर्यात्।'

[ बृहज्जातके ]

## ग्रहाणां मित्रामित्रत्वविचार.

ग्रहाणा मित्रामित्रत्वविचारे तत्त्वानामाश्रयणमुपयुक्तम्। अतस्तत्त्वदृष्ट्या राशिविभागः—

| अग्नितत्त्वम् | भूमितत्त्वम् | वायुतत्त्वम् | जलतत्त्वम् |
|---|---|---|---|
| मेषः | वृषभ. | मिथुन | कर्क. |
| सिंह' | कन्या | तुला | वृश्चिक. |
| धनु. | मकरः | कुम्भ | मीन |

[ ताजिकनीलकण्ठ्या सज्ञातन्त्रे ]

सूर्य उष्णवीर्योऽग्निपित्तात्मक, अतो जलाग्नितत्त्वयोः समिश्रणत्वात् सूर्यस्य जलाग्नितत्त्वराशयो मित्राणि। यथा—मेष', सिंह, धनु', कर्कः, वृश्चिक., मीनश्चेति। एषा स्वामिनो भौमचन्द्रगुरव', एते सूर्यस्य मित्राणि। त एव भौमस्यापि, किञ्चिन्न्यूनसाधर्म्यात्। शनिर्वातप्रधानः, अतो वायुतत्त्वराशीना मित्रम्। वायुतत्त्वराशयश्च मिथुनतुलाकुम्भा इति। एषा स्वामिनो बुधशुक्रशनय.। अत शनेर्मित्रे बुधशुक्रौ। गुरु समधातुवान्। अतोऽग्निजलतत्त्वयो' साम्यस्थितो धातुसमत्व सुलभ भवति। अतस्तत्तत्त्वप्रधानराशिस्वामिनो भौमसूर्यचन्द्रग्रहा गुरोर्मित्राणि। एवमेवान्यग्रहाणामपि गुणतत्त्वविमर्शेनायुर्वेदशास्त्रमनुसृत्य मित्रामित्रविचार. कर्तु सुकर।

## ज्यौतिषे वैज्ञानिकी दृष्टि

### ग्रहाणां दृष्टिविचार

ग्रहाणा दृष्टिविषये पूर्वाचार्यैरुक्तम्—

> त्रिदशत्रिकोणचतुरस्रसप्तमान्यवलोकयन्ति चरणाभिवृद्धित ।
> रविजामरेज्यरुधिरा परे च ये क्रमशो भवन्ति किल वीक्षणेऽधिका ॥

शनि सेवकग्रहः, त्रिदशस्थाने च पराक्रमराज्यस्थाने । अत सेवकस्य पराक्रमपूर्वकराज्यस्थानावलोकन युक्तमेव । भौम' सेनापति, चतुरस्र चतुर्थाष्टमस्थाने गृहमृत्युस्थाने, अत सेनापतिना दुर्गादिविचारपूर्वकमृत्य्वादिष्ववधान प्रदेयम् । गुरु पुरोहित, त्रिकोणस्थान नवमपञ्चमस्थाने धर्मधीस्थाने । अतो गुरुणा बुद्धिपूर्वकधर्मसरक्षण विधेयम् । रविचन्द्रौ राजानौ बुधश्च कुमारः, एतेषा ससारभोगविलासे स्वाभाविकी प्रवृत्ति., अतो जायास्थानदर्शनमेतेषामुचितमेव । सचिवौ गुरुशुक्रौ, गुरुणा सर्वकार्यभारो गृहीत, अत शुक्रस्यापि राजवद्व्यवहारत्वात् कान्तास्थानेक्षण स्वयमापतति ।

सव ग्रहास्तृतीयदशमस्थाने एकचरणदृष्टितः पश्यन्ति, पञ्चमनवमस्थाने द्विपाददृष्टित. पश्यन्ति, चतुर्थाष्टमस्थाने त्रिपाददृष्टित पश्यन्ति, सप्तमस्थान च पूर्णदृष्ट्या पश्यन्ति । अर्थात् पराक्रमराज्ये, धीधर्मौ, सुखमृत्यू, जाया च चरणाभिवृद्ध्या सर्वे ग्रहा पश्यन्तीति व्यावहारिकमेव । एकान्तानुरक्ति ससारेऽनुपयुक्ता । अतो दृष्टिविचारो युक्तियुक्त एवेति शम् ॥



# वाल्मीकिरामायणे राज्ञां शिक्षा

**श्रीअलखनिरञ्जनपाण्डेय, उत्तरप्रदेशीयपाठशालोपनिरीक्षक., काशी।**

आदिकविर्वाल्मीकि: स्वकीये रामायणमहाकाव्ये राजपुत्राणा शिक्षाया सुन्दरमुल्लेख कृतवान्। महर्षिर्वाल्मीकि: स्वयमपि तस्मिन् समये धनुर्विद्यायाः सङ्गीतस्य वेदाना च सर्वधुरीणो ऽध्यापक आसीत्। अस्य च महर्षेराश्रमश्चित्रकूटपर्वतस्य नातिदूर समतिष्ठत। रामायणस्य बालकाण्डे शिक्षाकेन्द्रत्वमस्याश्रमस्य सुतरा परिचयगोचरीभवति। अस्मिन्नाश्रमेऽनेके छात्रा विद्याभ्यास कुर्वन्ति स्म। सकलशास्त्रवेत्ता तत्रभवान् मुनिर्भरद्वाजोऽप्यत्रैव शिक्षा लेभे। वाल्मीकेराश्रमोऽय रघुकुलस्य प्राचीन विद्यापीठ बभूव। रघुकुलस्य पूर्वपुरुषेण श्रीमता सौदासेन सहास्याऽऽश्रमस्य घनिष्ठः सम्बन्धोऽभूत्। लवणविनाशार्थं प्रस्थितस्य शत्रुघ्नस्य स्वाश्रम प्राप्तस्यातिथ्यावसरे स्वयमाह मुनिर्वाल्मीकि —

> स्वीयाश्रममिद सोम्य राघवाणा कुलस्य वे ॥
> युष्माक पूर्वजो राजा सौदासस्तस्य भूपते।
> स बाल एव सोदासो मृगयामुपचक्रमे ॥ [ उत्तर० ६५। ६–१० ]

वाल्मीक्याश्रम एव लवः कुशश्च वेदमध्यैषाताम्, सगीत रामायण च, सहैव सैनिकशिक्षामपि गृहीतवन्तौ। एष आश्रमः स्त्रीशिक्षाया अपि केन्द्रमासीत्। यतो हि कुशलवाभ्या सहाऽऽत्रेयीति छात्राप्येकात्राश्रमे विद्यामपठत् ( उत्तररामचरितप्रामाण्यात् )।

## मन्त्रिणां शिक्षणम्

तत्रभवान् महर्षिवाल्मीकिर्नृपाणा कृते स्वकीयशिक्षासिद्धान्ताना पाठ्यविषयाणा च मार्मिकमुल्लेख स्वीये महाकाव्येऽकरोत्। धनुर्विद्या, हस्तिविद्या, रथविद्या, प्लवनम्, कूर्दनम्—इत्यादय शारीरिका सैनिकशिक्षासम्बन्धिनश्च मुख्यमुख्यविषया वाल्मीकिना स्पष्ट निर्दिष्टा राजन्ते। मानसिकशिक्षाया च वेदा, वेदाङ्गानि, नीतिशास्त्रम्, अर्थशास्त्रम्, वार्ता, दण्डनीति, काव्यम्, सङ्गीतम्, लेख्यम्, आलेख्य चेति विषया मुनिना राजपुत्राणा पाठ्यक्रमे निर्धारिता दृश्यन्ते।

बालकाण्डस्य सप्तमे सर्गे दशरथस्य राज्ञोऽमात्याना प्रगाढपाण्डित्यस्य सविस्तर विवेचन कृतमुपलभ्यते। अस्य भगवतो वाल्मीके सर्वतोमुखी प्रतिभामालोच्य शिक्षाया गुरुत्वस्य चास्य

मुनेरुत्कृष्टः परिचयो लभ्यते । विद्यालब्धस्यानुशासनस्य भगवतो दशरथस्यामात्येषु श्लाघ्यानि लक्षणान्यासन् । धृष्टिः, जयन्तः, विजयः, सुराष्ट्रः, राष्ट्रवर्धनः, अकोपः, धर्मपालः, सुमन्त्रश्चेत्यष्टाभिरमात्यैर्दशरथस्य राजसभा सतत नितरामशोभत । एभ्यो भिन्ना वामदेवो वशिष्ठः सुयज्ञो जाबालिः काश्यपो गौतमो मार्कण्डेयः कात्यायनश्चेत्यष्टौ महर्षयो दशरथस्य राजगुरवोऽभूवन् । विद्याऽऽगतविनयः, ह्रीमत्त्वम् (युक्तायुक्तभाषणाचरणसम्बन्धिज्ञानविशिष्टत्वम्), कुशलता, इन्द्रियसयम, शास्त्रज्ञत्वम्, दृढपराक्रमत्वम्, निखिलराजकर्मणि सचेष्टत्वम्, वचोऽनुरूपकार्यकारित्वम्, तेजस्विता, क्षमाशीलता, यशस्विता, स्मितपूर्वाभिभाषित्वम्, क्रोधात्कामाद्वा न कश्चिदप्यसत्यभाषित्वम्, शत्रुमित्रभेदज्ञानकुशलत्वम्, व्यवहारकौशल्यम्, पुत्रेऽपि दण्डविधायित्वम्, कोषस्य सवर्धने रक्षणे च नैपुण्यम्, देशकालवयःशक्त्यनुसारिदण्डविधाने विवेकित्वम्, राजशास्त्रे नितरां निष्णातत्वमित्यादयो विद्योपगतानुशासनगुणाः शिक्षागुणाश्च व्यद्योतन्त सन्ततममात्येष्वेतेषु । गुरूणां गुणानां ग्रहणमेषामादर्शोऽभूत् । सन्धिविग्रहादिरूपाया राजनीतेरासन् मर्मज्ञा एते । एभिः प्रशासिता प्रजा कदाप्युत्पथगामिन्यो नाभूवन् । परस्त्रीषु न कोऽपि दृष्टिपातमकरोत् । राष्ट्रे सुखं शान्तिश्च सतत व्यराजत । सर्वेऽप्येते मन्त्रिणो विशेषज्ञा नीतिशास्त्रेऽभूवन् । सर्वदा शुभ्र प्रभावपूर्णं च वेष दधते स्म [ बालकाण्डे, ७ । १–१९ ] । इमे चैवामात्या राजस्य स्वसत्परामर्शदानेन राज्यस्य सुव्यवस्थाया हेतुभूता आसन् । किञ्च, राजपुत्राणा शिक्षणं विनयन चाप्येषामेव कर्त्तव्यमभूत् प्राधान्येन, यद्यपीतरेऽपि गुरुजना आवश्यकशिक्षायै योग ददति स्म । तद्यथा—रामलक्ष्मणयोः शस्त्रपरिचयलाभ उक्तामात्येभ्योऽतिरिक्तं मुनेर्विश्वामित्रस्यापि समधिको भाग आसीदित्यनुपद वक्ष्यते ।

## श्रीरामचन्द्रस्य शिक्षा

बालकाण्डे रामचन्द्रस्य तदनुजाना च शिक्षायाः स्पष्टमुल्लेखो लभ्यते । चत्वारोऽपि भ्रातरस्ते वेदेषु निपुणाः क्षत्रियोचितसैन्यशिक्षाया च निष्णाता आसन् । सप्तदशे सर्गे रामलक्ष्मणादीना चतुर्णामपि भ्रातॄणामपेक्षणीयगुणान् वर्णयन्तः सुरगणाः परमेष्ठिन प्रार्थयन्ते—

मायाविदश्च शूराश्च वायुवेगसमाञ्जवे ।
नयज्ञान् बुद्धिसम्पन्नान् विष्णुतुल्यपराक्रमान् ॥
असहार्यानुपायज्ञान् दिव्यसंहननान्वितान् ।
सर्वास्त्रगुणसम्पन्नानमृतप्राशनानिव ॥ [ बाल० १७।३।४ ]

एतेन राज्ञां शिक्षणे राजनीतेः सैन्यशिक्षायाश्च प्राधान्यं वाल्मीकेरभिप्रेतमिति स्पष्टं प्रतीयते ।

श्रीरामो हस्तिविद्याया अश्वविद्यारथविद्ययोश्च पारङ्गतोऽभूत्। रामचन्द्रस्य शिक्षा निम्नाङ्कितरूपेण निरूपयन्नाह मुनिरसौ—

इष्टः सर्वस्य लोकस्य शशाङ्क इव निर्मलः।
गजस्कन्धेऽश्वपृष्ठे च रथचर्यासु संमतः॥ [बाल० १८।२७]

तत्रायुष्मान् रामभद्रो हितकरस्य चरित्रनिर्माणे सहायकस्यैव च सत्साहित्यस्याध्ययनं करोति स्म। वादे वैदुष्यं संभाषणे च वाग्मित्वमिति तस्य शिक्षाया महिमशाल्यङ्गमभूत्—

न श्रेयसि रतो यश्च न विरुद्धः कथारुचिः।
उत्तरोत्तरयुक्तीनां वक्ता वाचस्पतिर्यथा॥ [अयो० १।१७]

श्रीरामचन्द्रस्य त्रिविधा गुरवो बभूवुः—शीलवृद्धाः, ज्ञानवृद्धाः, वयोवृद्धाश्चेति। शीलवृद्धैर्गुरुभिः शीलस्य, सदाचारस्य शिक्षा दीयते स्म। ज्ञानवृद्धेभ्यश्चासौ वेदतदर्थज्ञानपुरस्सरं शास्त्रज्ञानं लभते स्म। तदित्थं श्रीरामचन्द्रः शस्त्रज्ञानं शास्त्रज्ञानं च सहैव ग्राह्यते स्म।

शीलवृद्धैर्ज्ञानवृद्धैर्वयोवृद्धैश्च सज्जनैः।
कथयन्नास्त वै नित्यमस्त्रयोग्यान्तरेष्वपि॥ [अयो० १।१२]

रामस्य चित्तं कदाचिदपि कस्मिंश्चिदशोभने विषये न प्रयाति स्म। न कामपि धर्मविरोधिनीं वार्तां कर्णेऽकरोत्। वादप्रसङ्गे बृहस्पतिरिव विभिन्नोपपत्तिभिः स्वं विषयं पुष्णाति स्म। श्रीरामः स्वस्थमनाः स्वस्थशरीरश्चासीत्। तस्य गुरुभिस्तस्मै देशकालानुसारिव्यवहारस्योत्तमा शिक्षा प्रादायि। किञ्च, मनोविज्ञानस्य तथाविधमुदात्तं ज्ञानं ग्राहितं यथा वाल्मीकिना स पुरुषसारज्ञ इति सम्बोधितः—

अरोगस्तरुणो वाग्मी वपुष्मान्देशकालवित्।
लोके पुरुषसारज्ञः साधुरेको विनिर्मितः॥

स हि रोगरहितस्तरुणो वाग्मी परिपुष्टदेहो देशकालज्ञः सर्वस्यान्तरङ्गभावानां वेत्ता महात्मा पुरुष आसीत्। रामो गुरुभिः सकलशास्त्रेषु निष्णातो व्यधायि। वेदवेदाङ्गैः समं समस्तसदनुष्ठानेषु तस्मै पूर्णशिक्षा प्रादीयत। इषूणामस्त्राणां चेत्युभयेषां विधिवज्ज्ञानमकारि। शिक्षकजनोपहितवैज्ञानिकशिक्षायाम्, रघुकुलस्य चादर्शपरम्परायाम्, वयोवृद्ध-ज्ञानवृद्ध-शीलवृद्ध सज्जनानां शुचौ संसर्गे पल्लविता श्रीरामचन्द्रस्य बुद्धिस्तथोच्चैर्विकासमासादितवती यथा शास्त्रेष्वस्त्रेषु च स महाराजदशरथादपि ज्यायान् संवृत्तः—

## वाल्मीकिरामायणे राज्ञां शिक्षा

सर्वविद्याव्रतस्नातो यथावत्साङ्गवेदवित् ।
इष्वस्त्रे च पितुः श्रेष्ठो बभूव भरताग्रजः ॥ [ अयो० १।२० ]

राजधर्मस्योत्कृष्टतम ज्ञान श्रीरामचन्द्रस्य कारितमभूत् । शास्त्रज्ञानेन सह लघूपकारस्यापि सन्ततस्मृतिस्तदाचरणस्य वैशिष्ट्यमभूत् । राज्ञा कृते नितरामुपयोगि पुरुषपरीक्षणमपि तेन प्राप्तमासीत् । पुरुषाणा स्वभावमन्तःकरणप्रवृत्तिं च ज्ञात्वा तद्गतपरस्परभेदज्ञानेऽपि तस्मै विलक्षणशिक्षणमदायि नाम । श्रीरामचन्द्रस्यार्थशास्त्रस्यापि सम्यग्ज्ञान ग्राहितमभूत् । सग्रह', अनुग्रह, अवसरे निग्रहश्चेत्येतेषामपि यथाविधि शिक्षा तस्मै प्रादायि । तत्रार्थस्य सचय' सग्रह., सगृहीतार्थद्वारा प्रजापालने दक्षत्वमनुग्रहः, देशकालानुसार वस्तूना व्यापारसचयनयोर्नियमन मूल्यावधारण च निग्रह इति । अस्यायमाशयः—यन्महर्षिवाल्मीकिप्रणीतराजपुत्रशिक्षाया राजनीत्या सममर्थशास्त्रस्यापि प्राधान्यमासीत् । कया रीत्याऽर्थसग्रह कार्य', सचितद्रव्येन कैस्कैरुपायैः प्रजा पालनीयाः, व्यापारस्य तथा सयमन यथा जीवनयात्रायै परमावश्यकवस्तूनां सजिघृक्षा प्रयोगश्च सतुलितौ तिष्ठेताम्—इत्याकारस्य प्रजापालनोपयोग्यर्थशास्त्रस्य परमोपयोगि ज्ञान राज्ञा शिक्षायाः प्रमुखविषयत्वेन महर्षिवाल्मीकिप्रतिनिर्दिष्टशिक्षाया प्रतिपादितमास्ते । राजकोषस्याभिवृद्धयै श्रीरामचन्द्रमभीष्टसमचितोपाया अत्रोपिपत । उपायानेतान् व्याचक्षाणेन वाल्मीकिरामायणस्य प्रसिद्धटीकाकारेण श्रीरामेण तिलकाभिधानाया स्वटीकाया स्पष्टमभिहितम्—"पुष्पेभ्यो मधुकर इव प्रजाभ्य. करेण धनग्रहणकर्मणि चतुर इत्यर्थः" इति, "राजा रामचन्द्र. पुष्पेभ्यो मधुकर इव प्रजाभ्यो धनग्रहणे चतुर आसीदित्यर्थं" इति च । न केवलमेतदेव, अपि तु सचितराजकोषस्य नियतो भाग. प्रजाना हिताय कथकार व्ययीकर्तव्य., इत्यस्यापि शिक्षा श्रीरामचन्द्राय प्रदत्ताऽभूत् । भगवता वाल्मीकिनाऽस्मिन् प्रसङ्गेऽभिहितम्—

सत्सग्रहानुग्रहणे स्थानविन्निग्रहस्य च ।
आयकर्मण्युपायज्ञः सदृष्टव्ययकर्मवित् ॥ [ अयो० १।२७ ]

शस्त्रशिक्षाया विस्तीर्णज्ञानेन सह साहित्यशास्त्रस्याप्युत्तमाशिक्षा रामचन्द्र ग्राहिताऽभूत् । न हि नाट्यशास्त्रस्य तत्त्वज्ञ आसीत् । धर्मार्थयो सामञ्जस्येन प्रजाना जीवन सुखयितु श्रीरामो दीक्षामगृह्णात् । तस्य शिक्षायाः परम ध्येयमिदमवर्तत यत् प्रजाना हितार्थं उपयोगिनि सार्वजनिकोन्नतिनिमित्तके कार्ये चेद् राजद्रव्य विनियोक्ष्यते सोऽयमर्थस्यादर्शरूपः सदुपयोगो नाम । कर्तव्यपालने रामचन्द्र सदा जागरूक सचेष्टश्चासीत् । प्रजार्थमर्जितधनस्य सद्व्ययाय यथा

चायव्ययक निर्णयमित्येदपि ज्ञान रामस्य कारितमासीद गुरुजनैः। अत्र प्रसङ्गे "व्ययकर्मवित्' इति पदे व्याचक्षाणष्टीकाकारो राम. कथयति—

कश्चिदायस्य चार्धेन चतुर्भागेन वा पुन ।
पादभागैस्त्रिभिर्वापि व्यय कार्यो नृपैरिह ।।

पठनपाठनातिरिक्तमनोविनोदनार्थं शिक्षापाठ्यक्रमे महर्षिणा रामस्य शिक्षाया वेहारिक-शिल्पाना महत्त्वशालि स्थान निहितम्। वेहारिकशिल्पेषु च चित्रकला, गीतम्, नाट्य चेति प्रमुख-मास्ते। महर्षिवाल्माकिः स्वयमप्युत्तम सगीतज्ञोऽभूत्। अत एव बालाना पाठ्यक्रमे सगीतस्य वैशिष्ट्य निर्धारित तेन। वर्तमानकालिके मनावेज्ञानिकशिक्षणेऽपि बाल्यकालिकशिक्षाया गानस्य सविशेष महत्त्वमङ्गीक्रियते। अत्रतन्यो 'मान्तेसरी' इत्याद्या. शिक्षाप्रणाल्यो बालाना शिक्षणे गानस्य विशेषेण प्राधान्य स्वीकुर्वन्ति।

सगीतादतिरिक्त च हस्तिसचालनमश्वारोहण युद्धविज्ञानमित्येतदीयापि शिक्षा श्रीराम चन्द्रेण प्राप्ता। अश्व हस्तिन च विभिन्नासु स्थितिषु कया रीत्या वशीकुर्वन्तीत्यत्र विषये रामा मर्मज्ञ आसीत्। युद्धविज्ञाने प्रहारप्रणालीमपि स सुतरामवेदीदाक्रमणकालिकीम्। सैन्यसघटन-नियमेष्वपि निष्णातोऽभूत्। चक्रव्यूहादिरूपे सेनासस्थाने तत्सचालने चाप्यसौ निष्णातत्वमधात्। भगवता वाल्मीकिना श्रीरामचन्द्रस्य मनोविनोदोपायानामश्वारोहणधनुर्विद्यायुद्धविज्ञानाना सुन्दर परिचयो निम्नश्लोक प्रदत्तः—

वेहारिकाणा शिल्पाना विज्ञातार्थविभागवित्।
आरोहे विनये चैव युक्तो वारणवाजिनाम् ।।
धनुर्वेदविदा श्रेष्ठो लोकेऽतिरथसमत ।
अभियाता प्रहर्ता च सेनानयविशारदः ।। [ अयो० १।२८ ]

श्रीरामचन्द्रस्य शस्त्रशिक्षाया महर्षेर्विश्वामित्रस्यापि समधिको भाग आसीत। मारीचस्य सुबाहोश्चान्येषामपि च राक्षसाना वधाय रामलक्ष्मणो समानयता महर्षिणा विश्वामित्रेण सर्वत प्राक् बला चातिबला चेति नाम द्वे विद्ये ग्राहिते। विद्ययोरनयोर्लाभान् वर्णयन्नाह वाल्मीकिर्यद-तद्वेदिन पुसो नाम न जायते श्रम , श्रमजन्याज्ज्वरादसौ मुक्तो भवति, राक्षसास्तदपमानाय न क्षमन्ते , अपूर्वबलवीर्यलाभश्च तस्य सजायते , अनुपम ज्ञान बुद्धिश्च प्राप्यते, तथा च वादे स सर्वदाप्यजेयस्तिष्ठति। मुनिरसौ विश्वामित्रो रामचन्द्रस्य सेद्धान्तिको व्यावहारिकश्च गुरुरासीत्। श्रीरामचन्द्राय स शस्त्रास्त्राणामुपयोगस्य राजोचितव्यवहारस्य चोत्तमा शिक्षा प्रादात्। अनेन

सहवासेन, एतदीयास्त्रविद्यया, अस्य च पावनतमेन व्यक्तित्वेन श्रीरामचन्द्रस्य चरित्रं नितरां प्रभावितमभूत् । यत्रावसरे मुनिर्विश्वामित्रो रामलक्ष्मणाभ्यां सन्ध्यावन्दनाद्यादेशं प्रयच्छति, उभौ भ्रातरौ प्रसन्नमनस्कौ गुरुमभिवादयेते, स्वकर्मणि प्रवर्तेते च । न चैतावन्मात्रम्, अपि तु मुनिर्विश्वामित्रो रामायेतिहासभूगोलयोरप्युत्तमं ज्ञानमकारयत् । यात्रायामवलोकितानां प्रदेशानामैतिहासिकं भौगोलिकं च महत्त्वं बोधयितुं येयमुत्तमा मनोवैज्ञानिकी प्रणाली प्रत्यपादि शिक्षाशास्त्रिभिराधुनिकैः, तस्याः प्रतिपादनमितो वर्षसहस्रद्वयात्प्रागेव मुनिर्वाल्मीकिः कृतवान् । महर्षिर्विश्वामित्रो रामलक्ष्मणाभ्यां गङ्गासरय्वोस्तटेऽवस्थितायाः अनङ्गस्य तपोभूमेः शिवाश्रमस्य, विष्णोश्च सिद्धाश्रमस्य, शोणदेशस्यान्येषां च प्रदेशानां सम्बन्धिनो भूगोलस्य सुन्दरं व्यावहारिकं परिचयमकारयत् । सममेव चैतत्स्थानसम्बद्धं ताटकावृत्तम्, शिवाश्रमसम्बद्धमनङ्गवृत्तान्तम्, मारीचकथाम्, अगस्त्यवृत्तान्तम्, विष्णुसिद्धाश्रमसम्बन्धिनीं राज्ञो वैरोचनेः कथाम्, शोणतटसम्बद्धान् राज्ञस्तद्वंशावलीश्च, राज्ञः सगरस्य कथाम्, दितेरदितेश्च कथाम्, समुद्रमन्थनकथाम्, इक्ष्वाकुवंशानुक्रमकथाम्, गौतमकथाम्, शतानन्दकृतविश्वामित्रकथाम्, वशिष्ठाश्रमदर्शनकथाम्, त्रिशङ्कुकथाम्, अम्बरीषयज्ञकथां चैवमादीननेकानितिहासानबोधयत् । इतिहासस्याध्यापने पर्यटनद्वारा बालानां सुखबोधाय प्रणाली नूतना प्रतिपादितास्त्याधुनिकशिक्षाशास्त्रिभिरपि । वाल्मीकिना रामायणस्य बालकाण्डे चतुर्विंशसर्गादारभ्य पट्षष्टितमसर्गान्तं रामाय विश्वामित्रेण प्रदत्तायाः प्रशिक्षाया मनोवैज्ञानिक्या यथा निर्देशः कृतः, स खलु नितरामाकर्षको वर्तते । इमे सर्गाः सुन्दरतमैर्भौगोलिकैरैतिहासिकैश्च वृत्तान्तैः परिपूर्णा राजन्ते । एभिर्विश्वामित्रेण रामस्य कुतूहलवृत्तिरुद्बोधिता । कुतूहलवशेन रामो यथा यथा प्रश्नानकरोत्तथा तथा तदुत्तररूपेणेतिहासभूगोलयोर्ज्ञानं प्रश्नोत्तरप्रणाल्या कारितम् । भौगोलिकवर्णनेषु सरय्वा गङ्गायाश्चोत्पत्तेरध्यापनमतिरोचकरीत्या निर्दिष्टम् । भूगोलेतिहासयोः सन्निहितसम्बन्धद्वारा शिक्षाया आदर्शात्मकमनोवैज्ञानिकशिक्षणविधेः स्वरूपं यदि द्रष्टव्यं भवेत् तदुपर्युक्तवृत्तान्तजातमध्ययनविषयीक्रियताम् । अत्र हि गुरुशिष्यसम्बन्धीतिहासभूगोलाभ्यां प्रभृति रामाचितनिखिलेतिहासभूगोलात्मकं सुन्दरं वृत्तं लिखितमास्ते । अवान्तरकथाभिरध्यापनविधौ रोचकतासम्पादनरूपाया आदर्शप्रणाल्या अप्युत्तमोदाहरणानि नन्वासाद्यन्ते ।

विश्वामित्रप्रदत्ताया रामाभिप्रायिकशिक्षाया मर्मास्ति तस्या व्यावहारिकं मनोवैज्ञानिकं महत्त्वमनुशासनस्य च वैशिष्ट्यम् । उपर्युक्तानामैतिहासिकीनां भौगोलिकीनां च पृच्छानां समाधानेन श्रीरामस्य सैनिकशिक्षाप्यनायासेन स्वयमाबध्यते । ताटकावधात् पूर्वं ताटकाया वंशस्य निवासादीनां सर्वं चारु चित्रं चित्रितं नाम । ताटकावधात् प्राक् श्रीरामं विश्वामित्रो मुनिरुपदिशति—प्रजानां

हिताय स्त्रीवधे भवता न जुगुप्सितव्यमिति । रामस्य ताटकायाश्च प्रवृत्ते युद्धक्रमे विश्वामित्रो रामेण सहोपस्थितस्त शस्त्रसञ्चालनकर्मणि प्रोत्साहयति । यदा च ताटका किञ्चिच्छिथिलीभवति तदा स्वहुङ्कारेण तामुत्तेजयन् सूर्यास्तमनात् पूर्वमेव तद्वधार्थं रामाय समतिं प्रयच्छति । अन्ते च विश्वामित्रसमक्षमेव रामस्तस्या मायाविन्याः शब्दवेधिना बाणेन वधं करोति ।

एवमेव च मारीचवधात् पूर्वमपि मारीचस्य वंशपरम्परामनुश्रोवर्यस्तद्वधोपयोगितामुद्भाव्य महर्षिविश्वामित्रः स्व शिष्य श्रीराममुद्दिश्य राक्षसाय प्रयुक्तायाः स्वसैन्यशिक्षाया प्रशस्या प्रस्तावना करोति । अस्मात् प्रागेव च श्रीविश्वामित्रस्ताटकावधात् परमनेकदुर्लभशस्त्रैः श्रीराम सुसज्जीकृत्य तेषामुपयोगस्य विधिवच्छिक्षा तस्मै प्रदत्तवानासीत् । दण्डचक्रम्, धर्मचक्रम्, कालचक्रम्, विष्णुचक्रम्, इन्द्रचक्रम्, वज्रम्, ब्रह्मास्त्रम्, गदा, धर्मपाश, कालपाशः, वरुणपाशः, पिनाकास्त्रम्, दयिताभिधान शिखराभिधान चाग्नेयास्त्रम्, शुष्कमार्द्रं चाशनीत्याख्यमस्त्रम्, वायव्यास्त्रम्, हयशिरोऽस्त्रम्, क्रौञ्चास्त्र द्विविध शक्त्याख्यमस्त्रम्, कङ्कालमुसलघोरकपालकिङ्किणीवैद्याधरमहास्त्राणि दयितमोहनाभिधानानि गन्धर्वास्त्राणि, शत्रुशमनकारीणि प्रस्वापनप्रशमनास्त्राणि, सन्तापशमनानि वर्षणास्त्राणि शोषणास्त्राणि च, शत्रुतेजःप्रशमन सौरास्त्रम्, शिशिराख्य सोमास्त्रम्, दयिताख्य मोहनाभिधं च पैशाचास्त्रमित्येतानि निखिलान्यस्त्राणि विश्वामित्रो रामाय प्रत्यर्पितवान्, शिक्षा च प्रकृष्टा तदुपयोगाय प्रदत्तवान् ।

मुनिर्विश्वामित्रोऽस्त्रविद्याया निष्णातो विद्वानासीत् । तदीयप्रकाण्डपाण्डित्यस्य परिचयाऽस्माभिस्तस्माद्वालभ्यते, यमसौ भगवन्त शिव याचते—

यदि तुष्टो महादेव धनुर्वेदो ममानघ ।
साङ्गोपाङ्गोपनिषदः सरहस्य' प्रदीयताम् ॥
यानि देवेषु चास्त्राणि दानवेषु महर्षिषु ।
गन्धर्वयक्षरक्षःसु प्रतिभान्तु ममानघ ॥ [ बाल० ५५।१६-१७ ]

अनेनैतत् प्रत्यक्षीभवति यन्महर्षेर्वाल्मीके शिक्षाव्यवस्थाया वेदवेदाङ्गानामुपनिषदा च शिक्षया सह शस्त्रास्त्राणा शिक्षाया उत्तम विधानमासीत् । मुनिर्विश्वामित्रः सर्वेषामेवास्त्राणा सञ्चालने पूर्णतया योग्य आसीत् । रामचन्द्रेण चैषा शिक्षा तस्मादेव समधिगतेति ।

## लक्ष्मणस्य शिक्षा

लक्ष्मणमपि सकलाना शास्त्राणा शिक्षा पूर्ण ग्राहिताऽभूत् । विश्वामित्रादुपलब्धाया शिक्षाया लक्ष्मणोऽपि रामेण सममेव ता प्राप्नोत् । नीतिशास्त्रे सैनिकशास्त्रे चासौ पारङ्गतोऽभूत् । महर्षि-

## वाल्मीकिरामायणे राज्ञां शिक्षा

वाल्मीकिरमुं "सर्वशास्त्रविशारदः" इति व्यशेषयत्। बाणविद्यायां चास्य नन्वेकस्मिन् शरसन्धाने पञ्चशतशरविमोक्षात्मकं नैपुण्यमासीत्—"विससर्जैकवेगेन पञ्चबाणशतानि य। इष्वस्त्रेष्वधिकस्तस्मात्कार्तवीर्यश्च लक्ष्मणः॥"[युद्ध० ४९।२०] इति। शरतल्पगतं लक्ष्मणं मूर्च्छावस्थमन्वीक्षमाणो रामस्तस्य वीर्यं प्रशंसन्नत्र कथयति—वेगेनैकेनैव लक्ष्मणोऽसौ पञ्चशतं बाणानां मोक्तुमलमभूत्। द्विबाहुरप्यसौ विक्रमेण सहस्रबाहुं कार्तवीर्यमत्यशेत। युद्धकाण्डे लक्ष्मणस्याद्भुतबाणविद्याया उत्तमः परिचयो लभ्यते।

### भरतस्य शिक्षा

भरतोऽस्त्रशास्त्रस्य दण्डनीतेश्चाभूद्विशेषज्ञः। रामचन्द्रं पुनरयोध्यां प्रत्यानेतुकामं भरतं वितथाभिलाषमुदासीनं चावलोकयत। श्रीरामचन्द्रस्योक्तिर्भरतस्य शिक्षां विशेषेण प्रकाशयति। अनया हि भरतसम्बन्धिनो व्यवहारस्य, शिक्षायाः, राजनीतेः, पाण्डित्यस्य चाद्भुतः परिचयः प्राप्यते। श्रीरामो ब्रवीति—

दशपञ्चचतुर्वर्गान्सप्तवर्गं च तत्त्वतः।
अष्टवर्गं त्रिवर्गं च विद्यास्तिस्रश्च राघव॥
इन्द्रियाणां जयं बुद्ध्या षाड्गुण्यं दैवमानसम्।
कृत्यं विंशतिवर्गं च तथा प्रकृतिमण्डलम्॥
यात्रां दण्डविधानं च द्वियोनी संधिविग्रहौ।
कच्चिदेतान्महाप्राज्ञ यथावदनुमन्यसे॥

[ अयो० १०० । ६८–७० ]

एतानि पद्यानि विरचयन् महर्षिवाल्मीकी राजपुत्राणां स्वकल्पितशिक्षाव्यवस्थायां राजोचितराजनीति-दण्डनीति-समाजशास्त्राणामर्थशास्त्रस्य च शिक्षया सह वेदाध्ययनस्यापि समावेशं करोतीत्यनायासमवबुध्यते। भरतस्य नैपुण्यं पूर्णं परिचेतुमुपरितनश्लोकेषु निर्दिष्टानां दशवर्गादिशब्दानामभ्यन्तरे निहितस्य ज्ञानमयस्याकरस्यार्थः सुतरां हृदि कर्तव्यः। दशवर्गमुपवर्णयन् रामायणटीकाकारः श्रीरामो निम्नाङ्कितं मनूपदिष्टमुद्धृतवान्—

मृगयाक्षौ दिवास्वापः परिवादः स्त्रियो मदः।
तौर्यत्रिकं वृथाट्या च कामजो दशको गणः॥

तत्रभवान् भरतः कामजन्यमृगयायाः, अक्षव्यापारात्, दिवास्वापात्, परापवादात्, निष्फ-

ल्वादविवादाभिषङ्गात् , स्त्रीससर्ग मद्यपान गीत-नृत्य-सगीत( तौर्यत्रिक )वृथाभ्रमणादिभ्यो विरत सत्य सचेष्टस्तिष्ठति स्म। अस्य गुरुजनैरयमुक्तेभ्यो व्यसनेभ्यो विरन्तुमादिष्टोऽभूत्। एष च दुर्गनिर्मितेः पञ्चसु प्रकारेषु पूर्णोऽभ्यस्त आसीत्। दुर्गनिर्माणस्य पञ्च प्रकारान् निर्दिशन् टीकाकार' श्रीरामो निम्नाङ्कितं श्लोकमुद्धृतवान्—

औदक पार्वत वार्क्षमैरिण धान्वन तथा।

औदकम्, पार्वतम्, वार्क्षम्, ऐरिणम्, धान्वन चेति पञ्च प्रकारा दुर्गस्य। परितोऽगाध-जलेन परिवेष्टित दुर्गमौदक नाम। पर्वतश्रेणीना मध्ये ।नतरा दुरारोहे दुर्गं पार्वतमिति। परितो योजनपरिमाणविस्तीर्णै सुमहद्भिर्वृक्षैः कण्टकाकीर्णाभिर्गुल्मलताभिश्च सवेष्टित दुर्गं वार्क्षमित्युच्यते। सर्वासु दिक्षु शून्यै. प्रदेशैर्व्याप्त यद् दुर्गं तदैरिणमिति व्याहरन्ति। यच्च दुर्गं पञ्चयोजनान्त यावन्मरु-स्थलेन वेष्टित भवति तद् धान्वन दुर्गमाचक्षते। एतच्चोष्णकालिक दुर्गमभिमत दुर्गविदाम्। भरतश्च पञ्चविधान्यपीमानि दुर्गाणि निर्मातुमवेदीत्। सामाद्युपायचतुष्टयस्याप्यसौ मर्मज्ञ आसीत्। सप्तवर्गस्याप्ययमभिज्ञो व्यधायि—

स्वाम्यमात्यश्च राष्ट्र च दुर्गकोषौ बलं सुहृत्।<br>परस्परोपकारीद राज्य सप्ताङ्गमुच्यते॥

टीकाकृद्राम. सप्तवर्ग विवृण्वानः कथयति—राजा, मन्त्री, राष्ट्रम्, दुर्गम्, कोशः, बलम् (सैन्यम्), सुहृदश्चेति राज्यस्य सप्ताङ्गानि सप्तवर्गोऽभिधीयते। भरत. सप्तानामप्यङ्गाना मर्मज्ञोऽभूत्। किञ्च,अष्टवर्गस्यापि भरत. पण्डितोऽभवत्। तीर्थकोषे,कृषिकर्म,वाणिज्यम्,दुर्गम्,सेतुः,कुञ्जरबन्धनम्, खन्याकरः, करादानम्, शून्यनिवेषणमित्येष कथितोऽष्टवर्ग। धर्म, अर्थः, कामश्चेति त्रिवर्ग। भरत-स्त्रयाणामेषामपि मर्मविदासीत्। वार्ताम् ( अर्थशास्त्रम्, दण्डनीतिम्, त्रयीविद्याम् ऋग्यजु'साम-रूपाम् ) अपि भरत' पूर्णतयाऽजानात्। उपरि भरतस्य षड्गुणचर्चाप्यक्रियत। सन्धि , विग्रह , यानम्, आसनम्, सश्रय., द्वैधीभावश्चेति षड्गुणाः। तत्र शत्रुणा सह सन्धानरूप सन्धिम्, युद्धापर-पर्याय विग्रहम्, सेनयाऽभिक्रमणात्मक यानम्, शत्रोरुपेक्षारूपमासनम्, आवश्यकतानुरूप सेनाया द्विधा विभक्तिरूपं द्वैधीभावम्, शत्रुणा पीडितस्य प्रबलराजाश्रयग्रहणात्मक सश्रय चेति षड्गुणान् भरतः सुतरा पर्यचिनोत्।

उपरि निर्दिष्टया विवृत्या प्रत्यक्षीभवति यद्राष्ट्रनिर्माणप्रजोन्नयनयोजनाना राजोचिताभि. शिक्षाभिः साक मनोविकासार्थं वेदादिस्वाध्यायपारम्पर्यमपि भरतस्य शिक्षाया निहितमास्ते।

## वाल्मीकिरामायणे राज्ञां शिक्षा

### हनूमत. शिक्षा

सुग्रीवस्य परममित्रस्य प्रधानामात्यस्य श्रीहनूमतोऽपि शस्त्रशास्त्रविषयक ज्ञानमाश्चर्यजनक-मासीत्। तस्य वेदव्याकरणज्ञान वक्तृताशक्ति च प्रशसता श्रीरामचन्द्रेण लक्ष्मणाऽभ्यधायि। तद्यथा—

नानृग्वेदविनीतस्य नायजुर्वेदधारिण ।
नासामवेदविदुष शक्यमेव विभाषितुम् ॥
नून व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् ।
बहु व्याहरतानेन न किञ्चिदपशब्दितम् ॥

[ किष्कि० ३।२८-२९ ]

सुन्दरकाण्डे च रावणात्मजेनाक्षयकुमारेण सहास्य युद्ध नूनमद्भुतशास्त्रज्ञत्व युद्धविद्यावैचक्षण्य चास्य परिचाययति। युद्धकाण्डेऽपि रामलक्ष्मणयो. सन्निधि प्राप्ते विभीषणे मारुति. सकलशास्त्र-ज्ञानजन्यसस्कारसम्पन्न इति वर्ण्यते। उत्तरकाण्डस्य षट्त्रिंशे सर्गे मुनिरगस्त्य श्रीमन्त हनूमन्त वर्णयन् रामं ब्रूते—

पराक्रमोत्साहमतिप्रतापसौशील्यमाधुर्यनयानयैश्च ।
गाम्भीर्यचातुर्यसुवीर्यधैर्यैर्हनूमन. कोऽप्यधिकोऽस्ति लोके ॥
असौ पुनर्व्याकरणं ग्रहीष्यन् सूर्योन्मुख पृष्ठगम कपीन्द्र ।
उद्यद्गिरेरस्तगिरि जगाम ग्रन्थ महद्धारयनप्रमेय ॥
न सूत्रवृत्त्यर्थपद महार्थ ससग्रह सिद्धयति वै कपीन्द्र ।
न ह्यस्य कश्चित्सदृशोऽस्ति शास्त्रे वैशारदे छन्दगतौ तथैव ॥
सर्वासु विद्यासु तपोविधाने प्रस्पर्धतेऽय हि गुरु सुराणाम् ।
प्रवीविविक्षोरिव सागरस्य लोकान् दिधक्षोरिव पावकस्य ॥

[ उत्तर० ३६।४४-४७ ]

हे राम! पराक्रमोत्साहबुद्धिप्रतापशालीनतामाधुर्ययुक्त, न्यायान्याययोर्ज्ञाता, गाम्भीर्ये चातुर्ये बले धैर्ये च सभृतसार, श्रीहनूमता तुल्य ससारे को नामापरः पुरुषो भवेत्। व्याकरणशास्त्रमधीयानो-ऽसौ भगवता भास्वता सममुदयाचलादस्ताचलान्त भ्रमणपरोऽभवत्। व्याकरणशास्त्रे सूत्रार्थ-वृत्तिभाष्याणा पूर्णज्ञोऽयसौ व्याडिकृत सग्रहाख्य ग्रन्थान्तरमपि पर्याप्तमध्यैष्ट। पूर्वोत्तरमीमासा-द्वारा वेदार्थनिर्णयेऽप्येष निपुणः। समस्तासु विद्यासु तपःसु च सुरगुरुणा बृहस्पतिना सार्धमसौ प्रस्पर्धते।

## युवराजोऽङ्गद

किष्किन्धाया राजपुत्रोऽङ्गदोऽपि नीतिशास्त्रस्य पूर्णो विद्वानासीत् । बालिवधस्य पश्चात् सातिशय क्षुब्धोभूत्वाऽङ्गदः स्वनीतिबलेन वानरेषु विभेदमुत्पाद्य सुग्रीवविरुद्धग्रहयुद्धरचनाया तत्परो बभूव । अत्र वाल्मीकिना पाण्डित्य नीतिशास्त्रविशारदत्व चाङ्गदस्योल्लिखितम् । श्रीहनूमान् सुतरामिद जानाति स्म यदङ्गदो बुद्धिमानस्तीति । शुश्रूषणम् , श्रवणम् , ग्रहणम् , धारणम् , ऊहापोहः, अर्थविज्ञानम् , तत्त्वज्ञानम्, बुद्धिवैभवमित्येवमादिभिर्गुणैः सम्पन्नः, सामदानदण्डभेदनिग्रहादिचतुर्बलैरुपेतोऽपि च । किञ्च देशकालज्ञता, दृढता, सर्वक्लेशसहिष्णुता, सर्वविज्ञानता, दक्षता, तेजस्विता, सवृतमन्त्रता, अविसवादिता ( विवादेष्वपराजितत्वम् ), भक्तिज्ञता, कृतज्ञता, शरणागतवत्सलता, द्वेषहीनता, चापल्यशून्यतेत्यादिभिश्चतुर्दशभिर्गुणैरस्य चरित नितरा विद्योतते । सर्वशास्त्रविशारदश्चायम् । महर्षिवाल्मीकेरेभिर्वचोभिरिद स्पष्ट प्रतिभाति यदङ्गदो युवराजो राजनीतेर्युद्धविद्यायास्तथा च शास्त्राणामुत्तमा शिक्षामग्रहीदिति ।

## रावणस्य तत्पुत्राणा च शिक्षा

रामायणे रावणस्य ब्रह्मचर्याश्रमकालिक्या वैदिकशिक्षायाश्चर्चाप्यक्रियत । रावणो वेदाना तदङ्गाना च पूर्णो विद्वानासीत् । तस्य सर्वेऽपि पुत्रा शस्त्रास्त्रसचालने कुशला बभूवुः । रावणस्य युद्धकौशल प्रथितमास्ते । तस्य सूनुरिन्द्रजिदभिधानोऽद्वितीयो योद्धाऽऽसीत् । युद्धकाण्डे लक्ष्मणेन सम तस्य युद्ध रोमाञ्चकारि वर्तते । स खलु मेघनादो बहुविधाना शस्त्रास्त्राणामुद्भट सचालकोऽभूत् । युगपत् सहस्रशो बाणाना प्रहारमकरोत् । शूलशक्तिपट्टिशादिविश्रुतानामिषूणा सचालने स पूर्ण पण्डितोऽभूत् । सर्पा इव भयङ्करा तस्येषवो लक्ष्मणमाजघ्नु । ध्वजकवचरथसारथिषु सर्वेष्वपि साधनेषु क्षीणेष्वसावेकाकी स्वबाणविद्याचातुर्यस्य परिचय ददानश्चिरमयुध्यत । लक्ष्मणप्रहितस्य वरुणास्त्रस्य शक्ति स्वकीयेन रुद्रास्त्रेणाथ क्षणेन वितथीचकार । स पुनराग्नेयास्त्रस्य शत्रुनिबर्हणस्य चासुरास्त्रस्यापि निपुण. प्रयोगज्ञोऽभूत् । अन्तेऽसौ लक्ष्मणात् पराजितो भूत्वा वीरगति लेभे ।

सुन्दरकाण्डे रावणात्मजस्याक्षकुमारस्याप्यद्भुतो मनोहारी परिचय प्राप्यते । श्रीहनूमता कृतस्य पञ्चानामपि सेनापतीना वधस्य वृत्तान्तेन क्रुद्धो लङ्केशः स्व पुत्रमक्षयकुमार हनूमता सह योद्धुमादिशत । अक्षयकुमारेण बाणविमोक्षणेऽद्भुता शिक्षा प्राप्ताऽऽसीत् । तस्य रथो दुर्गममार्गैराकाशमार्गेण च गन्तुमशक्नत् । तूणीरैः खड्गैः शक्तिभिस्तोमरैरित्येवमादिभिरन्यैस्च शस्त्रास्त्रैः स सर्वदा पूर्णोऽतिष्ठत् । इममेवविध रथमारुह्य हस्त्यश्वरथसङ्कुलया सुमहत्या चम्वा परिवृतोऽय

मर्वत' पूर्वं तोरणशिखराद्धनूमन्त प्रेक्षत। त्रिभिश्च निशितैः शरैर्युद्धाय हनूमन्तमामन्त्रयामास। द्वयोर्मध्ये महाप्रलयकृदायोधनमारेभे। तस्य शराभिघातैर्हनूमत शिरो विद्धमभूत्। स च पवनात्मजस्तदुद्भूतेनासृजा सुतरां पर्युक्षितोऽजनि, तदक्ष्णो. पुरतश्च तिमिरमाविरभूत्। ततश्च विशाल रूप धृतवति पवनसूनौ वीरोऽय मेघवृष्टिमिव बाणवृष्टिमसृजत। अथाकाश प्रत्युड्डीने हनूमति वीरपुङ्गवः सोऽपि रथेन सममाकाश प्रत्युड्डीय तमनुवव्राज। तस्य बाणवर्षाभिः समस्तमाकाशमण्डलमाच्छादितमभूत्। अन्ते च बालोऽयमौ रणपरिपक्वो रणपण्डितो हनूमता सह युध्यमानो वीरगति प्राप।

युद्धकाण्डे रावणपुत्रस्यातिकायस्यापि शौर्य प्रशंसनीय वर्तते। इन्द्रधनुर्षीव स्वर्णमयूखोद्भासिते सारथीचतुष्टयसञ्चालिते रथे विराजमान. कुमारोऽतिकायो वानरसेनायामाविर्बभूव। तस्य रथेऽष्टात्रिंशत्तूणीरास्तावन्त्येव च धनूंषि, अनेकाश्च स्वर्णवर्णा ज्याः सन्निहिता आसन्। उभयतश्च तद्रथ दशहस्तप्रमाणे चतुर्हस्तद्वयांशेन त्सरुणा युक्ते द्वे खड्गलते विद्योतमाने व्यालम्बेते स्म। श्रीरामचन्द्रेणास्य परिचय पृष्टो विभीषणो ब्रूते—महाराज! पितृतुल्यपराक्रमो वृद्धोपसेवी शास्त्रधारिधौरेयोऽतिकायो नाम वीराग्रणी पुत्रोऽय धनदानुजस्य दशग्रीवस्य। एष वीरो रथहस्त्यश्वारोहणकर्मणि निपुण., धनुषि खड्गे शूले च समधिगतकौशल, साम्नि दाने भेदे मन्त्रणायां च पटुतम'। एतद्भुजबलरक्षिता लङ्कावासिन सुखमशङ्क शेरते। वरुणपाशस्य वैतथ्यापादिनीं विद्याममावधिगतवान्।

लक्ष्मणमपि युद्धे बालिशमुद्घोषयन्नसा कथयति—रे लक्ष्मण! मया सम युद्धाभिलाष विमुच्य ननु पलायस्व त्वम्। मम बाणानां वेग पृथिवी चाकाश च हिमालयश्चापि न सोढु प्रभवति, का कथा पुनस्ते। लक्ष्मणेन सह युद्धे वीरोऽतिकायः स्वस्यानुपमबाणविद्याया अत्यद्भुत प्रदर्शनमकार्षीत्। लक्ष्मणस्याग्नेयास्त्र स्वेन सौरास्त्रेण विधिवद्वितथीचकार। अन्ते चाय योद्धा याम्यास्त्रमैषिकास्त्र च प्रायुङ्क्त। अनयोर्विफलयो सतोर्लक्ष्मणेन निष्फलैर्बाणसहस्रैराक्रान्तोऽयं वीरवर. स्वैरिपुभिरेकदा लक्ष्मणमपि मूर्च्छामनयत्। अन्ततो गत्वा लक्ष्मणप्रयुक्तब्रह्मास्त्र-शक्ति-शूल गदा-कुठारादीन्यस्त्राणि खण्डयितुमाहितप्रयत्नोऽपि निराशो भूत्वा रणमुखे पञ्चत्वमयासीत्।

रावणस्य पुत्रा विशेषेण राजनीतौ युद्धविद्यायां च प्रशिक्षिता आसन्। पितुरिव तेषां वेदवेदाङ्गेषु नैपुण्य नैवलु दृष्टिगोचरीभवति।

## कुशलवयोः प्रशिक्षा

रामायणे विहितायां गभीरशिक्षाव्यवस्थायाश्चर्चा नूनं कुशलवयोः सुमनोमनोहारिशिक्षोल्लेखं विना न परिपूर्णा मन्यते । वस्तुतो रामायणसदृशीं विभिन्नकाण्डेषु विभक्तां पञ्चत्रिंशदुत्तरषट्शत-सर्गात्मिकां चतुर्विंशतिसाहस्रीं विशालां कविनिर्मितिं कण्ठस्थीकृत्य तद्गानं शिक्षकस्याद्भुतं कौशलमभिव्यनक्ति । आधुनिकमनोविज्ञानद्वारा प्रतिपादितशिक्षाशास्त्रस्य मौखिकविधिना (Oral Method) सम्पाद्यमानस्य प्रशिक्षणस्य नन्वस्मादुत्कृष्टमुदाहरणं ससारस्य साहित्यान्तरेषु लब्धुमसुकरमेव स्यात् । कुशलवयोः शिक्षया महर्षेर्वाल्मीकेः पारङ्गतशिक्षाशास्त्रित्वं स्पष्टं परिचय-विषयीभवति ।

शिक्षारम्भात् पूर्वं वाल्मीकिना तयोर्बालयोः शारीरं मनोवैज्ञानिकं च परीक्षणं कृतम्, कस्य शास्त्रस्य विशेषज्ञौ भवितुमहर्तस्ताविति । क्षत्रकुलोत्पन्नत्वाद्युद्धविद्यायां धनुर्वेदे विविधेषु शस्त्रास्त्रेषु च तयोः प्रवृत्तिस्तु वंशपरम्पराऽऽगतसंस्कारानुगुणमभूदेव । परं महर्षिणा दृष्टं यदेतौ बालकौ स्वरसम्पन्नौ स्तः, तेनेमौ संगीतशास्त्रस्य मर्मज्ञौ विधातुं शक्यौ । गानस्य दिशि तयोः प्रसुप्तसंस्कारा-नुमित्या महर्षिणा संगीतशिक्षादानं तदर्थं स्थिरीकृतम् । लवे कुशे चापि संगीतप्रवृत्तिमभिलक्ष्य महर्षिर्नितरां मुदितो बभूव । कालादसौ चिन्तापरोऽतिष्ठत्–कथं मे रचनायाः प्रचारो भवेदिति । कुशलवावेतौ मेधाविनौ कुशाग्रबुद्धी संगीतशिक्षासत्पात्रभूतावन्तेवासिनौ लब्ध्वा परमसंतोषो मुनेः स्वाभाविक एवासीत् । मुनिना पुनरेतदपि पर्यैक्षि यदिमौ बालकौ तौर्यत्रिकेण सह वेदाध्ययनेऽपि कुशलौ । अत एव वेदानां संगीतस्य च शिक्षया सहैव शस्त्रास्त्रशिक्षाया अभ्यारम्भः कुशलवाभ्यां स्ववंशपरम्परानुरूपं रघुकुलगुरुकुले महर्षिवाल्मीकेराश्रमे कृतः ।

कुशलवाभ्यां संगीतशास्त्रस्योत्तमा कलात्मिका शिक्षा प्राप्यत । द्रुतानां विलम्बितानां च प्रमाणानां सुन्दरोऽभ्यासस्तयोः कारितः, षड्जमध्यमादिस्वराणां शिक्षा प्रादायि, शृङ्गार करुण हास्य-रौद्र वीर-भयानकादिरसानुभूतीनां प्रदर्शने तौ नैपुण्यं च लम्भितौ । संगीतशास्त्रस्य तत्त्वज्ञौ कुशलवौ स्थानमूर्च्छनामर्मज्ञावास्ताम् । संगीतशास्त्रे यदा चैतौ बालौ निपुणौ संवृत्तौ, यदा तयोरभ्यासः परिपाकमगात् । यदा च रामायणकथामेतां नितरामाकर्षकरीत्या गातुं समर्थावभूताम्, तदा महर्षिणा तयोः परीक्षाया आयोजनं कृतम् ।

ऋषीणां महर्षीणां च महती सभा समाहूता, यस्यां सभायां कुशलवाभ्यां रामायणगानमार-ब्धम् । यदाकर्ण्य सकलशास्त्रविदां मुनीनां नयनेषु बाष्पजलमाविरासीत् । 'साधु साधु' इति परितः साधुवादध्वनिभिर्मण्डपं जुगुञ्ज । कुशलवौ परीक्षामुत्तीर्णौ । तदा परीक्षकाणां प्रसन्नता वर्णनापथ

मत्यैत्। कश्चित्ताभ्यां स्वकलशमदात्। कश्चिद् वल्कलवस्त्राणि प्रादात्। अन्यो यज्ञसूत्रं प्रायच्छत्। अपरः कमण्डलुं प्रत्यर्पयत्। इतरश्च कौपीनमसनं च। इत्थमनेकैः पुरस्कारैः पुरस्कृत्य परीक्षकैस्तावुत्तीर्णौ घोषितौ। अहो, धन्या सा शिक्षाप्रणाली! परीक्षाविधिश्चापि स धन्यो यत्रोत्तीर्णतायै अङ्कानां प्रतिशतस्य नामापि नाभवत्। पूर्णाङ्का वा शून्याङ्का वेत्येवोत्तीर्णताया परिमाणकमासीत्। कठिनायाः प्रायोगिकशिक्षाया एवासीत्तत्र वैशिष्ट्यम्। परीक्षेषु मुख्यमुख्यस्थलेषु पत्रचृस्पर्शद्वारा परीक्षोत्तरणात्मकस्य बुद्धिस्तरपातिनो दूषितस्याध्ययनविधेरस्यां व्यवस्थायां नासीत किञ्चिदपि स्थानम्।

न चैतावदेव, अपि तु कुशलवयोः प्रयोगात्मकं शिक्षणमप्युच्चकोटिकमासीत्। मुनीन् सन्तोष्य वीथिकासु चायोध्यायां परिभ्रम्य मधुरसंगीतरसेन तौ पौरजनान् मन्त्रमुग्धानकुरुताम्। इतोऽधिका पुनरावृत्तिद्वाराऽभ्यासस्योत्तमा प्रणाली का नाम भवितुमर्हति।

उत्तरकाण्डे श्रीरामस्याश्वमेधयज्ञावसरे कुशलवयोः शिक्षाया अनुपमः परिचयो लभ्यते। कुशलवावपि मुनिना वाल्मीकिना सममयोध्यायामस्मिन्महोत्सवे सम्मिलितुं गच्छतः। अयोध्यां प्राप्य वाल्मीकिः कुशलवावादिशति—वत्सौ युवां सप्रसादं सोल्लासं यज्ञभूमिं गत्वा रामायणगानं कुरुतम्। ऋषीणां पवित्रस्थानेषु, विप्राणां निवासस्थलेषु, वीथिषु, राजमार्गेषु, राज्ञामावसथेषु, यज्ञस्थाने, ऋत्विजामग्रतश्च मधुरं संगीतमभ्यस्यतम्। पार्वतानीमानि फलानि खादतम्। एतैः खादितैर्युवयोः श्रमो न वर्धिष्यते, स्वरश्च कोमलः संपत्स्यते। यदि च रामो युवामाहूय ऋषीणां समक्षं रामायणगानं श्रोतुमभिलषति तदृर्षीन् रामं चाभिवाद्य युवाभ्यामवश्यं मधुरस्वरेण रामायणं गीयताम्। अस्मत्प्रदत्तशिक्षानुसारेणैकस्मिन् क्रमे विंशतिसर्गान्त गीयताम्। आश्रमवासिनो धनं नापेक्षन्ते। तस्मादीषदपि धनलोभो युवाभ्यां परिहर्तव्यः। इयं वीणा मधुरस्वरा वर्तते, एतस्या मधुरमधुरस्वरा उद्भाव्यन्ताम्। स्वरसंमेलनं विधाय मधुरस्वरेण गीयताम्। प्रथमसर्गादेव गानमारब्धव्यम्। राजाज्ञा च परिपाल्यतामिति।

वाल्मीकेरुपर्युक्तेषु शब्देषु शिक्षाशास्त्रस्य तानि महत्त्वशालीनि तत्त्वानि निहितानि, येभ्यो ज्ञायते तस्मिन् काले शिक्षणकलायाः स्तरः कियान् समुन्नत आसीदिति। शिक्षाप्रणाल्यां प्रयोगाभ्यासयोरेव महत्ता नासीदपि तु चरित्रनिर्माणं शिक्षाव्यवस्थायाः प्राणभूततत्त्वममन्यत। गुरोः शिष्यस्य चादर्शमयस्तादात्म्यसम्बन्धोऽवर्तत। शिक्षायाः सामाजिकतायाः प्राधान्यं स्वीक्रियते स्म। रूसोप्रभृतय आधुनिकाः समेऽपि शिक्षाशास्त्रिणः सम्प्रत्येतानेव सिद्धान्तान् प्रयोक्तुं प्रेरयन्ति, तथाप्यस्माकं विद्यार्थिवर्गः कयाप्युपकारिण्या शिक्षाप्रणाल्योपकृतो भवन् नोपलक्ष्यते।

महर्षिणा वाल्मीकिना प्रणीतोऽयं शिक्षाविधिः सैद्धान्तिकस्तु वर्तते एव, परमस्मिन् प्रायोगिक-शिक्षाया विशेषो जागर्ति। परमार्थतो रामायणे वर्णिता शिक्षाव्यवस्था सर्वथा प्रायोगिक्येव निग-दिष्यते। राजपुत्राणां शिक्षाव्यवस्थाया अध्ययनेनैतत् प्रत्यक्षीभवति यत्तस्यां समयानुकूलं वेदानां तदङ्गानामुपनिषदां च शिक्षया सार्धमर्थशास्त्रस्य, दण्डनीतेः, युद्धविद्यायाः, धनुर्वेदस्य, राजनीतेः, समाजशास्त्रस्य च व्यावहारिकशिक्षाया विधानमासीत्। अध्यापकस्य कृते नितान्तमावश्यकमेत-दासीत्, यदसौ कथाप्रसङ्गैः शिक्षाया रोचकतामापादयेत्, छात्रेषु पुत्रवद् व्यवहारेण स्वशिक्षां सफलयन् बालकस्य व्यक्तित्वनिर्माणे योगं च दद्यात्।

रामायणकालेऽध्ययनाध्यापनं ज्ञानस्य परिपूर्णताया निष्णाततायाश्च लक्ष्येणैव प्रचलित-मभूत्। कश्चित् स्वप्नेऽपि नैव विचारयति स्म यद् यदिदं शास्त्रं या वा विद्यामधीयानो वर्ते तां किञ्चिदधीत्य परित्यजेयम्, इतस्ततो वा किञ्चिदाघ्राय कार्यं चालयेयम्, यद्वा भाषणे प्रभावकता-ऽऽपादनाय कतिचिदुद्धरणानि स्मरेयमिति। विद्याध्ययने ज्ञानस्योपयोगिताया महत्त्वमासीत्। पूर्णज्ञानप्राप्तिर्ज्ञानस्य प्रयोगेऽभ्यासे चात्मनः सर्वोपरिभावः प्रत्येकं छात्रस्याध्यापकस्य च लक्ष्यमासीत्। शिक्षायाः समाजस्य च घनिष्ठः सबन्धोऽवर्तत। यया विद्यया समाजस्य तोषो नाजनि, लाभो नाजनि, मित्राणां हितं यया न सम्पन्नम्, राष्ट्ररक्षाभाविना जगत्कल्याणं न सम-पद्यत, एवंविधाया विद्यायाः कल्पनामपि कर्तुं कश्चिन्नाशकत्। इदमेवास्ति वाल्मीकिप्रणीताया आदर्शशिक्षाया रहस्यमिति॥



# रघुवंशे प्रकृतिवर्णनम्

श्रीजयगोपालशर्मा, उच्चमाध्यमिकविद्यालय', रुडकी ।

मनुष्यस्य मनसि द्वे प्रवृत्ती भवत.—बोधात्मिका वृत्ति', भावात्मिका रागात्मिका वा वृत्ति । इय बोधात्मिकावृत्तेरेव प्रेरणा यन्मनुष्य सर्वं विश्व स्वबोधस्य विषय कर्तुं सृष्टेरारम्याद्य यावत् प्रयत्नशीलो दृश्यते । दिनानुदिन स विश्वस्यानेकानि रहस्यान्याविर्भावयितु प्रगतिपथमारोहन् दृश्यते । प्रकृतेर्विस्तृते क्षेत्रेऽन्तर्लीनानेकान् नियमानाविष्कृत्यानेके मेधाविनः पुरातनास्तपोनिधय , विचारका मुनयः, आधुनिका वैज्ञानिकाश्च विश्व हस्तामलकवत् प्रत्यक्षमिवापश्यन् ।

विश्वमिद जनस्य न केवल बोधात्मिका वृत्तिमेवोन्नयति, अपि तु रागात्मिका वृत्तिमपि । उदधेरुत्तालास्तरङ्गा . बालरवे रश्मिभिरुद्भासमानानि हिमाच्छादितानि गिरिश्टङ्गाणि, गद्गद-नदन्ति मयूरकेकाभिरनुप्रयातानि गिरिनदीना वारीणि, शुभ्रज्योत्स्नाधवलितमाकाशम्, षण्णामपि ऋतूना पर्यायवर्तिन्यो हृदयमुत्फुल्लयन्त्योऽवर्णनीयाः शोभाश्च प्राचीनकालादद्यावधि मनुष्यहृदय हठादावर्जयन्ति । पूर्वोक्तानि दृश्यानि दृष्ट्वा मनुष्यस्य हृदय रमते । एतै' सह मनुष्यस्य सबन्धोऽतीव प्रगाढा रागात्मकता प्राप्त आसीत् । पुरातनो मनुष्य. प्रकृते प्रिय सहचरोऽभवत् । तयोरन्योन्य प्रति भावात्मक. सबन्ध उपचीयमान आसीत् ।

यथेदानी वय कुटुम्बे, ग्रामे, नगरे, जनपदे, देशे च वसन्तः कुटुम्ब ग्राम नगरं जनपद देश च प्रति, तदीयजनान् प्रति वा प्रीतिमनुराग च वर्धयामः, पूर्वपूर्वविषयादुत्तरोत्तर विषय प्रति प्रसरणशीलोऽनुराग उच्चतरा कोटि प्राप्नोति च, तथैव यदि मानवेतरा प्रकृतिरप्यस्माकमनुरागस्य विषयता प्राप्नुयात् , तदेय भावदशा शेषेण जगता सहात्मीयतामनुभावयन्त्यतिशयसुखदायिनी, अत एव चावश्यमुपादेया स्यात् । विश्वप्रकृत्या सहात्मीयताया भावना सा भावना विद्यते याऽ-स्मान् विश्वव्यापकस्य विश्वहृदयस्य साक्षात्कार कारयति, भेदेऽभेदम्, अनेकत्व एकत्व वा भाव-यति । विश्वहृदयस्य साक्षात्कारकारिणीमिमा भावदशा योऽपि जन समधिगच्छति, तस्य भावशुद्धि-र्मन्तव्या । भावशुद्धेरिद तात्पर्यं यत् क्रोधादिभावाना सशोधनम्, तेषा रमणीयरूपस्याविर्भाव इति । भावाना रमणीयता तावन्न व्यज्यते यावत् तेषा प्रेरकता सकुचिते स्वत्वे प्रवर्तते, अर्थाद् यावत् ते स्वप्रकाशने स्वत्व स्वार्थं वापेक्षन्ते, तत एव शक्ति बल वा प्राप्नुवन्ति ।

## सारस्वती सुषमा

आदिकवेर्वाल्मीकरीदृशमेव सशुद्धभावपूर्ण हृदयमासीत् । अत एव तन्मुखात् सा काव्यवाणी प्रस्फुटिता या तस्य करुणाक्रोधयो रमणीय रूपमुपस्थापयति—

मा निषाद प्रतिष्ठा त्वमगमः शाश्वती. समा. ।
यत्क्रौञ्चमिथुनादेकमवधी काममोहितम् ।। इति ।

प्रकृत्या सहास्माक प्रेम स्वाभाविक विद्यते । यत. सभ्यताया विकासात् पूर्वं मनुष्यस्य तया सह साहचर्यमभवत् । साहचर्यजात च प्रेम हेतुशून्य भवति । येन सह वय वसामः, विहगम, क्रीडामश्च, तेन सहास्माक स्नेहो बद्धमूलो भवत्येवेति स्वाभाविकम् । बाल्ये यस्य वटवृक्षस्य छाया-यामस्माभि. क्रीडित सूर्यातपाच्चाऽऽत्मा रक्षित., येषा फलद्रुमाणा फलानि निर्भरमास्वादितानि, यस्या पाठशालाया विद्योपार्जिता, तेषा सर्वेषा प्रौढकाले दर्शन दृष्टि नन्दयत्येव । यद्यप्यधुना वय प्रकृतेर्दूर वसामः, ता प्रति चास्माक सौन्दर्यदृष्टि परिमिता सजाता, तथाप्यतीतसाहचर्यजन्या भावना यदा कदाचिदुदेत्येव । अत एव वयमुत्सवपर्वदिनेषु कदलीस्तम्भैर्हरितैर्द्रुमपर्णैः पुष्पैश्च गृह-द्वाराणि भूषयामः । अस्यामलक्रियारुचावज्ञातरूपेण पुरातनी साहचर्यमूला प्रकृतिसगतिरेव कारणम् । एप च विषयः श्रीरामचन्द्रशुक्लेन 'काव्य मे प्राकृतिक दृश्य' नाम्नि निबन्धे विस्तरेण प्रपञ्चित. ।

न केवल साहचर्येणैव प्रकृतिप्रेम्णो जन्म, अपि तु सुन्दररूपस्यानुभवेनापि प्रेम्ण आविर्भावो भवति । सुन्दर रूप दृष्ट्वास्माक हृदये हर्प सचरति । अय हर्षः सचारिभाव., अतस्तस्य मूले रागात्मक. स्थायीभावोऽवश्य कल्पनीय. ।

वाल्मीकेर्हृदय प्रकृतेरेकैक रूप विलोक्याऽऽनन्देनोत्फुल्लमभवत् । प्रकृते. सामान्यतममपि रूप तस्य दृष्टि नातिक्रान्तवान् । स तस्य सश्लिष्ट चित्र हर्षादिव्यञ्जकमुपस्थापितवान् । प्रकृति-निरीक्षणे वस्तूना व्यापाराणा चातिमनोहारिणी सश्लिष्टयोजनाऽऽदिकविना दर्शिता । वर्षाऋतो-र्निम्नाङ्कितानि दृश्याण्यवलोकनीयानि—

व्यामिश्रित सर्जकदम्बपुष्पैर्नव जल पर्वतधातुताम्रम् ।
मयूरकेकाभिरनुप्रयात शैलापगा' शीघ्रतर वहन्ति ।।
रसाकुल षट्पदसनिकाश प्रभुज्यते जम्बुफल प्रकामम् ।
अनेकवर्ण पवनावधूत भूमौ पतत्याम्रफल विपक्वम् ।।
मुक्तासकाश सलिल पतद्वै सुनिर्मल पत्रपुटेषु लग्नम् ।
हृष्टा विवर्णच्छदना विहङ्गा. सुरेन्द्रदत्त तृषिता. पिबन्ति ।।

एतमेव हेमन्तस्यापि वर्णनमतीव सुन्दरं हृदयप्रमादजं च विद्यते ।

अवश्यायनिपातेन किञ्चित्प्रक्लिन्नशाद्वला ।
वनानां शोभते भूमिर्निविष्टतरुणातपा ॥
स्पृशंस्तु विपुलं शीतमुदकं द्विरदः सुखम् ।
अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥
अवश्यायतमोनद्धा नीहारतमसा वृताः ।
प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥ इति ।

अस्तु, अतीते विश्वप्रकृत्या सह मनुष्यस्याऽऽत्मीयसम्बन्धप्रतिष्ठाया भावो बद्धमूलोऽभवत् । मनुष्यः स्वेतरप्रकृतेः सुखदुःखयोः सुखदुःखे अनुभवति स्म, प्रकृतिश्चापि मनुष्येण सह समसुखदुःखिन्यभवत् । प्राचीनकाव्येषु प्रकृते रूपं व्यापारो वोपेक्षादृष्ट्या दृश्यमानो नासीत्, अपि तु सापेक्षया दृष्ट्या तस्या रूपव्यापारदर्शने कवीनामाग्रहविशेषोऽभवत् ।

एतादृशेषु कविपुङ्गवेषु कालिदासस्य गणना क्रियते । कालिदासः प्रकृत्या प्रकृतिदेव्याः प्रवीणः सहृदयः पुरोहितो विद्यते । प्रकृत्यनुरागं पृथक्कृत्य प्रकृतिकविता वा विहाय कालिदासस्य महिमा ज्ञातुं न शक्यते । प्रकृतिर्हि कालिदासस्य कवितायाः आत्मा जीवनं वा विद्यते । प्रकृत्या एव तस्य कविता श्वसिति, प्रणिति, तयैव च तस्याः शोभा शृङ्गारो वा विद्यते ।

अस्मिन् निबन्धे वयं रघुवंशमधिकृत्य तस्य प्रकृतिवर्णनविषये रमणीयतां विशेषतां च दर्शयिष्यामः । कवेः कालिदासस्य प्रकृतिवर्णने संक्षेपेणेमानि वैशिष्ट्यान्यस्मिन् काव्ये समुपलभ्यन्ते—

१ आलम्बनरूपेण प्रकृतेर्विविधानि रूपाणि—

(क) सामान्यं रूपम् ।

(ख) मध्यमं सर्वजनसुखकरं रूपम् ।

(ग) महद् विशालं वा रूपम् ।

अयं विभागः केवलं विषयप्रतिपादने सौकर्यं सरलतां च लक्ष्यीकृत्यैव विधीयते, वस्तुतस्त्वयमौपाधिको भेदः । यतो यस्य कृते यत् साधारणं रूपं तदन्यस्य कृते मध्यमं रूपम्, मध्यमं च विशालं रूपं भवितुं शक्नोति ।

२. यानि प्रकृतिरूपाणि चित्रितानि सन्ति, तानि सर्वाण्यनुरागात्मकमेव भावं व्यञ्जयन्ति, न तु भयादिकं भावम् । अयं हि कालिदासस्य विशेषः ।

३. अथ चानुरागो न केवलमेकनिष्ठ, अथवाऽऽश्रयनिष्ठ एव, अपि त्वालम्बननिष्ठोऽपि विद्यते। यथा मनुष्यः प्रकृति प्रत्यनुरागवान्, तथैव प्रकृतिरपि मनुष्य प्रत्यनुरक्ता दृश्यते। एव चायमनुराग उभयनिष्ठो विद्यते। उभयनिष्ठतायामेवानुरागस्य प्रेम्णो वा साफल्य पूर्णता च सिध्यति। कालिदासस्य प्रकृतिवर्णन इयमपरा विशेषता यत् प्रकृतिरपि जनेन सहानुराग वर्धयति, तथा काले तस्य दु.खान्यपि हर्तु यत्नशीला दृश्यते।

४ आधुनिकश्छायावादोऽपि कालिदासस्य काव्य उपलभ्यत एव।

५ सर्वाधिको विशेषः—यथा रसा भावा वान्यस्य रसस्य भावस्य वाऽङ्गता प्राप्नुवन्ति, तथैव प्रकृतिविषयिण्या रतेरप्यन्ये भावा अङ्गता प्राप्यमाणा दृश्यन्ते।

६ केवलमुद्दीपनरूपेण वर्णनम्।

७ एकत्रैवाऽऽलम्बनोद्दीपनोभयरूपेण वर्णनम्।

८ उपसहारः।

इदमन्यदत्रावधेयम्। प्रबन्धकाव्ये कवेर्भावलीनता ज्ञातुमयमेव मार्गो विद्यते यत् कुत्र कस्मिन् वा प्रसङ्गे स कथाप्रवृत्ति विहाय रसमयीं रचना विदधाति। इतिवृत्त हि कथामग्रे प्रवाहयति, रमणीया. प्रसङ्गाश्चोद्भाव्यमानास्तत्र सरसतामापादयन्ति। यान् प्रसङ्गान् विषयान् वा कविर्मुहुर्मुहु कथाप्रवाहे तल्लीनतया वर्णयति, वर्णयितु चावसरमुद्भावयति, तेषा विषये कवे स्वाभाविको रागोऽवश्यमेव कल्पनीय.। कालिदासस्य मनसि प्रकृति प्रत्येतादृशो बद्धमूलोऽनुरागो विद्यते, यत् स आत्मान प्रकटयितु यत्र तत्रावसरमन्विष्यति। यथैवावसर प्राप्नोति च तथैव वेगेन मधुरं निर्गच्छति। पर प्रकृत्यनुरागस्याय परिवाहोऽस्वाभाविकता न गृह्णाति, अपि तु काव्ये सरसतामेव सपादयति।

प्रबन्धकाव्ये यस्य पात्रविशेषस्य चारित्र कवेर्वर्णनविषय., तस्यैव माध्यमेन कविरात्मीयान् यावतोऽभिप्रायान् मत वा ध्वनयति। कविप्रियेण पात्रविशेषेण व्यक्तीकृता भावाः कवेरात्मीया एव भावा भवन्ति, तेषु कवेरात्मा प्रतिबिम्ब्यते। अस्तु, इदानी कवेः प्रकृत्यनुरागविषय उपर्युक्ताना विचाराणा याथातथ्य परीक्ष्यते।

रघुवशस्याऽऽरम्भ एव प्रकृतेरभिनन्दनमवलोक्यते। सभार्यो राजा दिलीपः सन्तानकामनया मुनेर्वशिष्ठस्याश्रम गच्छति। अत्र कविः स्वस्वभानुसारेण प्रकृत्यनुरागव्यञ्जनस्यावसर गृह्णाति। दिलीपोऽयोध्यातो हिमालयपादवाहिन्या गङ्गाया. प्रान्तक्षेत्रे वर्तमान मुनेर्वशिष्ठस्याश्रम याति।

## रघुवंशे प्रकृतिवर्णनम्

द्वयोरपि स्थानयोर्वर्तमान महदन्तर यात्राया मनोरञ्जकताविधानाय मार्गश्रान्त्यपनोदाय च कवि प्रकृते रमणीयतां द्रष्टु प्रेरयति ।

प्रकृति प्रत्यनुराग दधान एव सभार्या दिलीपो वनमार्गेण गच्छन् लङ्घितमध्वान न बुध्यते । क्वचिदनेके शालद्रुमा रोहन्ति । तेषा गन्ध प्राप्य प्रवहन्त पवना पुष्परेणुगर्भा वनराजीन् सुमधुर कम्पयन्ति । क्वचित् रथनेमिस्वनमाकर्ण्य मेघगर्जन शङ्कमाना मयूरा उन्मुखा मनोभिराम केकन्ते । मृगद्वन्द्वानि दिलीपस्य रथे दृष्टि बध्नन्ति । क्वचित् श्रेणीबद्धा. सारसा आकाशे तोरणस्रज कल्पयन्ति, कल कूजन्ति च । क्वचित् सरसीषु विकसितानामरविन्दानामामोदस्तरङ्गस्पर्शशीतल. प्रसरति ।

न केवल मानवेतरा प्रकृतिरेव कवे. कालिदासस्याऽऽह्लादजननी, तस्य हृदय तु विश्वप्रकृते पावन मन्दिर विद्यते । अत एव मानवेतरा प्रकृति प्रति परिचयमनुरागं च दधानाना ग्रामवासिना जनानामपि सौन्दर्यमनुभवत्यनुभावयति च । मार्गे सुदक्षिणादिलीपौ यान् ग्रामवासिनो जनान् पश्यतस्तान् तौ सभाषेते, वन्याना द्रुमाणा नामधेयानि पृच्छतश्च—

हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान् ।<br>
नामधेयानि पृच्छन्तो वन्याना मार्गशाखिनाम् ॥

इद वर्णन कवे· प्रकृते· सामान्यरूपेऽनुराग व्यञ्जयति । इदं वर्णन सश्लिष्ट बिम्बग्राहक च विद्यते । तद्ध्यत्र रूपव्यापारात्मक चित्र समुपस्थापयति । नापीद वर्णन कस्याप्यन्यस्य रसस्य भावस्य वाऽङ्गम्, यतोऽत्र नान्या कापि भावव्यक्तिरपेक्ष्यते । कवेर्वचन सावधान विभावयद्भि-रुपर्युक्तकथनमनाविल भ्रान्तिरहित च ज्ञास्यते । अत्र प्रसङ्गे कवेर्वचनम्—

तत्तद् भूमिपति पत्न्यै दर्शयन् प्रियदर्शन· ।<br>
अपि लङ्घितमध्वान बुबुधे न बुधोपम· ॥

यस्य रूपस्य व्यापारस्य वा दर्शन चित्त तथा वशीकरोति मोहयति वा, यथा दीर्घमार्गपरि-श्रान्तिरपि नावबुध्येत, तस्य विषये वशीभूतस्य मुग्धस्य हृदये रत्यात्मको भावोऽवश्यमेव विद्यमान-तया कल्पनीय ।

एवमेव तपोवनस्य वर्णनमपि प्रकृतेः सामान्य मध्यम वावलोकनीय सौन्दर्य व्यनक्ति । अथ सायकालस्य समयः । वनान्तादुपावर्तमानास्तपस्विनः समित्फलकुशहस्तास्तपोवन प्रविशन्ति । नीवारभाग कामयमाना मृगा ऋषिपत्नीनामुटजद्वाराण्यवरुध्य तिष्ठन्ति । तेषामय व्यवहारस्तथैव सरल प्रेमपूर्णश्च विद्यते यथाऽपत्याना जनर्नी प्रति —

आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः ।
अपत्यैरिव नीवारभागधेयोचितैर्मृगैः ॥

इदं चित्रं वत्सलतानिर्भरमानसानामुत्सर्गरत्नैर्धनवतां जनानां मनांसि प्रबलमाकर्षति, अपत्यस्नेहमनुभावयति च ।

विहगा आलवालाम्बुपानाय समवेता भवन्ति । आतपस्यापगमे नीवारा राशीकृताः सन्ति । अतो रिक्तासु प्राङ्गणभूमिषु निषण्णा मृगा रोमन्थमभ्यस्यन्ति । कीदृशः सरलो मनोभिरामः प्रेमससारोऽत्र गोचरीभवन् दृष्टिं हृदयं च सत्त्वभावे स्नपयति—

आतपात्ययसंक्षिप्तनीवारासु निषादिभिः ।
मृगैर्वर्तितरोमन्थमुटजाङ्गणभूमिषु ॥

तपोवनस्येदं रमणीयं हृदयाकर्षकं रूपं कियत् सजीवं सप्राणं च विश्वप्रेम्णः सुखकरं निदर्शनं विद्यते । एवमाभाति यत् कालिदासस्य हृदयं नगरस्य कोलाहले विरक्तिमनुभूय प्रकृतेः शान्ते पावने क्षेत्रे शान्तिमात्मसात्कर्तुं प्रयत्नशीलो विद्यते । अत एव स द्रुमाणां खगानां वन्यमृगाणां च सौन्दर्यमनुभावयन् मानवहृदयस्य कटुतामपहर्तुं सात्त्विकतां सरसतां च संचारयितुं कामयते ।

वशिष्ठस्याश्रमे नन्दिन्याः शोभापि हृदयस्पर्शकारिणी विद्यते । नन्दिन्या रूपं कीदृशं रमणीयम् ? पल्लववत् स्निग्धा पाटला च नन्दिनीषद्वक्रमुखी ललाटे श्वेतरोमाङ्कं दधाना तथा शोभते यथा नवं शशिनं दधाना सन्ध्या । अत्र प्रस्तुतस्यैकस्य प्रकृतिरूपस्यान्येन प्रस्तुतेनैव प्रकृतिचित्रेण साम्यम् , तस्यापि च सौन्दर्यानुभावनं कालिदाससदृशस्यैव कवेः कृतिकौशलम् । यथा नन्दिनी स्ववत्सं पश्यति तथैव प्रेमाधिक्येन तस्याः कुण्डाकारादूधसः कदुष्णं दुग्धं प्रस्रवितुमारभते । तस्याः खुरोद्धूता रजःकणा राज्ञो दिलीपस्य शरीरं स्पृशन्तस्तीर्थाभिषेकजां शुद्धिं तस्मै कल्पयन्ति—

ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला ।
बिभ्रती श्वेतरोमाङ्कं सन्ध्येव शशिनं नवम् ॥
भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि ।
प्रस्रवेणाभिवर्षन्ती वत्सालोकप्रवर्तिना ॥
रजःकणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात् ।
तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः ॥

गोरूपस्येदं कीदृशं मनोहरं संश्लिष्टं श्रद्धाप्रेमान्वितं चित्रं कविना चित्रितम् ।

## रघुवंशे प्रकृतिवर्णनम्

- त्रयोदशे सर्गे कविः प्रकृतेस्तद्रूपं चित्रयति यद्विशालं महनीयं चाभिधातुं युज्यते। श्रीरामो विमानमारुह्य स्वपुरीं प्रतिष्ठते। तत्र विमानस्यैकस्मिन् प्रकोष्ठे सीतया सहोपविष्टो रामः सीतां सबोध्य प्रकृतिसौन्दर्यं दर्शयन्नामोदं धत्ते। तस्य विमानं क्वचित् सुराणाम्, क्वचिद् घनानाम्, क्वचित् पक्षिणां च पथा सचरते। इमे पन्थानः क्रमेण उच्चतमोच्चतरोच्चाः सन्ति। अत आकाशमार्गादधो वर्तमानानां प्रकृतिरूपाणां निरीक्षणे स्वाभाविकतायाः सुरक्षापि विद्यते। विमानस्य तीव्रगतिमनुरुध्यैवात्र प्रकृतेर्विशालरूपस्य चित्रणं विद्यते।

सर्वप्रथमं कवेः ( रामस्य वा ) दृष्टिः सागरस्य रूपे पतति। तस्य विशालं रूपम्, विभिन्ना अवस्थाश्च कालिदासः सूक्ष्मतया चित्रयति। तथापि तस्य मनो न तुष्यति, यतो विमानेऽवस्थानं तत्र बाधकम्। यावद्रूपं तेनोत्पततो विमानाद् द्रष्टुं शक्यते, तावदेव स्वाभाविकतयात्र वर्णितम्, न ततोऽधिकम्। सागरस्य विशालता विविधरूपता च दर्शनीया—

ता तामवस्थां प्रतिपद्यमानं स्थितं दश व्याप्य दिशो महिम्ना।
विष्णोरिवास्यानवधारणीयमीदृक्तया रूपमियत्तया वा॥

इदानीं सश्लिष्टं मनोहरं विशालं चित्रं दृश्यताम्। शतयोजनमायतास्तिमयो नदीमुखजलं ससत्त्वं गृह्णन्ति। अस्या क्रियाया विवृतमाननं यदा ते पुनः समीलयन्ति, तदा पूर्वं सत्त्वेन सहाऽऽननं प्रविष्टं जलं शिरसा रन्ध्रैरूर्ध्वमुद्गच्छति। एवं पुनःपुनरेतादृश्या क्रियाया सपाद्यमानायां तत्र जलयन्त्रशोभाऽवलोक्यते—

ससत्त्वमादाय नदीमुखाम्भः समीलयन्तो विवृताननत्वात्।
अमी शिरोभिस्तिमयः सरन्ध्रैरूर्ध्वं वितन्वन्ति जलप्रवाहान्॥

गजा इव विशालकाया नक्रा यदा सहसोच्छलन्ति तदा समुद्रफेना द्विधा भवन्ति। ते तेषां कपोलेषु संसर्पन्तः क्षणं चामराणां शोभां धारयन्तस्तेभ्यो राजलक्ष्मीमिवोपनयन्ति।

एकतो भुजङ्गा वेलानिलं पातुं निर्गच्छन्ति, परं महोर्मीणामुद्रेकाद्धेतोरलक्ष्याः सन्ति। तेषां फणस्था मणयः सूर्यांशुसम्पर्केणाधिकतरं विद्योतन्ते। अतो मणीनां प्रभयैव ते ज्ञायन्ते—

वेलानिलाय प्रसृता भुजङ्गा महोर्मिविस्फूर्जथुनिर्विशेषाः।
सूर्यांशुसम्पर्कसमृद्धरागैर्व्यज्यन्त एते मणिभिः फणस्थैः॥

पयांसि पिबतो घनस्यापि शोभा दर्शनीया—

प्रवृत्तमात्रेण पयांसि पातुमावर्तवेगाद् भ्रमता घनेन।
आभाति भूमिष्ठमयं समुद्रः प्रमथ्यमानो गिरिणेव भूयः॥

यदा लवणाम्बुराशिः, यस्य वेलासु तमालतालीवनराजयः प्ररोहन्ति, दूराद् दृश्यते, तदा सोऽयश्चक्रमिवाभाति ( इदानीं विमानं घनानां पथा सञ्चरते ), तमालतालीवनराजिनीला च वेलाऽयश्चक्रस्य तीव्रवेगोत्पन्ना कलङ्करेखेव भाति । अर्थात् पुरो वर्तमानोऽम्बुराशिर्दूराद् तीव्रमावर्तमानं लोहचक्रमिवाऽऽभाति ।

अत्र प्रकृतेर्वर्णनं न केवलमालम्बनरूपेण, परमुद्दीपनरूपेणापि, अथवा मानवीयकार्येषु सहयोगदातृत्वरूपेणापि विद्यते । अत एव वेनानिलः सीताया आननं केतकरेणुभिः सभावयन्निव प्रतीयते—

वेणानिलः केतकरेणुभिस्ते सभावयत्याननमायताक्षि ।
मामक्षमं मण्डनकालहानेर्वेत्तीव बिम्बाधरबद्धतृष्णम् ॥

अत्र स्वाभाविकतायाः परिरक्षणं प्रशंसनीयतयाऽवलोकनार्हम् । स्वमनोनुकूलं प्रकृतिवर्णनावसरं प्राप्याप्यत्र वर्णनेऽनावश्यको विस्तरो नास्ति । विमानस्य तीव्रगत्या वर्तमानाया यावद् दृश्यं दृष्टेः पुरस्तात् समुपस्थितं भवति तावदेवात्र चित्रितं विद्यते । अतिक्रान्तदर्शनं प्रकृतिस्वरूपं यदि कविर्वर्णयेत्तदाऽस्वाभाविकताया दोषोऽवश्यमेव समापतेत्, प्रकरणेन तस्य सगतिश्च न स्यात् ।

मुहूर्तेन विमानं पयोधेरपरं कूलं प्राप्नोति, यत्र सैकतेषु शुक्तिपर्यस्तानि मुक्ताफलानि शोभन्ते । तस्मिन्नेव क्षणे यदा रामः पश्चान्मार्गे दृष्टिपातं करोति, तदा भूमेः शोभा दर्शनीया । यथा यथा विमानं समुद्राद्दूरीभवति, तथा तथा लक्षिता सकानना पृथिवी समुद्रान्निष्क्रामतीव—

कुरुष्व तावत् करभोरु पश्चान्मार्गे मृगप्रेक्षिणि दृष्टिपातम् ।
एषा विदूरीभवतः समुद्रात् सकानना निष्पततीव भूमिः ॥

यदा विमानं सुराणां पथा सञ्चरते, तदाऽऽकाशगङ्गायास्तरङ्गाणां सम्पर्केण शीतल आकाशवायुर्महेन्द्रद्विपस्य मदगन्धं परिवहन् सीताया मुखे मध्याह्नतयाऽऽतपेन सजातान् स्वेदलवानाचामति, यदा च विमानं घनानां पथा संचरते तदा कञ्चिद् घनं दृष्ट्वा सीता कुतूहलेन वातायनलम्बितेन करेण तं स्पृशति । घनस्य विद्युत् सीतायाः करं परिवेष्टयन्ती वलयशोभां परिधत्ते । परं विद्युत्स्पर्शेण सीताया न कापि हानिरित्याश्चर्यम् । सम्भवतो घनः सीतायास्तपसो भीतः, या सीताऽग्नौ प्रविष्टापि न दग्धा सा विद्युतापि स्पृष्टा न क्षतिं प्राप्ता ।

अत्रापि न केवलं प्रकृतेर्महनीयं रूपं कवेः ( रामस्य वा ) दृष्टिमाकर्षति, सरलं साधारणं वन्यजीवनमपि तस्य मनोमोदकरम् । राक्षसभयेऽपक्रान्त उटजानि निर्माय सुखेनाऽऽश्रममण्डलान्यध्यासमानानां चीरभृतां तापसानां जीवनमपि रामस्य सुखं जनयति ।

( सावशेषम् )

# शुनकदूतम्

श्रीक०वे०कृष्णमूर्त्तिशर्मा, डेक्कनकालेज रिसर्च इन्स्टीट्यूट, पूना ।

कविकुलतिलक स कालिदास
कविहृदयंगममेघदूतकाव्यम् ।
व्यररचदथ हंसदूतमेक
रचितमभून्निगमान्तदेशिकेन ॥
अथ बहुकवयो हि दूतकाव्य-
प्रणयनकौतुकमेवमापुरर्वाक् ।
मम च शुनकदूतकाव्यमेत-
द्रसिकवरा सदयं समाद्रियेरन् ॥

कश्चिद्दीन कनकवलयाकाङ्क्षिणीमुद्विवक्षन्
रूपोदारां कथमपि सुता यौवने मातुलस्य ।
दर्शे नक्तं धनिकसदनाद्धाटक द्राङ् मुषित्वा
कारागारे विहितवसतिर्बन्धितो वर्षमेकम् ॥ १ ॥

तत्र प्रेक्ष्य स्वमपवरकं निर्मितं ग्रावखण्डै
स्थूलस्थूलै सुदृढकलित लोहदण्डैः कवाटम् ।
स्थानात्तस्मात्कथमपि वहिर्धावनेऽसौ निराश
क्षुत्तृष्णाभ्यां कृशतरतनु. श्वानमेकं ददर्श ॥ २ ॥

तेनैवाय निजपरिभवं प्रेयसी प्रापयिष्यन्
त्सुत्सूशब्दैः स्वकरनिहित दर्शयन् पूपखण्डम् ।
प्राप्तं मध्यं द्युमणिमपि संलक्षयन् पुष्करस्य
प्रेम्णोपांशु स्वनिकटममुं सारमेयं समाह्वत् ॥ ३ ॥

तिर्यक्प्राणिष्वधम इति य मानुषा. सगिरन्ते
यस्यावासोऽवकरनिकरोऽमर्पण यन्निसर्ग. ।
साहाय्यं तं कुमतिरवनिष्टासकौ सारमेयं
कृत्याकृत्य न हि गणयते कोऽपि कृच्छ्राभिभूत ॥ ४ ॥

तस्य श्रुत्वा रसनजनितं निस्वन कुक्कुरोऽसौ
मन्दं मन्दं तमभि च चलल्लम्बयन्नात्मजिह्वाम् ।
तद्धस्तात्त[1] विरसमपि तत् खाद्यमास्वाद्य तृप्तो
धून्वन्पुच्छ हृदि समुदितां प्रीतिमाविश्चकार ॥ ५ ॥

पृष्ठ तस्य प्रतललघुविन्यासभङ्ग्याभिमृश्य
जाताश्वासस्तमवददसौ दीनदीनस्वरेण ।
कालेऽप्यस्मिन्कठिनविधिना क्लेशिताना नराणां
तिर्यञ्चो यत्सकृदुपकृता प्रत्ययार्हा भवन्ति ॥ ६ ॥

विश्वस्यानां भवसि भषकाभ्यर्हितस्त्व तिरश्चा
यत्त्वद्भाव[2] सपदि निगमान्प्रापिपच्छङ्करः प्राक् ।
त्वत्कूटस्थस्त्रिदिवगमने पाण्डवानां सहाय
त्वामेवातो मदुपकृतये भावयेऽह समर्थम् ॥ ७ ॥

द्राघीयोभिस्तनुतरपदै. क्रोशपट्क प्रतीच्या
धाव धाव महिषनगरी[3] प्राप्य तत्र स्थितायै ।
प्रेयस्यै मे कथय भविकं मद्वियोगासहायै
विस्रम्भो हि प्रणयिषु शुभोदर्कहेतुर्नराणाम् ॥ ८ ॥

संगत्य त्व तव सहचरी किञ्चिदाघ्राय सख्यु
कार्यारम्भं मृदुलभषितै. साधु विज्ञापयस्व ।
प्रेमोत्कर्षात्तव च लपनप्रेक्षकाङ्क्षावकान् द्राग्
आलिङ्ग्येषल्लघुतरगति. प्रारभस्व प्रयाणम् ॥ ९ ॥

---

१. तस्य हस्तात् आत्तं गृहीतमित्यर्थ. ।
२. त्वद्भावम् = श्वभावम् ।
३ महिषनगरीति केवलं काल्पनिक नाम , नात्र विमर्शन साम्प्रतम् ।

दिव्यक्षेत्राण्यटितुमनसो विठ्ठल संस्तुवन्तो
दारैस्तोकैरपि च जवनारोपितैर्वस्तुवृन्दैः ।
मध्येमार्गं विविधविषयान् भाषमाणाः प्रवासे
ग्रामीणास्ते सदयहृदया संभवेयुः सहायाः ॥१०॥

प्रासादाग्रादवसितनिजाहारयोषित्कराब्ज-
प्रास्तोच्छिष्टाधिगमकलहे मुक्तकण्ठं भषद्भिः ।
कृत्वा द्वन्द्वं नगरशुनकैः प्राप्तकीर्तिः पुरस्ता-
द्धावन्द्दष्टः सुहृदुपकृतेर्न प्रमत्तो भवेस्त्वम् ॥११॥

सौधैः पूर्णामथ च नगरीमप्रमत्तः प्रविष्टो
रथ्या क्रामन्प्रहिणु नयने सर्वतः सारमेय ।
यावन्नामी जवनशकटा यन्त्रिणः स्यन्दना वा
चक्रस्याधः पतितमचिरात्त्वां नयेयुः कृतान्तम् ॥१२॥

कोशाक्षिप्तासिसममसकृद्वालधिं तेऽत्युदग्रं
श्रोत्रद्वन्द्वं कमलमुकुलस्पर्धि मूर्धोद्गतं च ।
श्लक्ष्णं दीर्घीकृतमपि मुदा पूर्वकायं विलोक्य
धावन्त्यस्त्वामथ च सरमा भावयिष्यन्त्यनङ्गम् ॥१३॥

अध्वक्लान्तैः क्षुदुपशमनव्यापृतैर्भूधराग्र-
स्यन्नोत्सेभ्यो मधुरसलिलैः धौतकुम्भैः प्रपूर्य ।
स्रातुं भक्तं धरणिरुहमूलोपविष्टैः प्रदिष्टं
पान्थैः खाद्यं निशितदशनश्चर्व रस्यं क्षुधार्तः ॥१४॥

यात्राक्लेशं पथिपु सहसापोहितुं शाद्वलं त्वं
प्राप्तः कुञ्जोदरमयि सखे यावदिच्छं शयीथाः ।
दीर्घीकुर्वन् वपुरलसता हातुकामस्ततश्च
श्रोत्रद्वन्द्वस्फुटितमपि ते जन्मसिद्धं विधत्स्व ॥१५॥

---

१ द्वन्द्वम् = युद्धम् ।

ग्रामौकोभि सिकतिलभुव संगतै कौतुकार्थ
वृद्धैर्बालैरपि च युवभि कल्पिते रङ्गमध्ये ।
मुष्टीमुष्टिप्रहरणपरान् स्पर्धितान् मांसलांसान्
मल्लान् दृष्ट्वा कमपि हृदये त्वं विनोद भजेथा ॥१६॥

जातस्वेदं तपनकिरणैस्त्वां विलोक्याद्रिपृष्ठा-
दुद्गच्छन्तो भुवनमुदरे बिभ्रतस्ते पयोदा ।
छायामादौ मम सुकृतसंप्रेरिता प्रेष्य पश्चा-
दुक्षेयुस्त्वा शिशिरपृषतैर्वातनुन्नै प्रतोल्याम् ॥१७॥

मध्येमार्ग निशितपरशुच्छिन्नशुष्कैध्मभारं
विक्रेष्यन्त शिथिलकरणा स्विन्नगात्रा जरन्त. ।
वृक्षच्छाये कटितटपटग्रन्थ्युपात्त तमाखु
वर्वन्तस्ते नयनपदवी नातिवर्त्स्यन्ति ननम् ॥१८॥

नृत्यद्वर्गप्रततशयनव्यष्टदिक्छाखिशाखा-
कोटिस्रस्तान्यथ च सुमनांस्यादरेण त्वदङ्गे ।
निध्यायन्त पथि कतिपये प्राणिनोऽन्ये प्रदोषे
माहात्म्यं ते किमपि मनसा भावयिष्यन्ति भीता. ॥१९॥

आदौ द्वित्रांस्तदनु सुबहून् मानुषान् वीक्षमाण
यातायात पथि विचरत. प्राप्तशृङ्गाटकं त्वाम् ।
निर्भीकं तां महिपनगरी गाहमानं विशाला
निध्यायन्तीर्नलिननयना भावयेऽहं पुरन्ध्री ॥२०॥

पश्चात्पादस्थितिरनुकलं वेदिकायां निषण्णो
रथ्या[२] रथ्या निबिडनिबिडा साधु निर्वर्णयस्त्वम् ।
सव्येष्ट्रीणा परिसरगता लोमशास्ता शुनी श्वन्
दर्शं दर्शं निजहतविधि मा स्मरन्भूर्विषण्ण. ॥२१॥

---

१ अत्र "छाया बाहुल्ये" इति सूत्र स्मर्तव्यम् ।

२. प्रथमस्य 'रथ्या' शब्दस्य 'वीथी' इति, द्वितीयस्य 'रथसमूह.' इति चार्थ ।

भ्राम्यन्सर्वां महिषनगरीं दक्षिणस्यां दिशाया
द्रष्टासि त्वं कतिपयगृहां सारिणीतीरवीथीम् ।
तस्या पक्वेष्टकचितबहिर्भित्तिकं नातिदभ्र
गन्तव्य ते सदनमरुणेऽस्ताचलोर्ध्वं प्रपन्ने ॥२२॥

तस्य स्थित्वा क्षणमिव सखे वेश्मनो वेदिकायां
मत्प्रेयस्या. क्रमणजमथो मञ्जुमञ्जीरशिञ्जम् ।
श्रोत्रानन्दप्रदमनुभवन् दुर्भगस्य स्मरन् मे
तस्या' खेदापनयविधये सर्वथा त्व यतेथा ॥२३॥

स्मारं स्मार मम चिरतर म्लानवक्त्राम्बुजाया-
श्चक्षुर्द्वन्द्वात् प्रवहदनिशं वीक्षमाणोऽश्रु तस्या. ।
संतप्तस्त्व मनसि यदि नौ सगम प्रार्थयेथा
वालाग्रं द्राग्धुनु रसनया लीढि ते सृक्किणी द्वे ॥२४॥

तत्रैव त्व निवस दिवसान् पञ्चषान् विश्रमार्थी
क्रीडन् वत्सैरपि च विशिखाचारिणीभि शुनीभि ।
यावच्छीघ्र मयि कथयितुं भद्रवार्ता प्रियाया
प्रत्याधावन पिशुनय जय पुच्छमुत्तम्भयस्ते ॥२५॥

आदिश्येव स्वमथ शुनक क्लेशभूम्नाभिभूत
प्रागेव क्षुच्छिथिलकरण कामिनं साधुवृत्तम् ।
दीर्घश्वासाञ्झलमसकृत् सानुकम्पं स पश्यन
प्रत्यश्रौषीत्तदुपकरण बुक्कितैस्त्रि स्वकीयै ॥२६॥

दिष्टया राष्ट्रे कतिपयदिनै. पारतन्त्र्याद्विमुक्ते
बन्धागारादयमपि वहिर्मोचितो नेतृमुख्यै ।
मन्दाक्षासंकुचितहृदयो[1] रुक्मचौर्यप्रयत्ना-
द्याप्यादन्य विषयमभजद्विप्रकृष्ट वसत्यै ॥२७॥

---

१ . मन्दाक्षेण = लज्जया, आ = ईषत्, संकुचित इत्यर्थ ।

द्वित्रैरब्दैः स्वमतिविभवेनार्जवाच्च प्रयत्य
धर्मेणैवार्जितबहुधनो भाग्यलक्ष्म्याः प्रसादात्।
गत्वा शीघ्रं महिषनगरीं मातुलेय्याः प्रकोष्ठौ
कृत्वा दृश्यौ कनकवलयैः पर्यणैपीत्प्रसन्नाम् ॥२७॥

संसारेऽस्मिन् विविधविषयैः पूरिते विस्मयार्हैः
जीवास्तत्तन्नियतिविहित द्वन्द्वमाराद्भजन्ते।
तस्मात्कृच्छ्रे महति च सुखेऽनादरा ये भजन्ते
यावज्जीवं परमपुरुषं केवलं ते महान्तः ॥२९॥

[1]मेधारुद्रप्रथमरचितं मेघसंदेशकाव्यं
दृष्ट्वान्येषां पिककशुकमयूरादिदूतानि चाहम्।
प्राणैषं यत्कविजनविनोदैकहेतोस्तदेतत्
काव्यास्वादप्रवणरसिकाः साहसं मे सहन्ताम् ॥३०॥

---

1 "मेधारुद्रः कालिदासः" इति कोशकल्पतरुः।



# दीक्षान्तभाषणम्

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञ स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरय ।
तेजोवारिमृदा यथा विनिमयो यत्र त्रिसर्गा मृषा
धाम्ना स्वेन सदा निरस्तकुहक सत्य पर धीमहि ।।

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ।।
ॐशान्ति', शान्ति , शान्ति. ।।

अयि प्रेष्ठा श्रीसम्पूर्णानन्दमहोदया , शिक्षामन्त्रिण', गीर्वाणगीष्पतिगोष्ठीगरिष्ठा पण्डित प्रवराः, विद्वासोऽध्यापका', ऐषमाश्च स्नातका !

परमकारुणिकस्य भगवतो जगद्वतोऽनुग्रहविलसितमेतदद्य वय सर्वेऽत्र सभूय काशिकराजकीयसस्कृतमहाविद्यालयस्य दीक्षान्तमहोत्सव समामनाम । प्रसङ्गेऽस्मिन्नत्रत्याना समाप्ताध्ययनाना स्नातकानामधीयानाना चोपस्नातकाना पुरतोऽभिभाषणक्षण मह्य प्रदायात्र भवन्तोऽधिकारिणो नून मा नीतवन्तोऽधमर्णतामित्येतेषामुपकारपरम्परा हृदयेनाभ्युपैमि ।

अत्र भवता वास्तव्यभूतेय नगरी वास्तविक गुणगणगरिमाण वहन्ती पुण्यसलिलाया भगवत्या भागीरथ्याः स्रोतसा सर्वत' पूता महेश्वरेणान्नपूर्णापूरितार्धदेहेन भगवता विश्वनाथेन समधिष्ठिता सप्तपुरीष्वन्यतमा काशी पर कल्याण प्राप्तुकामैर्भारतीये सदा समादृताऽद्याप्ययातयाम गौरव भजते । सदैव विदुषा निकषायमाणेय साम्प्रतमपि समस्ताना विद्याना लास्यभूमिर्महत्त्वाकाङ्क्षिणा पिपठिषूणा मनासि स्वाभिमुखमावर्जयनीत्यहो महानस्या. प्रभाव. ।

इय हि नगरी परमपुरातनी सर्वदा भारतस्य विजयवैजयन्ती वहन्ती राजतेतमाम् । अस्यामेव नगर्या सत्यस्य परिपालनाय राजर्षिर्हरिश्चन्द्र स्वात्मानमपि विक्रीतवान् । अत्रैव खलु

---

१ काशिकराजकीयसस्कृतमहाविद्यालयस्य नवमोपाधिवितरणोत्सवावसरे भारतीयलोकसभाया उपाध्यक्षेण श्रीअनन्तशयनमायङ्गारमहाभागेन वितीर्णमिदम् । अत्र नैव स्नातकानाम्, विदुषा शासकीयपुरुषाणा च प्रेरणाप्रस्रोतार' सामयिका प्रश्ना समुपस्थापिता सन्ति—सम्पादक ।

प्रतीक्ष्यपादो दक्षिणापथे लब्धजनुर्भगवान् श्रीशङ्करो मातङ्गं कञ्चनास्पृश्यतया दूरमपसार्य सत्य एव तात्त्विकं विवेकविभवमासवान्। अत्रैव बहवो विद्याचणाः, दूरदूरतराभ्यो दिग्विदिग्भ्यः समेत्य विद्यावारिधिमालोडयन्ति स्म, स्वोपात्तविद्याविक्तमत्ताश्च मदयदमन्द दानैर्विद्वद्दन्तावलैर्वै प्रक्रीडा विधाय भूयोभूयो विभूषितवन्तो निजां तनुं प्रशसापत्रैः। अपि चेयं वाराणसी संस्कृतविद्याया सदाचारविचारपरम्पराया प्राचीनतमं केन्द्रम्। पठनपाठनयोः पटीयसी परिपाटी प्रवर्तयन्ती यशपाटीरगन्धेन सगन्धं देशमस्माकं वरिष्ठानां पण्डितपारीन्द्राणां पुरतो विरतं सर्वतो वितनोत्येव। अत्रत्यं भव्यं ग्रन्थागारं विलोक्य ज्ञाननिधिना चकितचकिता लोलुपा वैदेशिका विज्ञ-कौशिकाः पारेपारावारं परःपरार्धान् ग्रन्थान् प्रसह्य नीत्वा तदन्तर्गतरत्नसमारैः स्वीयविद्याविभव-मुपबृंहयाञ्चक्रुः। इतो नातिदूरे धामनि सारनाथनामनि भगवतो बुद्धस्य यशोविजयभूमिर्जागर्ति, यतः प्रसृतः सार्वभौमः शान्तिसन्देशः पुरा विश्वस्मिन् विष्वक्चीनां जरीजृम्भते। एवं हि—

अस्ति खलु निखिलभूतलभूषणभूता विभूतिगुणयुक्ता मुक्ताभियुक्तजनता नगरी वाराणसी नाम। अतितुङ्गसुरनिकेतनशिखासमुत्क्षिप्तपवनचलिताभिर्मञ्जरितमिव विराजति यत्र नभो वैजयन्तीभिः। नन्दनवनाभिरामा विबुधवती नाकवाहिनीजुष्टाऽमरावतीव मान्या विश्वसृजा जगति निर्मिता।

एतादृशि मनोभिरामेऽभिरूपानुरूपे विद्याविसरे परिसरे समवेता वयमिति समवेतधन्य-तामद्यतनस्य महोत्सवस्य।

अयि प्रेयांसः स्नातकाः! इतोऽध्ययनक्रमं निर्वर्त्य सम्प्रति स्थान एव यूयं विविधकश्मलभूमनि जगत्यस्मिन् स्वीयं समुचितं स्थानं मृगयितुं बद्धपरिकरा भवथ। इदानीन्तनमिदं सविस्तरं जगत् प्रस्तरसंकुलं बहुभिः सङ्घर्षस्थानैरन्तरा सान्तरायं प्रतिभाति। तत्र राजनीतिकान्यार्थिकानि सामाजिकानि धार्मिकाणि जातीयतावर्गीयताभावात्मकानि बहुविधानि सङ्घर्षपदानि नूनमा-कुलीकुर्वन्ति घण्टापथम्। अतो जीवनपथं प्रविविक्षूणां नवयूनां कृते समुचितपदप्राप्तिर्नूनमेवासु-लभाऽसुलभ्या वा। पाश्चात्यैर्दार्शनिकैरधुना सर्वत्र विजृम्भमाणं सङ्घर्षमपाकर्तुमुपेयोपायं नैव प्रदर्शयन्ति। ते मानवं समस्तं जीवनं सपरायप्रायमामनन्ति, तुलयन्ति च मानवव्यवहारं तिरश्चां व्यवहारेण सार्धम्।

अहस्तानि सहस्तानामपदानि चतुष्पदाम्।
फल्गूनि तत्र महतां जीवो जीवस्य जीवनम्॥

व्याससमृतं न्यायममुमेव परमं मत्वा डारविनप्रभृतयो वैज्ञानिकाः स्वसत्तायै अनवरतं प्रवर्तमान

## दीक्षान्तभाषणम्

सङ्घष वीक्ष्य केवल शक्तिमतो योग्यतमस्यैव जीवनक्षमत्वमनुभूय जीवाना जीवनव्यवहारे जाङ्गलमेन नियम साधिष्ठममन्यन्त । नूनमवितथमेतद्यज्जीवलोके फल्गूनि महद्भिर्बाध्यन्त । जीवेषु परस्पर सहकारिता नैवोदेति, परन्तु ते मिथ. स्पर्धन्ते नाम । फलतश्च केवल महान्त एव जीवन्ति, परमुपजीवन्ति ते लघीयस । अद्यत्वे प्रेक्षावता पुरत. क्षोदक्षमोऽय विषयो यत् "पश्वादिभिश्चाविशेषात्" इति बादरायणसूत्रमनुसृत्याऽऽहारनिद्रादौ पशुभि' साम्य भजमानैर्मानवैस्तु सत्यपि ज्ञानबुद्धिवैभवे स्वीये जीवनक्रमेऽपि प्रतिस्पर्धामुखं तैः सौसादृश्य धर्तव्यमेव, उताभिन्न कोऽप्यन्य. पन्था गवेषणीयो येन प्रतियोगिताभाव सहकारेण, वैमनस्य सौमनस्येन, विद्वेष च स्नेहसौहार्देन प्रोन्मूलयितु प्रभवेम ।

इदानीन्तनो मानवस्तु विकाससरणा परमोच्चसोपानमधिरूढो विभाव्यते । आदितो जीवाना विकासस्तु क्रमिक एवाविरभवत् । किन्तु यतः प्रभृति जीव सदसद्विवेकि मानव रूपमवाप, ततः स्वीय विकासमपि त्वरया विधातु शक्तोऽय जीव. सत्यमेव दैवीं सम्पदमधिगन्तु प्रभवतितमाम् । स्वस्मै द्रुह्यन्त वीक्ष्य निसर्गत एव मानवस्तमभिद्रुह्यतीति न्यायस्य पौन.पुन्येन रटन सर्वथा वितथमेव । यत सहजपटुरय मानवोऽनुदिन प्रज्ञतरो भवितुमर्हति, पर च मर्त्यमप्यात्मानममर्त्यता नेतु क्षमतेतराम् । इदानीमपि कि पुरत. पदन्यास जोष विधेम केवल क्षुण्णमिव पन्थानमनुसरेम, तदा का नामास्माक प्रगति , कश्च विश्वास. ? पाश्चात्यै स्वाविष्कारमहिम्ना केवल भूतमयी बाह्या प्रकृतिरेव वश्यता नीता, परन्तु महति तमस्तोमे निजाभ्यन्तरे ज्ञानविज्ञानयोरालोकस्तु नवाद्यापि प्रसारितो न वाभ्यन्तर दुरित तैर्व्यपोहितम् । यदान्तरिका भावा वैमनस्यप्रभव विभेद जनयितु क्षमास्ते तथैव तादृशि विभेदे विजृम्भमाणे सेतुबन्धमपि कर्तुमीशन्ते । अरिषड्वर्गस्तेषा समाजे साम्राज्यमतुलमद्यापि धत्ते, विवर्तते च समाज केवलं समजमेव । अस्माक पूर्वजा आदावाभ्यन्तरवृत्ति जित्वैव बाह्या प्रकृति जेतु प्रायतन्त ।

इदमत्रानुयुज्यते—अस्त्यत्र पद्धतिद्वयी । तत्र कतम पन्थान श्रेयास मन्यध्वमनुगन्तव्य च । जीवनस्यैक. पन्था., यत्र निराडम्बरो ज्ञानोज्ज्वल परोपकृतय आत्मानमपि त्यक्तु क्षमः कुटीरे वसन् सुखमास्ते । अन्यश्च द्विपदश्वापद इव यत्र व्यवहरन् हर्म्येषु वृकायते । अह विश्वसिमि यद्यूय पूर्वपुरुषाणा पद्धति परमा मन्यमाना आद्यमेव पन्थानमनुगन्तु कामयध्वे । यत' स एव पन्थाः, येनाद्यत्वे वर्धमानाना दोषाणामुन्मूलन कर्तु शक्येत । द्वन्द्वाना प्रहाण द्विःप्रकारेण विधातु शक्यते—परिपन्थिनो विनाश नीत्वा विद्वेषस्य दूरीकरण नामैकः क्रम', द्वन्द्वस्य मूलमुत्पाट्य बीजस्योत्खनने च निर्द्वन्द्वतावाप्तिरिति द्वितीय क्रमः । अस्माक पूर्वाचार्या

द्वितीय क्रम तावदवालम्बन्त । पाश्चात्त्या विद्वासस्तत्रत्या मानवाश्च परिपन्थिनो विनाशमुखेनैव सङ्घर्षमपाकर्तुमीहन्ते, तेन च कलहस्तु केवल वर्धत एव । समरशिरसि व्यापृतैर्भूत्वा समरस्य समापनमिच्छद्भिः केवल पङ्केनैव पङ्किलता दूरीकर्तु व्यवस्यते । मिश्रदेशीयाना बेबिलोनियावासिना रोमदेशीयाना च सभ्यता विलय नातिचिरेण प्राप । यत प्रतिहिंसावृत्तिमवलम्ब्य जिजीविषन्ति स्म, स्वय च प्रभुत्व पाशविकशक्त्या धारयितुमचेष्टन्त । अपारेऽस्मिन् विश्वस्मिन् केवलमास्माकीनैवास्ति प्रत्नतमा परम्परा या सनातनी ध्रुवा च नैरन्तर्य भजमाना दृश्यते, यद्बलेनैव वयमद्याप्यखर्व गर्व बिभृम । वयमधुनापि तादृशीमेव जीवनसरणिमङ्गीकुर्म., यादृशी नैकसहस्र सवत्सरपूर्व पूर्वजैः प्रदर्शितासीत् । अस्माक सभ्यताया नैरन्तर्यस्य रहस्यमिदमेव यद्वय न कुत्रचित् कदाचिदपि निर्बल प्रसह्योन्मूल्य सङ्घर्ष विनेतुमैच्छाम, पर सर्वदा—"सर्वे भद्राणि पश्यन्तु सर्वे सन्तु निरामया" इति धिय धृत्वा समेषा सहभावाय सहकारायैवायतामहि । वैमनस्यस्य मूल परस्वापहार., जिघृक्षा, स्वोत्कर्षभावना, प्रभुत्वलिप्सा चेति मानवजगतो रहस्य विज्ञायैव वयमवर्तामहि । आर्याणा जीवनक्रम उभयैषणयो पराभव एवात्मविभुत्वस्याधारोऽगण्यत । "काम एष क्रोध एष रजोगुणसमुद्भव." इति न्यायेन काममूलक क्रोध एव सर्वासा विपदा पदमिति मत्वा पूर्वजानामादर्श.—"परोपकाराय सता विभूतय." इत्यनुशासनपरायणो बभूव । अमुमेवोद्देश्य लक्ष्यीकृत्य प्राचीना पुत्रपौत्रान् गुरुकुलेषु विश्वविद्यालयेषु विनेतुमनुशास्तु च प्रेषयन्ति स्म, यत आदानस्य भावना विसृज्य प्रदान शिक्षेरन्, शास्तुमीहा विसृज्य लोकमङ्गल ते साधयेयु. । जीवनरणाय सज्जीभवितु जगति च रणरणकमापादयितु नैव ते प्रावर्तन्त, अपि तु मानवसमाज सर्वथा सेवितुमेव । "त्यागाय सम्भृतार्थाना प्रजायै गृहमेधिनाम्" इत्यादर्शः किल पुरस्कृत. प्राचीनै राजर्षिभि । एव सति सङ्घर्षाय कुतोऽवकाशः ? सर्वे सुखेन जीवन यापयितु शक्नुवन्ति । जीवलोकेऽस्मिन् द्विविधा हि सृष्टि.—दैवी चासुरी च । प्रतीच्या' खलु समाजमासुरी प्रकृति निनीषन्ते, यदात्मनस्तुष्टिमेव ते चिचीषन्ते । तद्विपरीता तु दैवी प्रकृति. । या नर लोकमङ्गलायैव प्रवर्तयति, जनहित चात्महितमित्यनुभावयति । "अहिंसा सत्यमस्तेय क्षान्तिमार्जवमेव च" इत्यादयो दैवीसपदो नैसर्गिका धर्मा' । यदि वयमासुर भाव भजेम, विश्वस्य प्रलयोऽवश्यभावी । मानवोऽपि नवो दानवो भवेत् । यदि दैवीसपदा व्यवहरेम, दु खदवदहनेन दन्दह्यमानोऽय मानवो लोक' सुरभावमसुलभमपि साधयेन्नाम । विद्यालयत. पदवी प्राप्याधुना यूयमिमामेव पदवीमनुरुध्य वर्तध्वम् , येन स्वय सुखिनो भूत्वा प्रतिवेशिनोऽपि सुखिन. कर्तु प्रभवेत ।

नायमुपदेशो भव्योऽपि नव्यो मया क्रियते । अस्माक पूर्व आचार्या गुरुकुलेष्वेतादृश

## दीक्षान्तभाषणम्

-दीक्षान्तोत्सव व्यधु, अन्तेवासिनश्चान्वशासन्। यथा च श्रूयते—' वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति–सत्य वद, धर्म चर'' इति।

विज्ञानविभवेनाविष्कृतैर्विविधैर्घातकै शस्त्रास्त्रैर्विश्वयुद्धद्वय प्रावर्तत, महती च क्षतिर्लोकेऽजायत। तथापि तृतीयस्य महासमरस्य विभीषिका जनान् भाययति स्म, मानवताया आमूलमुन्मूलनमेव तत्र भयहेतुस्तर्जयति सर्वान् जनान्। प्रवर्तमाने युगे देशकालयोर्व्यवधान तु तिरोहितम्, तेन चैकतः प्रदीप्त' कूपीटयोनि· सर्वमेतज्ज्वालावलीढ कर्तुं प्रभवत्येव। एतादृशि व्यतिकरे किमस्माभिर्वर्गबन्ध विधाय परस्पर घातोपघातो विधेयः?

अह सर्वान् युष्मान् सप्रश्रय ब्रवीमि यद्वाराणसेयविद्यालयतो लब्धशिक्षादीक्षा यूय सैनिका नून भवथ, किन्तु शान्तिमार्गस्य न तु हिंसात्मकस्य। परस्पर धीरोदात्तभावे स्पर्धध्व न तु मिथो विनाशाय। कृष्णप्रह्लादादीनामादर्शचरितानि मा विस्मरथ। यतोऽन्तत "सत्यमेव जयते"नानृतम्। प्रह्लादा भूत्वा प्रह्लादका भवथ, ध्रुवा भूत्वा ध्रुवा भवथ, श्रवणकुमारा भूत्वा श्रवणातिथयो भवथ। शान्तिभटा अप्यकर्मण्या मा स्थ। पुरा बुद्धः प्रबुद्धशान्तिसन्देश ददन्नपि कर्मण्य एवाभवत्। अशोको नून सशोक जगदिदमशोक चकार। सर्वाश्चर्याणामाश्चर्यकरी सिद्धि महात्मा गान्धी स्वयत्न एव स्वहस्तगा व्यधात्। शर्मण्यदेश विजितवतो युद्धवीरानाङ्ग्लान् पलायने पटून् कृत महाभागो गान्धी महात्मा। आङ्ग्ला शर्मण्यान् अजयन्त। अस्माक तत्प्रभावेणोभावेव परास्तौ। नैव तावदस्माभिर्विपक्षिण· खेदिता, केवलमात्मानमेव तैर्भूयोभूय खेदितमपि कृत्वा सहमानैर्विजयवैजयन्ती समुद्धूता रक्तदुर्गे रक्तपात विनैव। प्रजापते सृष्टिक्रमेऽस्माक विजयविधिस्तु सर्वथाऽप्रतिम एव। अत एवास्माभि· सर्वेषु विषयेष्वहिंसाया एव प्रयोगो विधातव्य, येन स्वातन्त्र्यमधिगत्य वयमनुदिन समेषामादरास्पद पदमधिरोहाम। नास्ति सचय· परमाणुगुलिकानामस्मद्देशे, येन वैदेशिकाना मनसि दरो वादरो वा स्यादस्मद्विषये। अतोऽस्माक कृते सत्यस्याहिंसाया पन्था एव सर्वथा वरीयान्, यतोऽस्माक ज्ञान न केवल पुस्तकस्थमेव किन्त्वनुष्ठानानुबन्धि। "अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्र प्रणयन्नुपाधिभि·" विद्याना साङ्गोपाङ्गमधीतानामनवकेशित्व नाम। अत एव भूयो भूयः परामृश्यते—स्थितप्रज्ञस्य का भाषा, स्थितधी· कथमासीत, कथ वा व्रजेत? अस्य विद्यालयस्यान्तेवासिना स्नातकेन धृतिविधृतेन परोपकारोत्केन सोत्साहेन सर्वथा परेषामादर्शभूतेन भाव्यम्। यतो निर्बलस्य तितिक्षया, सबलस्य शौर्येण वा समुदाचारस्य निर्वाहो नैव भवितुमर्हति, पर शक्ताना क्षान्त्याऽशक्ताना च समुत्साहेनैव सत्त्ववृद्धिर्भवित्री। सेवाधर्म· स्वार्थत्यागश्च सभ्याना लक्षणम्।

मानवसमाजे महत्त्वश्रुतया परिमापक निदर्शनमप्यत्र वैपरीत्य नीत किल भौतिक-वादिभि । पुरा किल विद्वांसो विद्यानिधयस्तपोविभवा प्राथम्यमभजन्त, तदनु च ते तावदगण्यन्त ये खल्वात्मान लोकस्य रक्षायै न्ययुञ्जन्त । तार्तीयिकीमेव श्रेणि तेऽनुप्राविशन्त ये धनेनाढ्या आसन् । इदानी तु सर्वं विपर्यस्तमेव । धनिन एव सर्वत्र मान्या । काञ्चनोपचितिरेवापचिति-मूलम् । हन्त कीदृशोऽय व्यतिकरो यत—

खञ्जायितोऽधिमतिगञ्जापरोऽपि बत सञ्जायतेऽत्र धनदः ।

सञ्जाघटीति गुणगुञ्जायितस्य न तु गुञ्जायित च कनकम् ॥

क्रमोऽयमविलम्ब विपर्यासमर्हति । "गुणा पूजास्थान गुणिषु न च लिङ्ग न च वयः" इत्या-भाणकस्तु प्रयोगेऽपि योग सर्वथाऽर्हत्येव ।

पर च, आर्याणाम् "वसुधैव कुटुम्बकम्" इति भावनापि सम्यताद्योतिनी । सापि भावनाग्रहेलिमा गृहे गृहे जृम्भता नाम । वैषम्येऽपि वैविध्येऽपि समत्वमेकत्वमनुपश्यन्ती किल भारतीया परम्परा । एतासु सर्वासु महनीयासु भावनासु कुठाराघात क्रियते साम्प्रतिकेऽसाम्प्रते शिक्षाक्रमे । अध्यात्मशिक्षा, धर्मशिक्षा च सर्वत्र लुप्तप्रायैव । धर्मनिरपेक्षत्व नाम नैवाधार्मिकत्वमनात्मत्व वा । तथा सति समाज एकमनेकानुगत सामान्य नैवाविर्भवेत्, तदभावे च सर्वाङ्गीणाभिवृद्धिस्तु गन्धर्व-लेखेव स्यात । अतोऽर्जुनाय प्रदर्शित भगवतो वैश्वरूप्य ध्यात्वा जगदेकत्वभावनया यूयमेध-ध्वम् । अनेन समतासिद्धि सम्पत्स्यते । समदर्शित्वमुदेष्यति—शुनि चैव श्वपाके च पण्डिता सम-दर्शिन । समदर्शनेन यूय पण्डितत्वमात्मनोऽन्वर्थयितु शक्नुथ । यदुच्चावचधिया न कोऽपि समेधते । जाह्नवी सर्वत्रैव पुण्यसलिला तथैव मानवत्व सर्वत्र समानास्पदम् । उपदेष्टारश्च विद्वांसश्च सर्वदैव वन्दनीया ।

एतादृशमादर्श पुरस्कृतु शिक्षाक्रम पाठ्यग्रन्थाश्चाऽऽचरणचूड परिवृत्तिमर्हन्ति । सहकारिताम्, प्रीतियोगम्, कर्मण्यताम्, समदर्शिता च शिक्षयितु क्षमेण शिक्षाक्रमेण भाव्यम् । तत्र च संस्कृत-शिक्षाया एव योगो भृशमुपकारक स्यात् । अस्माक सस्कृतवाङ्मये धर्मार्थकाममोक्षरूपाणा परमपुरुषा-र्थानामवाप्तये प्रभूत साहित्यमुपलभ्यते । भूवलयस्य खगोलस्य ज्ञानमैतिह्य च समग्रतयोपलभ्यते । आयुर्वेद, वृक्षविज्ञानम्, शिल्पशास्त्रम्, श्येनशास्त्रम्, पाकशास्त्र चेति सकलमुपयोगि ज्ञान विज्ञान च संस्कृतवाङ्मयस्य महिमान ख्यापयत्येव । नाट्ये, सगीते, चित्रकर्मणि चाद्वितीयतास्य वाङ्मयस्य समेषा विदितचरानुभूतचरा च । आन्वीक्षिक्या चास्माक गौरव परान् गौरवमेव कारयति । अत संस्कृ-

## दीक्षान्तभाषणम्

नेयं वाक् सर्वासां भाषोपभाषाणामधिष्ठात्री प्रामुख्यं बोढुं सर्वथार्हा । नेयं भाषा मृता, अपि तु सर्वथा जीवितैव । यतः सूर्योदयादारभ्याऽऽस्नानसकल्पं रात्रिसूक्तपर्यन्तं नित्ये नैमित्तिके च कर्मणि संस्कृतभाषां विहाय प्राणधारणमपि वयं कर्तुं नैव पारयामः । अतः प्रतिजीवं जीवन्ती जीवयन्ती चेयं दैवी वाक् कथमुपरतेति व्याहर्तुं शक्यम् । इयं मूर्धनि विराजमाना सार्वभौमं ज्ञानराशिं वर्धयन्ती साम्राज्यपदवीमधिरूढा निजौजसातुलं महत्त्वं भजतीति युज्यत एव ।

संस्कृतविद्यायाः गौरवमधिकृत्यास्माकमस्मिता नास्तमिता नास्ति मिता न वा स्तिमिता । अत एव सर्वविधैरुपायैरियं पुरस्कर्तव्या । इयं पुनरपि लोकभाषापदमध्यारोपणीयैव । इयं च सर्वेषु विद्यालयेष्वनिवार्यतया पाठनीया, संस्कृतभाषाविभागस्तु सर्वेषु विश्वविद्यालयेषु समृद्धिं नेयः । अपरेषु च शास्त्रेषु विश्वविद्यालयेषु पाठ्यत्वेन प्रवर्तमानेषु संस्कृतवाङ्मये उपलभ्यमानास्तत्तच्छास्त्रग्रन्था निवेशनीयाः, संस्कृतमहाविद्यालयेषु केवलं साहित्यादिशास्त्रशिक्षा न पर्याप्ता, किन्तु संस्कृतविज्ञानानां शिक्षाप्यवश्यं देया ।

अत्र भवतां विद्यालयस्तु गौरवास्पदम्, यतो देशेऽस्मिन् संस्कृतशिक्षायाः प्राचीनतममिदं स्थानम् । अनेन प्रस्तुतं शिक्षाक्रममनुरुन्धानाः सार्धसहस्रसंख्याकाः विद्यालयाः सन्ति । सहस्रषोडशीं संख्यामतिवर्तमानान् छात्रान् प्रतिवर्षं परीक्ष्य संस्कृतविद्यायाः प्रसारं करोति । स्थान एव यदुत्तरप्रदेशस्य मुख्यमन्त्रिणो द्रागेवामुं विद्यालयं विश्वविद्यालयत्वं प्रापयितुं समीहन्ते ।

देशेऽस्मिन् तादृशा ग्रन्थागारेणापि भाव्यं यत्र विश्वस्मिन् यत्र कुत्राप्युपलभ्यमानाः संस्कृतग्रन्था मुद्रिताः, प्रत्यालिखिताः, हस्तलिखिता वा संगृह्येरन् । येनान्वेषका निरन्तरायं निरन्तरं वाङ्मयस्य गौरववृद्धिं कुर्युः ।

अस्यां दिशि प्रवर्तमाना अधिकारिणः सर्वथाभिनन्दनमर्हन्ति । कामयेऽहं यत्संस्कृतविश्वविद्यालया देशे भूयांसो भवेयुः । अवन्तीषूज्जयिन्याम्, दक्षिणापथेऽप्यन्यत्र च संस्कृतविश्वविद्यालया आशु स्थापनीयाः । त एव सर्वतः सुसंस्कृतान् नागरिकान् जनयितुं क्षमन्ते । आशासे चेयमस्माकं कामना भगवत आशुतोषस्य विधुशेखरस्य कृपाकटाक्षैरचिरेण सपन्ना स्यादिति ।

सर्वे विद्वांसोऽभिवर्धन्ताम् । गीर्वाणगीरभिवर्धताम् ।

ॐ भद्रं नो अपि वातय मनः ।

ॐ शान्तिः, शान्तिः, शान्तिः ॥

# कुलपतिभाषणम्

मान्या अध्यक्षमहोदयाः, समान्या अतिथयः श्रीआयङ्गारमहोदयाः, देव्यः, श्रद्धेया विद्वांसः, स्नातकाः, नागरिकाश्च !

काशी नाम भारतीयसंस्कृतेर्जन्मभूः, ऋषीणां मुनीनामाचार्याणां च ज्ञानतपोभूः, महापुरुषाणां लीलाभूमिश्चास्ति । अस्या इतिहासो भारतीयसंस्कृतेरितिहास इति नात्युक्तिमावहति । पुण्यक्षेत्रमिदं यैस्तपस्विभिर्विद्वद्भिर्महापुरुषैश्च तीर्थीकृतं ते सर्वेऽप्यस्माकं सततं वन्दनीयाः । तस्य परिपूतस्य काशीजनपदस्य गौरवभूतोऽयं राजकीयसंस्कृतमहाविद्यालयः । तस्य नवमोपाधिवितरणोत्सवावसरे समागतानां तत्रभवतां भवतामभ्यागतानां वयं हार्दं स्वागतं विदध्मः । लोकसभोपाध्यक्षाणां श्रीअनन्तशयनमायङ्गारमहोदयानां यैर्व्यस्तकार्यक्रमेऽपि महोत्सवमिमं सफलयितुं स्वीयोऽमूल्यः समयः प्रादायि, विशेषेण स्वागतं व्याहरामः ।

अस्याः काश्या महनीयपरम्परायामस्य राजकीयसंस्कृतमहाविद्यालयस्य स्थापनं नाम भारतीयेतिहासेऽष्टादशशताब्द्या महत्त्वाधायकं कार्यमस्ति । संस्कृतवाङ्मयस्य संरक्षणप्रचारसंवर्द्धनेष्वयं महाविद्यालयो येन प्रकारेण क्रमिकामुन्नतिं विकासं च व्यधात्, तस्य क्रमबद्धेतिहासः संस्कृतशिक्षायाः स्वरूपज्ञानाय तस्याश्च भाविनवनिर्माणाय सदैवापेक्षितो भविष्यति । एकनवत्युत्तरसप्तदशे (१७९१) वर्षे लार्डकार्नवालिसमहोदयानामादेशेन संस्कृतग्रन्थानां संग्रहाय तेषामध्ययनाध्यापनेन विदेशिशासकान् प्रति हिन्दुष्वनुरागमुत्पादयितुं चास्य महाविद्यालयस्य संस्थापनमजायत । वाराणस्यास्तात्कालिकरेजिडेण्टश्रीयुतजोनाथनडङ्कनमहाशयस्य प्रेरणयाऽत्र सर्वप्रथममन्यशास्त्रैः सार्धं वेदपुराणायुर्वेदानां फारसीभाषायाश्चाध्यापनप्रबन्धः प्रावर्ति । महाविद्यालयस्य प्रबन्धः पुरैकया समित्याऽभवत् किन्तु चतुश्चत्वारिंशदुत्तराष्टादशे (१८४४) वर्षे प्रधानाचार्यपदं सृष्टमभूत् । तत्र श्रीजेम्योरमहोदयानां नियुक्तिर्जाता । तत्पश्चात् षट्चत्वारिंशदुत्तराष्टादशे (१८४६) वर्षे डा०वैलेन्टाइनमहाशयाः प्रधानाचार्यपदमभजन् । तदैव पाठ्ये गणितेतिहासविज्ञानाङ्गलभाषाप्रभृतीनां विषयाणां समावेशोऽभूत् । अथ च पाश्चात्यज्ञानेन छात्रानुपकर्तुं सप्तचत्वारिंशदुत्तराष्टादशे (१८४७)

---

१ काशिकराजकीयसंस्कृतमहाविद्यालयस्य नवमोपाधिवितरणोत्सवावसरे महाविद्यालयप्रधानाचार्येण श्रीमता कुबेरनाथशुक्लमहोदयेनाधीतम्—सम्पादकः ।

## कुलपतिभाषणम्

'वर्षे ऐंग्लोसंस्कृतविभागस्यापि स्थापना समजायत । अत्र विभागे शताधिका आङ्गलग्रन्था संस्कृतग्रन्थाश्चानूदिता अभवन् । षट्षष्ट्युत्तराष्टादशे (१८६६) वर्षे श्रीग्रिफिथमहोदया. प्रधानाचार्यपदमारूढा' । तेषामाध्यक्ष्ये पण्डित(काशीविद्यासुधानिधि)नामिकाया अनुसन्धानपत्रिकाया' प्रकाशनं प्रारभ्यत । तस्या परःशतानाममुद्रितानां दुर्लभग्रन्थानां प्रकाशनसंपादनानुवादा अभूवन् । अस्य महाविद्यालयस्येतिहासे डा०थीबो, तथा डा०वेनिसनाम्नोर्विदुषोरध्यक्षयो. कार्यकाल संस्कृतशिक्षाया. प्रगतौ चिराय स्मरणीयो भवेत् । डा०वेनिसमहोदयाश्चतुर्दशोत्तरैकोनविंशे ( १९१४ ) वर्षे सरस्वतीभवनग्रन्थालयं समस्थापयन् । अस्मिन् प्रकाशनसंपादनानुसन्धानक्षेत्रेषु प्रशस्तं कार्यं समभवत् । प्राच्यविद्याया क्षेत्रे पुरातत्त्वे च सर्वप्रथमं गवेषणासूत्रपातस्य मुख्यं श्रेयो डा०वेनिसमहोदयस्य तदन्तेवासिनां चास्ति । एभि कार्यजातैरस्य महाविद्यालयस्य यशो देशेषु विदेशेषु च प्रासरत् । इदानीं प्राच्यविद्याक्षेत्रे देशीयविदेशीयविदुषां तथाऽखिलानां विद्याप्रतिष्ठानानां दृष्टिरस्मिन् महाविद्यालये सोत्कण्ठं सन्यपतत् । फलत. स्वर्गीयश्रीरामकृष्णभाण्डारकरमहाभागानां प्रयत्नैः पुण्यपत्तने स्थाप्यमानाया प्राच्यविद्यापरिषद साभापत्यमस्य महाविद्यालयस्याध्यक्षाय स्वर्गीयडा०गङ्गानाथझामहोदयाय समर्प्यत । झामहोदयानां कार्यकालेऽस्य महाविद्यालयस्य परीक्षाणां लोकप्रियत्वं परीक्षार्थिसंख्या चोत्तरोत्तरं समवर्धत । शासनेन तदानीमेका संस्कृतशिक्षापरिषदपि स्थापिता । तदानीमेव सरस्वतीभवनग्रन्थमालाया सरस्वतीभवनानुशीलनपत्रिकायाश्च प्रारम्भोऽजायत । तदनु म०म०श्रीगोपीनाथकविराजमहाभागानामाध्यक्ष्यं समुदलसत् । ते हि स्वीयेन व्यापकपाण्डित्येन सरस्वतीभवनग्रन्थमालायामनेकामूल्यग्रन्थरत्नानि समपादयन् प्राकाशयंश्च । एते हि परःशतेषु प्राचीनेषूपेक्षितेषु च दर्शनागमशास्त्रीयग्रन्थेषु विद्वज्जनाभिरुचिं समवर्धयन्त ।

अस्य महाविद्यालयस्येतिहासे वाराणसेयानां तेषां प्रकाण्डविदुषां साऽविच्छिन्ना परम्परा सदा शीर्षस्थानमधिरोहेत्, यया परम्परागतप्रौढपाण्डित्यद्वारा संस्कृतग्रन्थानां दुरूहग्रन्थी समुद्धेत्तुमेव स्वजीवनं समुपाह्रियत, तथा च विलुप्तप्रायशास्त्राणामध्ययनाध्यापनद्वारा तेषां संरक्षणमप्यक्रियत । अस्या परम्पराया म० म० बापूदेवशास्त्रि–म० म० कैलाशचन्द्रशिरोमणि–म० म० गङ्गाधरशास्त्रि–म० म० दामोदरशास्त्रि–म० म० ताल्याशास्त्रि–म० म० शिवकुमारशास्त्रि–म० म० सुधाकरद्विवेदिपण्डितश्रीदेवनारायणत्रिपाठिप्रभृतीनां जगत्प्रसिद्धानां विदुषां नामान्युल्लेख्यानि । एषु विद्वत्सु केनचिदेकेनापि काऽपि शिक्षासंस्था धन्या भवितुमर्हति ।

उपर्युक्तेन संक्षिप्तेनैतिहासिकपर्यवेक्षणेनास्य महाविद्यालयस्य किञ्चिदिव दिग्दर्शनं संपाद्यते, तथा संस्कृतशिक्षाया' शोभने भाविनिर्माणे पर्याप्तं बलं चाधीयते । नूनमेव विदुषामिय लोकोत्तर

तपस्या तमपूर्वं कालं प्रतीक्षमाणाऽऽसीत्, यस्मिन्नसौ सर्वतोभावेन पल्लविता, पुष्पिता, फलवती च स्यात्। चिराद् भारतीयप्राङ्गणे स्वातन्त्र्योदयस्य सुप्रभातमाविरभूत्। विभिन्नराज्यानां शासनस्य दायित्वं भारतीयस्कन्धेष्वापतत्। उत्तरप्रदेशीयशिक्षाया भारो महामनीषिणां डा०सम्पूर्णानन्द-महोदयानां सुयोग्ययोः स्कन्धयोः समवातरत्। परिणामतः सर्वप्रथममुत्तरप्रदेशे संस्कृतशिक्षाया पुनरुज्जीवनपथेऽग्रेसरत्वमभजत्। अयं कालो वर्तमानयुगस्य प्रारम्भकाल इति वक्तुं शक्यते।

इदानीं डा०श्रीमङ्गलदेवशास्त्रिमहोदयानामाध्यक्ष्यं प्रारभत। सप्तत्रिंशदुत्तरैकोनविंशे (१९३७) वर्षे राष्ट्रियसभासदां (काङ्ग्रेस) शासनारूढत्वं आधुनिकभारतस्येतिहासे प्रथमवारं राष्ट्रियदृष्ट्या संस्कृतशिक्षाविषये विचारः प्राचलत। डा०भगवद्दासमहाशयानामाध्यक्ष्ये संस्कृत-कालेजपरीक्षापाठ्यक्रमसुधारसमितेस्तथा श्रीयज्ञनारायणोपाध्यायानामाध्यक्ष्ये महाविद्यालयपुनःसङ्घ-टनसमितेश्च स्थापनमभूत्। अनयोः समित्योः संस्तुतिभिर्नवनवा आशाः समुत्पादिताः, किन्तु हन्त! विदेशीयं शासनं काङ्ग्रेसशासनेन सममेव समग्रं प्रयासं व्यर्थतामनयत्।

स्वातन्त्र्यस्यैतिहासिके वर्षे महाविद्यालयस्याभिनवीकरणप्रयासः प्रारभ्यत। परिणामतः सप्त-चत्वारिंशदुत्तरैकोनविंशे (१९४७) वर्षे सार्धशताब्दीमहोत्सवः समायोजितः। तदाप्रभृत्येव महाविद्या-लयस्य वर्तमानदीक्षान्तसमारोहक्रमोपक्रमः प्रावर्तत। अस्मिन्नेव समये सरस्वतीभवनग्रन्थालयस्य विकासायानुसन्धानमन्दिरस्य सङ्ग्रहालयस्य च स्थापनमजायत। अनुसन्धानमन्दिरस्य तात्कालिक-कार्येषु हस्तलिखितग्रन्थानां प्रामाणिकसूचीनिर्माणम्, उत्तराध्ययनाय विशिष्टाचार्यवाचस्पत्याख्य-च्छात्रवृत्तिव्यवस्था, शोधपूर्णनिबन्धान् प्रकाशयितुं "सारस्वती सुषमा" नाम्न्याः संस्कृतत्रैमासिक-पत्रिकायाः प्रकाशनम्, एवमादीनि महत्त्वाधायकानि कार्यजातानि प्रारब्धानि। अनेकवर्षाणां प्रयासैर्गतवर्षे वेदोपनिषत्कर्मकाण्डविषयाणां सूची प्रकाशिता। ऐषमो धर्मशास्त्रपुराणेतिहास-विषयाणां सूची प्रस्तूयते।

सारस्वत्याः सुषमायाः सम्पादनस्येदं नवमं हायनम्। एतया विशिष्टनिबन्धानाम्, प्रत्याख्यान-सङ्ग्रहसुवर्णमुक्तासंवाद-पथिकजनपातकचिन्तनस्मृतनामकग्रन्थानां च संपादनप्रकाशने अभ्यक्रि-येताम्। अथापि काण्वसंहिताया आनन्दबोधभाष्यस्य, प्रत्यङ्गिरासूक्तस्य वासुदेवभाष्यस्य, नारा-यणप्रणीतबीजगणितस्य च प्रकाशनमनुवृत्तमस्ति। आगामिषु वर्षेषु प्रकाशयितुं नर्तन-निर्णयः, उपाध्यायनिरपेक्षया टीकया सह कामन्दकीयनीतिसारः, पारसीकप्रकाशः, सिद्धान्त-चूडामणिः, कपिष्ठलकठगृह्यसूत्रमित्यादयो महत्त्वपूर्णा अप्रकाशिता ग्रन्थाः प्रस्तूयन्ते। "सारस्वती सुषमा"-द्वारा देशीयविदेशीयानुसन्धानप्रतिष्ठानैः सम्बन्धस्थापनं जातम्।

## कुलपतिभाषणम्

कलकत्तासुप्रीमकोर्टन्यायालयस्य प्राचीनव्यवस्थापत्रसंग्रहस्य प्रकाशनोद्योगः सरस्वतीभवन-कार्येषु प्रस्तुतवर्षस्यैकमत्यर्थं महत्त्वपूर्णं कार्यं विद्यते।

अष्टचत्वारिंशदुत्तरैकोनविंशे (१९४८) वर्षे पुनः शिक्षणमत्र समुद्घाट्यत। अद्य यावद्-नया योजनया प्रायः ५०० पञ्चशतमध्यापकाः प्रशिक्षिताः। पञ्चाशदुत्तरैकोनविंशे (१९५०) वर्षेऽखिलभारतीयसंस्कृतपरीक्षाः समीकर्तुं तासां पाठ्यक्रमं उपयुक्तं परिवर्तनं विधातुं च आचार्यनरेन्द्रदेवमहोदयानामाध्यक्ष्येऽखिलभारतीयसंस्कृतशिक्षासन्तुलनसमेलनमायोजितम्। अस्य समेलनस्य निश्चयानुसारं पाठ्यक्रमे मौलिकं परिवर्तनमभूत्। पाठ्ये आधुनिकविषयाः समाविष्टाः, शासनेन च संस्कृतपरीक्षाणां नवीनमान्यताप्रदानेन युगोचितं महत्त्वमभिवर्धितम्। एतेन संस्कृत-समाजे नवाशाः समुत्पन्नाः। नव्यपाठ्यविधिः संस्कृतच्छात्रेषु नवजीवनमिवोदैषीत्। एतेन परी-क्षार्थिनां संख्यास्वापेक्षिकी वृद्धिश्च संजाता। किन्त्वेको विषमः प्रश्नः पुरः समुपस्थितः, स चानुवेलं समाधानमपेक्षते। भूमिपतित्वप्रथाया उन्मूलनेन देशीयराज्यानां विलयनेन च संस्कृत-पाठशालानामायस्रोतः शुष्कप्रायमिव। पाठ्यक्रमेऽनेके आधुनिका विषयाः समावेशिताः, येषां पठनपाठनव्यवस्था अर्थाभाववशात् पाठशालाः समीचीनतया कर्तुं न प्रभवन्ति। पाठशालाभ्य इदमेकं भीषणमर्थकष्टं समुपस्थितम्, यस्य शासनेन निराकृतिर्विधेया, अथ च पाठशालाभ्यः पर्याप्तमर्थसाहाय्यं देयं येन तासां विकासो नावरुन्ध्यात्।

सप्तचत्वारिंशदुत्तरैकोनविंशे (१९४७) वर्षे प्रथमदीक्षान्तसमारोहावसरे तदानीन्तनाः मुख्य-मन्त्रिणः पं० गोविन्दवल्लभपन्तमहोदयास्तथा शिक्षामन्त्रिणः श्रीसम्पूर्णानन्दमहोदयाश्चेमं महा-विद्यालयं संस्कृतविश्वविद्यालयरूपे परिवर्तयितुमुदघोषयन्त। इयं घोषणा संस्कृतमहाविद्यालयस्य गौरवमाकलय्यैवासीत्।

मया संक्षेपेणास्य महाविद्यालयस्य प्राचीनं गौरवं परिचायितम्। अद्यापीयं महाविद्यालयः स्वीये क्षेत्रे कस्माच्चिदपि अन्यस्मान्महतो विश्वविद्यालयाद् विशिष्टं महत्त्वं पुष्णाति। अनेन सम्बद्धा उत्तरप्रदेशीया बाह्याश्चानेकसहस्रपाठशालाः सन्ति, यासु पञ्चाशदुत्तरशतद्वयपाठशालाः (२५०) उत्तरप्रदेशाद् बहिः सन्ति। केवलमुत्तरप्रदेशेऽस्य परीक्षाकेन्द्राणि चतुश्चत्वारिंशत् (४४), ततो बहिः—मध्यभारते, मध्यप्रदेशे, मोहमय्याम्, सौराष्ट्रे, राजस्थाने, विन्ध्यप्रदेशे, हिमाञ्चले तथा नेपाले एकविंशतिः सन्ति। अस्य परीक्षार्थिसंख्या (१२०००) द्वादशसहस्र-तोऽप्यधिका। अस्य परीक्षायां देशस्य समग्रराज्यानां छात्राः प्रविष्टा भवन्ति। अस्य प्रतिष्ठानस्य गरिम्णाकृष्टचेतसो न केवलमुत्तरप्रदेशस्यापि तु दक्षिणभागस्य आसामप्रदेशस्य, मणिपुरादि-

सीमान्तप्रदेशानाम् , नेपालपाकिस्तानब्रह्मदेशलङ्काप्रभृतिदेशाना चापि छात्रा विद्योपार्जनार्थं प्रतिवर्षं गमायान्ति। अस्य महाविद्यालयस्येदं प्रस्तुत रूप कस्यापि विश्वविद्यालयस्य गौरवायालम्। वस्तुगत्या विशालेऽस्मिन् देश इयमेवैका सस्था या लघुनेव प्रयत्नेनान्ताराष्ट्रिय सस्कृतिप्रतिष्ठान भवितुमर्हति।

विश्वस्य प्रगतिशीलेषु देशेषु सस्कृतभाषायै यन्महत्त्व प्रदीयते तदवधार्यैद वक्तु युज्यते यद्देववाण्या इद भव्यं मन्दिर समग्रस्य विश्वस्य सपत्ति । कस्याऽविदितमिदं यदष्टादशवर्षवयस्क युवानमारभ्य नवतिवर्षवयस्क वृद्ध यावत् सस्कृतविद्वांसो महोदधेर्वक्षःस्थल विदारयन्त उन्नता दुर्लङ्घ्याश्च पर्वतशृङ्खला उल्लङ्घयन्त आतपवर्षिणि दिवाकरे भृश तप्यमाने क्षितिजमस्पृशन्ती-र्मरुभूमी पादैराक्षुन्दन्तो भारतीयसस्कृते शुभसन्देशानादाय मानवाना हिताय सुखाय चाऽऽसह-स्राब्द दक्षिणपूर्वैशियामहादेश मध्यैशियाख्य देश चीनजापानयोर्विशाल भूखण्ड च परिव्याप्त-वन्त । कि वय स्वकीयैः पूर्वपुरुषैः प्रतिवेशिदेशेषु प्रतिष्ठापित सांस्कृतिकसम्बन्धमत्र स्वतन्त्रे भारत उपेक्षितु प्रभवाम ? अष्टादशशताब्दीत पाश्चात्त्यविद्वद्भि सस्कृतवाङ्मयस्य क्रियमाणान्य-ध्ययनाध्यापनाऽऽलोचनकार्याणि समुपेक्ष्य सस्कृतस्य समुचितामभिवृद्धि कर्तुमर्हाम ? तिब्बती चीनी जापानी-जर्मन-फ्रेंच रशियनभाषासु निहित सस्कृतज्ञानमुपेक्ष्य कि संस्कृतस्यापेक्षित समग्र ज्ञानमर्जितु प्रभवाम ? नो चेत , तर्ह्येकेन बृहता सस्कृतिप्रतिष्ठानेनाऽवश्य भाव्यम्, येन पूर्वोक्त कार्यजात सम्यक् सपाद्येत । एत महाविद्यालयं सस्कृतविश्वविद्यालयरूपे परिणमय्यैवैतत् कार्यमञ्जसा कर्तुं शक्यते। यदि अरबीभाषया मिश्रदेशे, हिब्रूभाषया इजराइलदेशे, लैटिन-भाषया अमेरिकाया च विश्वविद्यालया परिचाल्यन्ते तदा पूर्वोक्तान्महत सांस्कृतिकान् समार-म्भान्निर्वोढु भारते तत्रापि काश्या सस्कृतविश्वविद्यालय कथ न प्रतिष्ठापनीय ?

भवतु, भारतीयवाङ्मयस्य सरक्षण प्रचारश्च भारतस्य पवित्र कर्तव्यम्। एतत्सपादनाया-स्माभि स्वीयप्रौढपाण्डित्यस्य सर्वतोभावेन सरक्षण तस्य यथेष्ट सवर्द्धन च कर्तव्यम्। गवेषणाया आधुनिका पन्थानोऽपि अवलम्बनीया । स्वीयसांस्कृतिकनिधे सरक्षणायाऽस्माभिरेशिया-महादेशस्य तिब्बतीचीनीजापानीभाषा , यूरोपस्य फ्रेंचजर्मनरशियनभाषाश्च स्वीयाध्ययना-ध्यापनक्रमे सन्निवेश्या । अन्यथा वय न केवल सस्कृतस्याऽऽवश्यकज्ञानेनैव वञ्चिता भवेम, प्रत्युत भारतस्य सांस्कृतिकेनेतिहासेनाप्यपरिचिता एव तिष्ठेम। आसा भाषाणा ज्ञानमन्तरा वयं ता पर सहस्र रचना कथ प्राप्स्याम, यास्तासु तासु भाषासु मूलतया रूपान्तरिता वा सुरक्षि-तास्तिष्ठन्ति । पालिप्राकृतापभ्रंशभाषाज्ञान विना सस्कृतस्य सस्कृतेश्चापि ज्ञानमपूर्णम्।

# कुलपतिभाषणम्

प्राचीनप्रौढपाण्डित्यस्य सरक्षण विभिन्नशास्त्राणा तदवान्तरशाखाना तुलनात्मकमध्ययन विना तत्सबद्धप्राचीनार्वाचीनविषयाणामपेक्षितज्ञान विना च दु.शकम्। भारत एतादृशी काप्येका शिक्षासस्था नास्ति यस्यामवान्तरशाखाभिर्विशिष्टशास्त्राणामध्ययनाध्यापन यथोचित सपादित स्यात्। उत्तरभारते वेदान्तनाम्ना केवल शाङ्करस्यैव, दक्षिणे केवल रामानुजस्यैव वेदान्तस्याध्ययनाऽध्यापन क्रियते। वेदान्तदर्शनस्य शाखानामुत्पत्ते, तासा विकासस्य पारस्परिकसबन्धस्य च तुलनात्मकज्ञानाय मध्वनिम्बार्कवल्लभभास्करादिशाखाना समुचिताध्ययनव्यवस्थाऽतिमात्रमपेक्ष्यते। एवमेव भारतीयन्यायशास्त्रस्य सर्वाङ्गपूर्णाध्ययनार्थ न केवल काणादगौतमीयन्यायस्यापि तु बौद्धजैनन्याययोराधुनिकतर्कशास्त्रस्य च ज्ञानमपेक्ष्यते।

वेदाना स्वाध्यायप्रबन्धोऽपि सर्वत्रैवाऽपर्याप्त। उपलब्धशाखाभिश्चतुर्णा वेदाना प्राच्यप्रतीच्यार्थविधिना सममध्ययन त्वपेक्षितमेव। तत्सम्यक्कर्तु मीमासाधर्मशास्त्रयोरप्यध्ययनाध्यापनप्रबन्धोऽपेक्ष्यते। यज्ञाना प्रयोगज्ञानाय यज्ञपात्रसग्रहोऽपेक्ष्यते।

उत्तरभारते व्याकरणाध्ययनप्राधान्य विद्यते। किन्तु तदपि तावत्पर्यन्तमङ्गविकलमिव, यावत्प्रातिशाख्यनिरुक्तशिक्षाणा पाणिनीयेतरव्याकरणै सार्धमाधुनिकभाषाशास्त्रस्य चाध्ययनस्य समुचित प्रबन्धो न स्यात्। तेषा दर्शनानामपि पठनपाठनप्रबन्धोऽपेक्षितो येषामध्ययनपरम्पराऽनेकाभि शताब्दीभिरुच्छिन्नेव लक्ष्यते। ते च शैवशाक्तजैनबौद्धागमदर्शनादय।

भारतीयस्वातन्त्र्येण साक संस्कृतस्य समानमपि वर्द्धतेऽनुदिनम्। यतो राष्ट्रभाषाया महत्तमे पदे हिन्दी समासीना विद्यते। राष्ट्रभाषाया कोश. सस्कृतस्य शब्दसपत्त्या भावसपत्त्या च पूरयिष्यते। नूनमेव देशेषु विदेशेषु च भारतीयसस्कृते प्रचारसाधन राष्ट्रभाषैव स्यात्। सा च यद्यस्माभि स्वीयभावरत्नैर्न पूर्यते तर्हि भारतीयसस्कृतिप्रसारो दूरमास्ता राष्ट्रभाषामुखेनाऽभारतीयभावतत्त्वाना प्रतिष्ठा वर्द्धिष्यते। हिन्दी नाम सस्कृतस्यैव निष्पत्ति.। आगामिषु केषुचिद्वर्षेषु सा विश्वविद्यालयेष्वप्यध्ययनाध्यापनस्य, अन्ताराष्ट्रियसबन्धनिर्वाहस्य च पूर्णरूपेण साधन भविष्यति। एव स्थिते कथमपि सोपेक्षितुं न शक्यते। ननु लोकभाषाया उपेक्षाऽपि किमर्थ कर्तव्या। तामुपेक्ष्यास्माभि. सस्कृतसाहित्ये जीवित भावतत्त्वमप्याधातु न शक्यते।

राष्ट्रहित सास्कृतिककार्य चावेक्ष्यास्माभि स्वीयप्राचीनग्रन्थरत्नाना हिन्दीभाषायामनुवादो विधातव्य। तदर्थमेका सुविचारिता विस्तृतयोजनापेक्ष्यते, यया नियतावधावेवेद पवित्रमनुष्ठान पूर्येत।

अद्यत्वे नूतनाना दर्शनविज्ञानराजनीतीना प्रादुर्भाव समवलोक्यते। तैर्नवनवा समस्या समुत्पादिता। तासा प्रतिविधानायाद्यतन विचारशील जगदस्मान् साभिप्राय प्रेक्षते। इत्थ-

मथ प्राचीनज्योतिषायुर्वेदविज्ञानान्यपि नूतनाविष्कारैर्विज्ञानैश्च समन्वितानि भवन्तु । एतदर्थं नव्यशास्त्राणां प्रयोगाणां च साहाय्यमपेक्षितम् , यत्रोभयो. सिद्धान्ता. प्रयोगाश्च स्यु' ।

संस्कृतशिक्षायां प्राचीनपरम्परया ग्रन्थानां प्रौढपाण्डित्यस्य महत्त्वं निःसंशयं मूर्धिन स्थितं वर्तते । किन्तु तदनन्तरं द्वितीयं महत्त्वपूर्णं स्थानमनुसन्धानस्य तुलनात्मकस्याध्ययनस्यैव । तदर्थमप्रकाशितानां दुर्लभानां च हस्तलिखितग्रन्थानां संग्रहः आवश्यकः । राजकीयाधारेण समस्तदेशादेशाममूल्यहस्तलिखितग्रन्थानां सचयोऽपेक्षित । एतदर्थमेकतस्तिब्बतचीनप्रभृतिदेशेभ्यो हस्तलिखितग्रन्थानां संग्रहो विधेय , अपरतश्च कठोरया राजाज्ञया हस्तलिखितग्रन्थानां पुरातत्त्वसामग्रीणां च विदेशगमनं निषेद्धव्यम् , अथ च बहिर्गतानाममूल्यग्रन्थरत्नानां प्रतिलिपयो माइक्रो फिल्मयन्त्रद्वाराऽन्येन वा साधनेन कारयितव्याः । अप्रकाशितानां दुर्लभहस्तलिखितग्रन्थानां प्रामाणिकं संपादनं प्रकाशनं चापरं मुख्यं कार्यम् । एतदर्थं प्रभूतं साहाय्यमपेक्षितम् । ग्रन्थानां प्रामाणिकसंस्करणाय, प्रकाशनाय चैकेन स्वतन्त्रेण बृहदायोजनेन भवितव्यम् ।

भवतां समक्षं संक्षेपेणैते केचन प्रस्तावा प्रस्तुता । तेषां पूर्तिः संस्कृतशिक्षाया अभ्युदयायावश्यकी ।

किमेतानि महत्त्वाधायकानि कार्याणि कैश्चिल्लघुसमारम्भैः संपादयितुं शक्यन्ते ? मया सप्रश्रयं निवेद्यते यदेषां प्रभूतसाहाय्यसापेक्षाणां महत्तमानां कार्याणां सिद्धिरनुभवगरिमाणं साधनसम्पन्नतां कुशलतां चापेक्षते । तेषां पूर्तिरस्य महाविद्यालयस्य संस्कृतविश्वविद्यालयपरिणतावेव संभविष्यति । अस्य महाविद्यालयस्य तपसो नैसर्गिकं फलं राष्ट्रस्य सांस्कृतिकं निर्माणम् । अस्य महाविद्यालयस्य गौरवान्वितमतीतं भव्याय महनीयायानागताय सातिशयं कल्पते ।

निराशोऽपि संस्कृतसमाज उत्तरप्रदेशीयशासनस्य शुभसङ्कल्पेन भृशमाश्वस्त । अत्र महामनीषिणां डा०सम्पूर्णानन्दमहाभागानां मुख्यमन्त्रिपदारोहणेन संस्कृतजगति नवचेतना समभ्युदिता । सौभाग्येनास्माकं समान्या शिक्षामन्त्रिण श्रीहरगोविन्दसिंहमहोदया अस्य महाविद्यालयस्य महतेऽभ्युदयाय बद्धपरिकरा सन्ति । अन्ते च भगवन्तं मङ्गलमयं भूतभावनं काशीविश्वेश्वरं प्रार्थये यदसौ अस्मासु सुरभारत्या सर्वविधाभ्युदयाय क्षमतामादधीत ।

सर्वे कुशलिन सन्तु सर्वे सन्तु निरामया. ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दु'खभाग्भवेत् ॥
ॐ शान्तिः, शान्ति', शान्ति ॥



मनीषिधौरेयाः सुरभारतीसमाराधनगृहीतदीक्षा उत्तरप्रदेशमुख्यमन्त्रिणो डा०श्रीसम्पूर्णानन्दमहोदयाः ।

# सम्पादकीयम्

## संस्कृतोन्नायको डा०श्रीसम्पूर्णानन्द

गीर्वाणवाणीसमाराधनसश्रितव्रतो मनीषिप्रवरो डा०श्रीसम्पूर्णानन्दमहानुभाव इदानीमुत्तर-प्रदेशमुख्यमन्त्रित्वधुरमुद्वहतीति सस्कृतसेविना समेषा चेतास्यानन्दोल्लासभरनिर्भराणि समुल्लसन्ति। उत्तरप्रदेशीयशिक्षामन्त्रिपदमलङ्कुर्वतानेन महानुभावेन सस्कृतोन्नत्यै सुबहु प्रयतितम्। अतीतेषु विशतिवर्षेषु सपादिताना सस्कृतोन्नमनकार्यव्रातानामितिहासस्तस्यैव प्रयत्नाना परिणति।

ख्रिष्टीयाष्टादशी शताब्दी सस्कृतशिक्षाभ्युदये महत्त्वस्य काल। सस्कृतशिक्षाया सरक्षणाय समुन्नत्यै च काश्यामेकनवत्युत्तरसप्तदशशततमे वर्षे सस्कृतमहाविद्यालय समस्थाप्यत। तदारभ्याद्य यावदिम महाविद्यालय केन्द्रत्व परिकल्प्य शासन सस्कृतशिक्षामुत्तरोत्तर प्रासारयत्। यथार्थता भारतेऽस्य महाविद्यालयस्य दीर्घकालिकमितिवृत्त नाम सस्कृतशिक्षाप्रसारस्यैवेतिहासः। वैदेशिक-शासनसमयेऽपि महाविद्यालयेन सस्कृतस्य यावानभ्युदय समपादि, विश्वस्मिन् कस्यापि प्राक्तनसास्कृ-तिकसस्थायै स्पृहणीयमेव तत्।

१९३७ वर्षे काङ्ग्रेसाधिकारिणा शासनारूढत्वे साम्प्रतिकभारतेतिहासे प्राथम्येन सस्कृत-शिक्षामधिकृत्य राष्ट्रसमतो विचारः समजायत। सम्पूर्णानन्दमहोदयस्येव श्रेयोभागित्वमेतत्सर्वस्येति विदितचर तदभिज्ञानाम्। शासनभारग्रहणसमकालमनेन महाभागेन १९३८ वर्षे डा०भगवानदास-महोदयानामाध्यक्ष्ये सस्कृतकालेजपरीक्षापाठ्यक्रमसुधारसमिति, श्रीयज्ञनारायणोपाध्यायानामध्य-क्षत्वे च कालेजपुनःसङ्घटनसमितिश्च स्थापिता। निरुक्ताभ्यामुभाभ्या समितिभ्या सस्कृतपाठ्य-पद्धति महाविद्यालयस्य भावि स्वरूप च पूर्णतया न्यरूप्यत। तन्निर्दिष्टाना प्रस्तावाना कार्यान्वयात् प्रागेव काङ्ग्रेसशासन प्रच्याव्य विदेशीयशासन तस्याखिलमेव प्रयासमवारुणत्। १९४७ वर्षे पुन श्रीसम्पूर्णानन्दमहोदय शिक्षामन्त्रित्वमलञ्चकार। इदानी पूर्वापेक्षयाऽप्यधिकेनोत्साहेन सस्कृत-शिक्षोन्नतिमवदधौ। एव स्थिते १९४७ वर्षे महाविद्यालयस्य सार्धशताब्दीमहोत्सव समपाद्यत। तत्सममेव प्रथमदीक्षान्तसमारोहोऽपि समायोजित। तस्मिन्नेव हायने श्रीभगवानदाससमिति-प्रस्तावानाश्रित्य पाठ्यक्रमे नूतनानि परिवर्तनानि परिवर्द्धनानि च स्वीकृतानि। द्वितीयोपाधिवितरणो-त्सवावसरे (१९४८) च श्रीसम्पूर्णानन्दस्यानुरोधमनुभावयतोत्तरप्रदेशस्य तदानीन्तनमुख्यमन्त्रिणा

माननीयश्रीगोविन्दवल्लभपन्तमहोदयेन महाविद्यालय विश्वविद्यालयत्वेन परिणमयितुमुद्घोषितम् । तदानीमेव सरस्वतीभवनपुस्तकालयविकासायानुसन्धानमन्दिरस्य सग्रहालयस्य च स्थापना व्यधीयत । श्रीसम्पूर्णानन्दप्रैषयैवानुसन्धानविषयको दीर्घकालिकस्तात्कालिकश्च कार्यक्रमो निरमीयत । तात्कालिककार्यक्रमे हस्तलिखितग्रन्थाना प्रामाणिकसूचीप्रणयनम्, उत्तराध्ययने विशिष्टाचार्यच्छात्रवृत्तिभाजा साधोलालच्छात्रवृत्तिभाजा चानुसन्धानकार्यस्यानुसन्धानमन्दिरविद्वद्भिर्लिखितविशिष्टनिबन्धाना च प्रकाशनार्थं "सारस्वती सुषमा" नाम्न्यास्त्रैमासिकानुसन्धानपत्रिकाया प्रकाशनप्रबन्धश्चाधिकृत । उक्तकार्यकदम्बकमधिकृत्य प्रस्तावितविश्वविद्यालयप्रारूपं निर्मातुमवकाशप्राप्ताना राजकीयसस्कृतमहाविद्यालयप्रधानाचार्याणा डाक्टरश्रीमङ्गलदेवशास्त्रिमहोदयाना विशेषाधिकारित्वेन नियुक्ति समजनि । अस्मिन्नेवावसरे सस्कृतपाठशाला सुसङ्घटयितु सुव्यवस्थापयितुं च सस्कृतपाठशालापुनःसङ्घटनसमितिरपि समस्थाप्यत ।

सस्कृतशिक्षाविकासायाधिकृतेषु कार्येषु सस्कृतपाठशालाध्यापकान् प्रशिक्षयितु पुन शिक्षणसत्रोद्घाटनकार्यं विशेषेण महत्त्व पुष्णाति । सत्रेण सस्कृताध्यापकेभ्यः शिक्षामनोविज्ञान विभिन्नाश्चान्ये शिक्षणविषयः प्रशिक्ष्यन्ते । एतेनाद्य यावत् पञ्चशती शिक्षकाणा प्रशिक्षिता । संस्कृतशिक्षाक्षेत्रे श्रीसम्पूर्णानन्दमहोदयानामियमभिनवा कृतिर्मन्तव्या ।

१९४८ वर्षे राज्यसस्कृतपाठशालाना समुचितविकासाय सस्कृतशिक्षासमुन्नमनाय चोत्तरप्रदेशीयनिखिलसंस्कृतपाठशालाप्रबन्धकाना प्रधानाध्यापकाना च राजकीयसस्कृतमहाविद्यालयभवने शासनकर्तृकमेक बृहदधिवेशनमायोजितम्, यत्र सस्कृतपाठशालाना वर्तमानदशा उन्नमयितु पाठ्यक्रम परिवर्तयितुं चानेके महत्त्वाधायका प्रस्तावा अङ्गीकृता । आचार्यनरेन्द्रदेवमहोदयानामाध्यक्ष्येऽखिलभारतीयसस्कृतशिक्षापाठ्यक्रमे समानमानत्वसंस्थापनार्थम्, विभिन्नराज्येषु विभिन्नतया दीयमाना विभिन्नसस्कृतपरीक्षा सतुलयितुम्, तत्तत्पाठ्यक्रम उपयुक्ततया परिवर्तन विधातु चास्माक मुख्यमन्त्रिमहोदयेन भारतवर्षस्य समेषा राज्याना विश्वविद्यालयाना च प्रतिनिधीनामन्त्र्य सस्कृतोन्नत्यै हृदयेन महोद्यमः संभृत । यदवधि विभिन्नसस्कृतपरीक्षाणामुपाधिषु प्रमाणपत्रेषु शिक्षामर्यादासु चैकरूपता नायाति, यदालम्ब्य सस्कृतच्छात्रा सुखेन पाठशालात पाठशालान्तरेषु प्रविष्टाः स्युः, तदवधि तेषा ज्ञानोपार्जनमानस्य साम्यत्व दु शकमिति श्रीसम्पूर्णानन्दमहोदयेन निश्चितम् । एतत्सम्मेलननिर्णयानुसार सस्कृतशिक्षायामाचरणचूड परिवर्तनमभूत् । परिणामत उत्तरप्रदेशीयशासनेन सस्कृतपरीक्षाणा नव्या मान्यतोद्घोषिता । तदनुसार प्रथमा-पूर्वमध्यमा-उत्तरमध्यमा-शास्त्रिपरीक्षाः क्रमेण जूनियरहाईस्कूल-हाईस्कूल-इण्टरमीडियट-बी०ए०

## सम्पादकीयम्

इत्याख्याभिः परीक्षाभिः समानमानाः सवृत्ताः। एतेन मान्यताप्रदानेन न केवल सस्कृतप्रणयिना गौरवं समुपबृहितमपि तु सस्कृतसमाजे नव जीवन नव्या आशाश्च पल्लविता.।

श्रीसम्पूर्णानन्दमहोदयस्य विद्यानुरागस्त सस्कृतजगतः सस्कृतविदुषा चाशाकेन्द्र प्रतिष्ठापितवान्। तन्मते सस्कृत नामेदानीन्तनीषु देशेऽस्मिन् प्रचलितास्वखिलासु भाषासूत्तमा भाषा। सा कथमपि मृतभाषा (अव्यावहारिकभाषा) नैव परिगण्येत। सा न केवल जीविता, प्रत्युत स्वीयेनामृतरसेन चिरादत्रत्या सन्तती. प्रादेशिकभाषाश्च सिञ्चन्ती पुष्यन्ती च प्राशस्त्येन जीवति। प्राचीनतमापीय स्वकार्यैर्विशिष्टरूपैः स्वानुभावप्रभावैश्च भारतस्यात्मनि देहे च प्रतिक्षण नवत्वमाधत्ते। इय हि सुरगवी भारतीयसस्कृतेर्मूलम्। दक्षिणभारतेन दक्षिणपूर्वैशियाखण्डेन च सबन्धस्थापनस्येयमेकलैव श्रृङ्खला। अस्य महोदयस्य गीर्वाणवाण्यनुरागः कस्य भारतीयस्य सस्कृतप्रियस्य तोषाय न प्रभवेत्।

दिष्ट्या साम्प्रतमेष महानुभावो विशालस्योत्तरप्रदेशस्य भारतीयसंस्कृतिहृदयभूतस्य मुख्यमन्त्रिपदमध्यास्ते। सस्कृतभाषायाः सस्कृतसमाजस्य चायतिरुत्तरोत्तर कल्याणोन्मुखी प्रतिभाति। अग्रिमाया पञ्चवार्षिकयोजनाया सस्कृतविश्वविद्यालयनिर्माणाय द्विपञ्चाशल्लक्षरूप्यकपरिमितो धनराशिरङ्गीकृत उत्तरप्रदेशीयशासनेन। वयमत्र भूतभावन विश्वेश्वरमस्य महानुभावस्य मुख्यमन्त्रित्वं प्रद्योतयितु सस्कृतोन्नमनमखमविघ्न पूरयितु च सविनय प्रार्थयामहे॥

### स्वर्गीया. श्रीकेशवद्विवेदिनः

वाराणसेयराजकीयसस्कृतमहाविद्यालयस्य न्यायशास्त्रप्राध्यापका न्यायवेदान्तादिदुरवगाहपाथोधिप्रवहणा नैयायिककेसरिणः श्रीकेशवद्विवेदिन शुद्धभाद्रशुक्लद्वितीयाया रविवासरे (१८-१०-५५) चतुश्चत्वारिंशद्वर्षपरिमाणकेऽल्पीयस्येव वयसि निधनमवापुरिति निवेदयता नितरा चेखिद्यते नश्चेतः। उत्तरप्रदेशीयाऽऽजमगढमण्डलान्तर्गतपरवइपुरग्राम स्वजनुषा प्रद्योतयन्त एते महानुभावा पितर श्रीसरयूप्रसादशर्माण चिराभिलषितसुतलाभहर्षभरनिर्भर समपादयन्। सुरभारतीसमाराधनाय बाल्य एवैभिरेषा पावनतमा काशीपुरी समासादिता, अधीत च व्याकरणशास्त्र प्राथम्येन। तदनन्तर श्रीराधाकान्तझा-श्रीशिवदत्तमिश्र-श्रीवामाचरणभट्टाचार्यमहोदयेभ्यो विधिवन्नव्यन्यायशास्त्रमधीतम्। वेदान्तशास्त्रस्याध्ययनमेभिः स्वामिश्रीकरपात्रिमहोदयानाम्, स्व० म० म० श्रीहरिहरकृपालुद्विवेदिनाम्, यशस्विना स्वामिश्रीभारतीमहोदयाना च सान्निध्ये सपादितम्। न्यायवेदान्तचार्यादिविरुदालङ्कृता गभीरपाण्डित्यलब्धगरिमाण इमे महानुभावा १९४४ वर्षे राजकीयसस्कृत-

महाविद्यालये न्यायाध्यापकपदे नियुक्ताः। ततः प्रभृति विद्यासमाराधनधृतव्रतैस्तत्परतयोपेक्षित-जीवनसर्वस्वैरेभिरविगणय्य शरीरस्वास्थ्यमहर्निशमध्ययनाध्यापनयोरेवैकादशवर्षपरिमितः कालो यापितः। खण्डनखण्डखाद्याद्वैतसिद्धिप्रभृतयोऽतिकठिना अपि ग्रन्था द्विवेदिमहोदयाना सविधे सरलसरला इव भासन्ते स्म। अत एव शास्त्रिवर्य्यैर्नव्यन्यायग्रन्थानामन्येषा च बहूना ग्रन्थाना शास्त्रगभीरा सरलतमाश्च टीकाग्रन्था निर्मिताः प्रकाशिताश्च। असमय एव विधेः करालेन करेण कवलिता एते महानुभावा इति हा हन्त! सीदामः, अभ्यर्थयामश्च निग्रहानुग्रहसमर्थं भगवन्त विश्वेश्वर शाश्वतपदलाभाय शास्त्रिवर्याणा धैर्यलाभाय च शोकसन्ततस्य कुटुम्बिजनस्येति ॥



[1]न्यासः—| भा २७३ क्षे ६१ | अत्र हरभाज्ययोर्विहृतयोरन्योन्यमिति भाज्यो२७३
ह २४७

हारेण २४७ भक्तः। शेषं २६, अनेन हारो भक्तः। शेषं १३, अनेन भाज्यहारक्षेपानपवर्त्य जातौ दृढौ | भा २१ क्षे७ | दृढभाज्यभाजकयोः परस्पर भक्तयोः फलान्यधोधस्तदधः क्षेपं
ह १६

तदधः खं विन्यस्य जाता वल्ली | १ ९ ७ ० | उपान्तिमेन ७ स्वोर्ध्वे९ हते ६३, अन्त्येन युते जातम्

| १ ६३ ७ | पुनरुपान्तिमेन ६३ स्वोर्ध्वे १ हते ६३ अन्त्येन ७ युते जातं राशिद्वयम् | ७० ६३ |

अधरोर्ध्वौ तौ दृढभाज्यहाराभ्यां २१।१६ तष्टौ जातौ | ७ ६ | समा लब्धयः। अत एते एव गुणाप्ती ६।७ इष्टघ्नतक्षणयुत इति एकेनेष्टेन गुणाप्ती २५।२८ द्विकेन वा ४४।४९ त्रिकेण वा ६३।७० एवं बहुधा।

---

[1] उदाहरणम्— भाज्यः २७३, क्षेप ९१, हारः २४७

अत्र १३ अनेनापवर्त्तनाङ्केनापवर्त्तितो भाज्यो हार क्षेपश्च—

$$\frac{२१ + ७}{१९}$$

अत्र दृढभाज्यहारयो परस्परविभाजितयो. फलान्यधोऽधस्तदध क्षेप तथान्ते खं स्थापयेत्। जाता वल्ली—

१
९
७
०

पूर्वोक्तनियमेन स्वोर्ध्वे हतेऽन्त्येन युते पुनरन्त्य व्यक्त्वोपान्तिमेन स्वोर्ध्वे हतेऽन्त्येन युत इत्यादिक्रियाकरणेन— 

१ ७०
९ ६३
७
०

इत्थं जातं राशिद्वयम् ७०, ६३। स्वस्वहाराभ्यां विभाजितौ जातौ ७, ६

अत्र लब्धय समा। तेन धनक्षेपे ७, ६ लब्धिगुणौ भवत।

"इष्टघ्नतक्षणयुत" इत्यादिनैकेनेष्टेन लब्धि २८, गुणक २५। द्विकेन लब्धि ४९, गुणकः ४४। एवमनेकधा।

सूत्रम्—

[1]हरक्षेपकयोर्वा प्रक्षेपकभाज्ययोस्तदुभयोर्वा ।
अपवर्त्तितयोर्गुणको लब्धिश्च स्वापवर्त्तहता. ॥ ६० ॥

[2]उदाहरणम्—

येनाभिहताशीति. समन्विता त्रिशता च वियुता वा ।
त्रिगुणात्रयोदशाप्ता शुद्ध्यनि तं कथय पृथगाप्तिम् ॥ २६ ॥

न्यास — | भा ८० क्षे ३० / ह ३९ | प्राग्वज्जाते गुणाप्ती २४ । ५०, अथवा भाज्यक्षेपौ

दशभिरपवर्त्तितौ | भा ८ क्षे ३ / ह ३९ | प्राग्वज्जाता वल्ली | ० / ४ / १ / ३ / ० | जातं राशिद्वयं ३ / १५ लब्धयो

विषमाः । अत. स्वतक्षणाभ्यामाभ्यां ३९ । ८ विशोधिते जाते धनक्षेपजे २४ । ५

---

१ हरक्षेपकयोरिति । भा × गु + क्षे० = हा × ल०

अत्र यदि हारक्षेपौ केनाप्यङ्केनापवर्त्येते भाज्यश्च नापवर्त्यते, तर्ह्यागता लब्धिर्वास्तविकी स्यात् । गुणस्तु न वास्तविक तेनापवर्त्तनाङ्केन गुणितो वास्तवो गुणो भवति, पक्षयोस्तुल्यत्वात् । एव यदि भाज्यक्षेपौ केनाप्यङ्केनापवर्त्येते, हारश्च नापवर्त्यते, तदाऽऽगतो गुणो वास्तविको भवति । परन्तु लब्धिस्तु पुनरपवर्त्तनाङ्केन गुणिता वास्तविकी भवितुमर्हति ।

२ उदाहरणम्— भा० ८० क्षे० ३० हा० ३९

अत्र १० एभिरपवर्त्तितौ भाज्यक्षेपौ ८,३

$$= \frac{८ \pm ३}{३९}$$

प्राग्वजातात्र वल्ली—
०　३
४　१५
१　३
३
०

अत्र विषमा लब्धय । तेन ऋणक्षेपे गुणलब्धी १५,३

८ − ३ = ५
३९ − १५ = २४ } धनक्षेपे गुणलब्धी २४, ५

अत्र लब्धि स्वापवर्त्तनाङ्कैर्दशभिर्गुणिता जाता वास्तविकी लब्धि ५० । गुणकस्त्वविकृत एव । एवम्—

$$\frac{८० \pm ३०}{३९}$$

लब्धिः स्वापवर्त्तनेन दशभिर्गुणिता। जाते ते एव गुणाप्ती २४। ५०, अथवा भाज्यक्षेपौ त्रिभिरपवर्त्तितौ | भा ८० क्षे १० / ह १३ | जाते ८। ५० गुणकस्त्रिभिरपवर्त्तनेन गुणितः। जाते गुणाप्ती ते एव २४। ५०, अथवा भाज्य[क्षेपौ] दशभिरपवर्त्य हारक्षेपौ त्रिभिरपवर्त्तितौ | भा ८ क्षे १ / ह १३ | जातं राशिद्वय ३ / ५ लब्धयो विषमाः। अतः स्वतक्षणाभ्या १३।८ शोधिते जाते ८। ५ हरक्षेपभाज्यक्षेपापवर्त्तने ३। १०, आभ्या क्रमेण गुणिते जाते ते एव गुणाप्ती २४। ५०, प्राग्वदेकेनेष्टेन जाते ६३। १३० द्विकेन वा १०२। २१० एवमनेकधा।

द्वितीयोदाहरणे न्यास | भा ८० क्षे ३० / ह ३६ | जाते योगजे गुणाप्ती २४।५० एते स्वतक्षणाभ्या शुद्धे वियोगजे १५। ३०, एकेनेष्टेन जाते गुणाप्ती ५४। ११०, द्विकेन ६३। १६० एवमिष्टवशादनेकधा ।

---

अत्र हारक्षेपौ त्रिभिरपवर्त्तितौ $\frac{८० + १०}{१३}$

प्राग्वज्जाता वल्ली— ६ ३७०
६ ६०
१०
०

जात राशिद्वयम् ३७०,६० (स्वोर्ध्वे हतेऽन्त्येन युतमित्यादिना)

अत्र लब्धय समा । तेन धनक्षेपे गुणलब्धी ८।५० । अत्र लब्धिरविकृतैव ५० । गुणकस्त्वपवर्त्तनाङ्केन गुणितो वास्तविको गुणक. ८ × ३ = २४ । अथवा भाज्यक्षेपौ दशभिरपवर्त्य पुनर्हारक्षेपौ त्रिभिरपवर्त्तितौ, तदा—

$\frac{८ + १}{१३}$

अत्र प्राग्वज्जाता वल्ली— ० ३
१ ५
१ ३
१ २
१ १
१
०

जातं राशिद्वयम् ३।५

अत्र लब्धयो विषमा । तेन स्वतक्षणाभ्यां शोधिते जाते धनक्षेपे ५।८

भाज्यक्षेपहरक्षेपापवर्त्तने ५ × १०, ८ × ३ = ५०, २४ लब्धिगुणकौ। अर्थाल्लब्धिः ५०, गुणक. २४, धनक्षेपे ।

उदाहरणम्—

को राशि. पञ्चभि· क्षुण्ण: सप्तत्रिशतिसयुत ।
वर्जितो वा त्रिभिर्भक्तो निरग्र. स्याद्वदाशु तम् ॥२७॥

| न्यासः— | भा० ५ क्षे ३७<br>ह ३ | जाता वल्ली | १<br>१<br>३७<br>० | राशिद्वयं | ७४<br>३७ | अध.स्थिते |
|---|---|---|---|---|---|---|

राशौ त्रिभिस्तष्टे द्वादश लभ्यन्ते । उर्ध्वस्थिते राशौ पञ्चभिस्तष्टे चतुर्दश लभ्यन्ते । असमानग्राह्या· कार्यं समतक्षणमिति द्वादशसु गृहीतेपु जाते गुणाप्ती १ । १४, चतुर्दशसु गृहीतेषु जाते गुणाप्ती ५ । ४, समतक्षणमित्युपचारो यथेष्टघ्नतक्षणयुते बहुधा भवतो गुणाप्ती । तथेष्टघ्नतक्षणवियुती राशिद्वये बहुधा गुणाप्ती भवत । ऋणक्षेपे द्वादशफले गृहीते गुणाप्ती २ । ६, चतुर्दशफले गृहीते जाते गुणाप्ती ८ । १ इत्यादि ।

सूत्रम्—

[1]हरतष्टे धनक्षेपे लब्धिस्तक्षणफलेन संयुक्ता ।
क्षयगे क्षेपे तक्षणफलोनिता जायते लब्धिः ॥६१॥
हरतष्टभाज्यराशौ तष्टफलघ्नगुणसंयुता लब्धिः ।

---

स्वतक्षणाभ्या विशोधिते ३० लब्धि, १५ गुणक, ऋणक्षेपे । एकेनेष्टेन जाते गुणाप्ती ५४।११०, द्विकेन ९३।१९०, एवमिष्टवशादानन्त्यम् ।

१. हरतष्ट इति । भा० गु० ± क्षे = हा० ल०
अत्र यदि क्षे = क्षेप − इ० हा० इति स्यात्तदा—
भा० गु० ± ( क्षे − इ० हा० ) = हा० ल०
= भा० गु० ± क्षे० = हा० ल० ± इ० हा०
= भा० गु० ± क्षे० = हा ( ल ± इ )
हरादधिके क्षेपे क्षेपतक्षणफलमिष्टसज्ञ कल्पितम् । अत उक्तम्—"हरतष्टे धनक्षेपे लब्धिस्तक्षणफलेन सयुक्ता ।" इत्यादि । हरेण भाजिते भाज्यराशौ गुणस्तु प्राग्वद्भवति । परन्तु लब्धिर्न वास्तविकी । अतोऽत्र भाज्यतक्षणफलगुणितगुणकेन सयुता लब्धिर्ज्ञेया ।

[1]उदाहरणम्—

को राशि: खाभ्रदिङ्निघ्नो दिगश्विनयनैर्युत. ।
हीनो वाग्नीन्द्रसंभक्त शुद्धयति ब्रूहि त पृथक् ॥२८॥

न्यास.— | भा १००० क्षे २२१० ह १४३ | अत· प्राग्वज्जाते गुणाप्ती ६५।४७०, भाज्ये हरेण तष्टे जातम् | भा १४२ क्षे २२१० ह १४३ | जाते गुणाप्ती ६५।८०, भाज्यतक्षणफल ६ गुण· ६५, अनयोर्घात ३९० यतो जाता लब्धि. सैव ४७०, अथवा हरतष्टे क्षेपे यथा | भा १०००क्षे६५ ह १४३ |

---

१ उदाहरणम्- —भा० १०००, क्षे० २२१०, हा० १४३

$$= \frac{१००० + २२१०}{१४३}$$

अत्र प्राग्वज्जाता वल्ली—

६ १५४७०
१ २२१०
२२१०
०

पूर्वोक्तरीत्या जाते गुणाप्ती ६५, ४७०

अथवा भाज्ये हरेण तष्टे जातम्— १४३)१०००(६ भाज्यतक्षणफलम्
८५८
१४२

$$\frac{१४२ + २२१०}{१४३}$$

अत्र प्राग्वज्जाता वल्ली—० २२१०
१ २२१०
२२१०
०

जाते गुणाप्ती ६५, ८० । अत्र गुणकस्तु स एव ६५, किन्तु लब्धिर्भाज्यतक्षणफलघ्न-गुणयुता भवति । भाज्यतक्षणफलम् ६, भाज्यतक्षणफलगुणितगुणक = ६ × ६५ = ३९०, ३९०+८० = ४७० = वास्तविकी लब्धि ।

अथवा भाज्यक्षेपयोर्हरभक्तयोरत्र न्यास —

$$= \frac{१४२+६५}{१४३}$$

जाते गुणाप्ती ६५।४५५, क्षेपतक्षणलब्ध्या १५ युता जाता लब्धि सैव ४७०, अथवा भाज्यक्षेपयोर्हरतष्टयोर्न्यासः | भा १४२ क्षे ६५ ह १४३ | जाते गुणाप्ती ६५।६५, भाज्यतक्षणफल ६ गुण' ६५, अनयोर्हति ३९०, क्षेपतक्षणफलं १५, अनयोर्योगः ४०५, अनेन लब्धि ६५ युता जाता सैव ४७० ।

द्वितीयस्य न्यासः—| भा १००० क्षे २२१० ह १४३ | जाते प्राग्वद् गुणाप्ती ७९।५३०, हरतष्टक्षेपे | भा १००० क्षे ६५ ह १४३ | जाते गुणाप्ती ७८।५४५, क्षेपतक्षणफलोना जाता लब्धि सैव ५३० ।

---

अत्रापि जाता प्राग्वद्वल्ली—

| | | |
|---|---|---|
| | ० | ६५ |
| | १ | ६५ |
| ६५ | | |
| | ० | |

जाते गुणाप्ती ६५, ६५ । अत्रापि गुणकस्त्वविकृत एव । परन्तु लब्धिर्न युक्ता ।

लब्धि = (भाज्यतक्षणफलम् × गुणक ) + क्षेपतक्षणफलम् + आगता लब्धि ।

लब्धि = (६ × ६५) + १५ + ६५, = ३९० + ८० = ४७०

ऋणक्षेपे न्यास — $\frac{१००० - २२१०}{१४३}$

जाताऽत्र वल्ली—

| | | |
|---|---|---|
| | ६ | १५४७० |
| | १ | २२१० |
| २२१० | | |
| | ० | |

जात राशिद्वयम् १५४७०, २२१०

स्वस्वहरेण भक्ते आगते गुणाप्ती ६५, ४७० । अत्र लब्धय समा, तेन इमे गुणाप्ती धनक्षेपे भवत । ऋणक्षेपार्थं स्वतक्षणाच्छोधिते जाते गुणाप्ती ऋणक्षेपे ७८।५३० अथवा हरतष्टक्षेपे न्यास — $\frac{१००० - ६५}{१४३}$

जाते गुणाप्ती ७८।५४५ । अत्र लब्धि = आगता लब्धि –क्षेपतक्षणफलम्

लब्धि = ५४५ – १५ = ५३० । गुणकस्त्वविकृत एव ।

सूत्रम्—

[1]क्षयभाज्ये गुणलब्धी धनवत्साधयेत्तु भाज्यत क्षेपे।
अल्पे तयोर्द्वयं स्यादेकमनल्पे तु ते सकृद्धनगे ॥ ६३ ॥

उदाहरणम्—

क्षयस्त्रिंशद्गुणो राशिस्त्रिभिर्युक्तोऽथवोनितः।
सप्तभक्तो निरग्रः स्यात्तं गुणं वद वेत्सि चेत् ॥२९॥

न्यास — | भा ३० क्षे ३ / ह ७ | भाज्यं धनं प्रकल्प्य धनभाज्ये धनक्षेपे गुणाप्ती २।९, एते स्वतक्षणाभ्यामाभ्या ३०।७ शोधिते जाते ऋणभाज्ये धनक्षेपे गुणाप्ती ५।२१, एतयोरेकमृण ५।२१̇ वा ५।२१, अपि च—

क्षयस्त्रिंशद्गुणः सप्तनवत्या संयुतोऽथवा।
सप्ताप्त शुद्धिमायाति तं गुणं वद मे द्रुतम् ॥३०॥

न्यासः— | भा ३० क्षे ९७ / ह ७ | धनवत्साध्येति प्राग्वज्जाते गुणाप्ती ४।३१, एतयोरेकमृणमिति लब्धिमृण प्रकल्प्य ऋणभाज्ये ऋणक्षेपे गुणाप्ती ४।३१̇, एते स्वतक्षणाभ्यामाभ्या ७।३०̇ शोधिते जाते ऋणभाज्ये धनक्षेपे ३।१ क्षयगे हरेऽप्येवमूह्यम्।

---

१. क्षयभाज्य इति। क्षयभाज्येऽपि गुणलब्धी धनवत्साध्ये। अनयोर्मध्य एकमृण कल्प्यम्। यथा—३० + ३ / ७

अत्र प्राग्वज्जाता वल्ली
४ ३९
३ ९
३
०

३०)३९(१
३०
९ = लब्धि
७)९(१
७
२=गुण

समा लब्धय'। तेन धनक्षेपे गुणाप्ती २।९, एते स्वतक्षणाभ्यां ३०।७, आभ्यां शोधिते जाते क्षयक्षेपे गुणाप्ती ५।२१, एतयोरेकमृण कल्प्यमतो गुणाप्ती ५̇।२१, वा ५।२१̇।

सूत्रम्—

हरहृतशुद्धे क्षेपे शून्ये जातेऽथवा गुणः खं स्यात् ।
शून्ये तु भाज्यराशौ हरहृतक्षेपको लब्धिः ॥६४॥

उदाहरणम्—

को राशिः सप्तहतो नवभिर्युक्तोऽथवोनितः शुद्धम् ।
त्रिभिरुद्धृतः प्रयच्छति भागं तं गुणकमाचक्ष्व ॥३१॥

न्यासः—| भा ७ क्षे ९ / ह ३ | जाते गुणाप्ती ०।३, एकेनेष्टेन ३।१०, द्विकेन ६।१७,

नवशुद्धौ गुणाप्ती ३।४, एकेनेष्टेन ६।११, द्विकेन ९।१८, अपि च—

को राशिर्नवगुणितः शून्ययुतः पञ्चभिर्हृतः शुद्धिम् ।
यच्छति तं द्राग्राशिं गणकवर ब्रूहि तं यदि वेत्सि ॥३२॥

न्यासः—| भा ९ क्षे० / ह ५ | जाते गुणाप्ती ०।०,एकेनेष्टेन५।९,द्विकेन १०।१८,अपि च-

को राशिः शून्यहतो द्वादशयुक्तो विवर्जितो वापि ।
चतुरुद्धृतो विशुद्ध्यति तं गुणं गणक मे कथय ॥३३॥

---

१. हरहृतशुद्ध इति । कुट्टके यत्र हारेण भाजितः सन् क्षेपः शुद्धेत्तत्र क्षेपे हरेण भाजिते शून्यं क्षेपः, अथवा क्षेपस्थाने यत्र शून्यं भवति तत्र वल्ल्यामुक्तवत्क्रिया-करणेन गुणाप्ती ०।० भवेताम् । अतोऽत्र हरहृतक्षेपक एव लब्धिर्भवति । यथा—

$$\frac{७+९}{३}$$

हरेण हृते क्षेपे— $\frac{७+०}{३}$

अत्रापि प्राग्वज्जाता वल्ली—
२ ०
० ०
०

जाते गुणाप्ती ०।०

अतोऽत्र हरहृतक्षेपफलसंयुताऽऽगता लब्धिर्युक्ता लब्धिर्भविष्यति । तेन हरहृतक्षेप-फलम् = ३ अनेन युताऽऽगता लब्धिः = ३ + ० = ३ इयमुचिता लब्धिः । गुणकस्त्वविकृत एव ।

न्यासः— | भा० क्षे १२ / ह ४ | जाते द्वादशक्षेपे गुणाप्ती ०।३, एकेनेष्टेन ४।३, द्विकेन ८।३, द्वादशशुद्धौ जाते ४।३̇, एकेनेष्टेन ८।३̇, द्विकेन १२।३̇ भाज्ये शून्यलब्धिः। एव सर्वत्रापि।

सूत्रम्—

[1]क्षेपं शुद्धिं रूपं परिकल्प्य तयो पृथग्गुणाप्ती ये।
इष्टक्षेपविशुद्ध्या हते स्वहृतक्षिते भवतः ॥६५॥

---

१. क्षेपमिति। "दृढभाज्यहारौ विभजेत् परस्परम्" इत्यादिना फलान्यधोऽधो निवेश्य तदधः क्षेपस्थाने रूपमर्थादेक स्थाप्य तदन्ते खं च संस्थाप्य उपान्तिमेन स्वोर्ध्वे हते इत्यादिना धनक्षेपे वा ऋणक्षेपे गुणाप्ती पृथक्पृथक्साध्ये। ततोऽभीप्सितक्षेपो यदि धनं तदा धनक्षेपजे, यद्यभीप्सितक्षेपः क्षयस्तदा ऋणक्षेपजे अभीप्सिते धनर्णक्षेपेण वाऽऽगते गुणाप्ती गुणनीये। पश्चात् स्वस्वहरेण तक्ष्ये, तदा ते उद्दिष्टगुणाप्ती भवतः। अव्यक्तेनाप्यस्योपपत्तिरतिसरला। यथा—

कल्प्यते भा० हा० क्षे० इत्यत्र "दृढभाज्यहारौ विभजेत् परस्परम्" इत्यादिना जाता वल्ली

अ
क
च
ट

अत्र रूपक्षेपकुट्टकार्थं जाता वल्ली

| | |
|---|---|
| अ | अ क च ट + अ क + अ ट + १ |
| क | क च ट + क + ट |
| च | च ट + १ |
| ट | ट |
| १ | |
| ० | |

स्वोर्ध्वे हतेऽन्त्येन युते तदन्त्य त्यजेदिति नियमादूर्ध्वराशिः = अ क च ट + अ क + अ ट + १
अधोराशि. = (क च ट + क + ट)

यदि रूपस्थाने क्षेप = क्षे इति स्थाप्यते। तदा

| | |
|---|---|
| अ | अ क च ट क्षे + अ क क्षे + अ ट क्षे + च ट क्षे + क्षे |
| क | क च ट क्षे + क क्षे + ट क्षे |
| च | च ट क्षे + क्षे |
| ट | ट क्षे |
| क्षे | |

उदाहरणम्--

[१]प्रथमोदाहरणे दृढभाज्यहारौ | भा २१ क्षे ७ / ह १९ | रूप क्षेप प्रकल्प्य न्यासः—
| भा २१ क्षे १ / ह १९ | रूपक्षेपे गुणाप्ती ९।१० इष्टसप्तकेन क्षेपेण गुणिते स्वहरतष्टे जाते सप्तक्षेपे गुणाप्ती ६।७, रूपशुद्धौ गुणाप्ती १०।११, इष्टमप्तक्षेपहते स्वहरतष्टे जाते सप्तशुद्धौ १३।१४

---

एवमत्रोर्ध्वराशिः = अ क च ट क्षे + अ क क्षे − अ ट क्षे + च ट क्षे + क्षे
अधोराशिः = क च ट क्षे + क क्षे + ट क्षे
ऊर्ध्वराशिः = क्षे ( अ क च ट + अ क + अ ट + च ट १ )
अधोराशिः = क्षे ( क च ट + क + ट )
अत. "हरभाज्याभ्या तष्टावधरोर्ध्वौ" इत्यादिना "इष्टक्षेपविशुद्धयाहत" इत्याद्युपपन्नम्।

१ प्रथमोदाहरणे दृढभाज्यहारौ—

$\frac{२१ + ७}{१९}$ अत्र रूप क्षेपं प्रकल्पितम्।

तदा $\frac{२१ + १}{१९}$

अत्र प्राग्वज्जाता वल्ली—

१ १०
९ ९
१
०

स्वस्वहरेण भाजिते गुणाप्ती ९।१०, इष्टक्षेपेण गुणिते स्वस्वहरेण भाजिते जाते सप्तक्षेपे गुणाप्ती ६।७, ऋणक्षेपार्थं धनक्षेपागते गुणाप्ती स्वतक्षणाभ्यां शोधिते जाते गुणाप्ती १०।११, इष्टक्षेपेण गुणिते स्वस्वहरेण भाजिते सप्तशुद्धौ गुणाप्ती १३।१४

सूत्रम्—

यस्मिन्यस्मिन्कर्मणि यद्यत्परिभाषितं समुदितं च ।
तस्मिंस्तस्मिन्कर्मणि तत्परिभाषितं भवति ॥६६॥
त्रैराशिके प्रमाणं हारः परिभाषितोऽन्मितिर्भाज्यः ।
अवशिष्टमृणक्षेपो लब्धिस्तत्प्रमाणं स्यात् ॥६७॥
गुणाकस्तु पूर्वशेष तत्पूर्वं पूर्वमेवमपि ।
अनुपातेच्छायामथ ज्ञाताया च तत्फलं भाज्यः ॥६८॥
यो गुणाक· सैवेच्छा या लब्धिस्तत्फलं भवति ।

उदाहरणम्—

[१] पङ्गुर्योजनषष्टिमेकसहितामब्दैस्त्रिपञ्चाशता
रिङ्गन्क्रामति योजनानि च कियत्सङ्ख्यानि येनासरत् ।
कालेनाशुविदार्य (?) तत्र घटिकाशेषे भवेद्विंशतिः
तत्संवत्सरमासवासरघटीमानानि चेच्छा पृथक् ॥ ३४ ॥

---

पङ्गुरिति । कश्चित्पङ्गुरेकसहितां योजनषष्टिं ( ६१ योजनानि ) त्रिपञ्चाशता ( ५३ ) अब्दैर्वर्षैः रिङ्गन् क्रामति ( गच्छति ) । तत् कियत्संख्यकानि योजनानि कियता कालेन असरद् येन कालेन घटिकाशेषे विंशति ( २० घटिकाः ) भवेत् ।
हे आशुविद् आर्य ! अत्र मूले "आशु वद, आर्य" इति पाठेन भाव्यम् । तत् संवत्सर-मासवासरघटीमानानि, तथा इच्छा ( योजनप्रमाणं ) च वद ।
प्राप्ते आदर्शे लेखकप्रमादान्न्यासोऽशुद्धः संजात. । ततो मयात्राङ्कानां शोधनेन यथार्थो न्यासः प्रदर्श्यते
६१।५३।०॥ घटिकाशेषं २० ।
∵ ६० घटी = १ दिन ।
∴ ६० भाज्यः । क्षेपकः – २० । भाजक. ६१ ( त्रैराशिके प्रमाण हर इत्यादिना ) ।
कुट्टकार्थं न्यासः $\frac{६०—२०}{६१}$

जाता वल्ली ० २०
१ २०
२०
०

अत्र लब्धिगुणकौ २०।२० धनक्षेपे, यतो हि वल्ली समा ।
ऋणक्षेपार्थं स्वतक्षणाभ्यां विशोधिते जाते गुणाप्ती ४१।४०

न्यासः—६१।५३।० घटिकाशेषं २०। अत्र घटिकाना षष्ट्या दिनमिति षष्टिर्भाज्यम्, प्रमाणं हरः, घटिकाशेषं शुद्धिरिति प्रकल्प्य कुट्टकार्थं न्यासः— | भा ६० क्षे २०̇ / ह ६१ | जाते गुणाप्ती ४०।१६, लब्धिर्दिनानि १६, गुणो मासशेषं ४०, द्वादशभिर्मासैर्वर्षमिति द्वादश भाज्यः प्रमाणं हरो मासशेषं शुद्धिरिति प्रकल्प्य कुट्टकार्थं न्यास — | भा १२ क्षे १९ / ह ६१ | जाते गुणाप्ती ४४।८, लब्धिर्मासाः ८, गुणो वर्षशेषं ४४, त्रिपञ्चाशद्भाज्य प्रमाणं हरो वर्षशेषं शुद्धिरिति कुट्टकार्थं न्यास — | भा ५३ क्षे ४४̇ / ह ६१ | जाते गुणाप्ती २५।२१, लब्धिर्वर्षाणि २१, गुण इच्छा २५ इति जातं त्रैराशिक ६१।५३।२५ लब्धं वर्षाणि २१ मासा. ८ दिनानि १६ घटिकाः ४० घटिकाभागा $\frac{२०}{६१}$ एवमूह्यम् ।

---

∵ ३० दिन = १ मास· ।

लब्धिरत्र घटिका. ४०, गुणो दिनशेषम् ४१ । इदमेव दिनशेषमत्र शुद्धि , क्षेपक· । पुनः कुट्टकार्थं न्यासः $\frac{३० - ४१}{६१}$

जाता वल्ली
०
२
४१
०

(४१, ८२)

आगतौ लब्धिगुणकौ ११।२१ धनक्षेपे। ऋणक्षेपार्थं स्वतक्षणाभ्या विशोधिते जाते गुणाप्ती ४०।१६, ऋणक्षेपे लब्धिर्दिनानि १६ गुणो मासशेप ४० । इदमेव मासशेषमत्र शुद्धिः ।

∵ १२ मासाः = १ वर्षम् ।

मासार्थं पुनः कुट्टकः—

भाज्य. १२ । क्षेपकः - ४० । भाजक ६१

$\frac{१२ - ४०}{६१}$

जाता वल्ली
०
५
४०
०

(४०, २००)

अत्रापि समा वल्ली । तेनागतौ लब्धिगुणकौ धनक्षेपे ४।१७, ऋणक्षेपार्थं स्वतक्षणाभ्यां विशोधिते जाते गुणाप्ती ४४।८, लब्धि· मासा ८, गुणो वर्षशेषं ४४ । इदमेव वर्षशेषमत्र शुद्धि । भाज्य. ५३ । क्षेपक -४४ । भाजक. ६१

भिन्नकुट्टके सूत्रम्—

ईप्सितलब्ध्या हारो गुणिते क्षेपोनिते च भाज्याप्ते ।।६९।।

गुणाकारः स्याद्दृढदृढेऽपि वा कुट्टके भवति ।

उदाहरणम्—

कश्चित्त्रिंशद्गुणितो दशसंयुक्तो द्वादशोद्धृतो यत्र ।

यच्छति शुद्धं भागं कुट्टकगणितज्ञ ! तं कथय ।।३५।।

न्यासः— | भा ३० क्षे १० / हृ १२ | एकेनेष्टेन जाते गुणाप्ती १/१५ | १/१ द्विकेन ७/१५ | २

त्रिकेण १३/१५ | ३ एवमिष्टवशादनेकधा ।

कुट्टकाप्त्यभावे भावेऽप्यभिन्नकल्पितलब्ध्या सदा गुणो न स्यात् ।।७०।।

कुट्टकप्राप्तिभावेऽभीष्टवशात्कदाचिदभिन्नः स्यात् ।

यत्किञ्चित्कुट्टककौशल्यात्पुरतोऽनेकवर्णसमीकरणे वक्ष्ये ।।७१।।

इति कुट्टकः ।।

---

वर्षज्ञानाय कुट्टकस्य न्यास $\frac{५३ - ४४}{६१}$

जाता वल्ली

| ० | ८८० |
|---|---|
| १ | १०१२ |
| ६ | ८८० |
| १ | १३२ |
| १ | ८८ |
| १ | ४४ |
| ४४ | |
| ० | |

धनक्षेपे आगतौ लब्धिगुणकौ ३२।३६, यतो ह्यत्र वल्ली समा। ऋणक्षेपार्थं स्वतक्षणाभ्यां विशोधिते जाते गुणाप्ती २५।२१ लब्धिर्वर्षाणि २१ । गुण इच्छा २५। उत्पन्नमत्र त्रैराशिक

यदि ६१ योजनानि ५३ वर्षैः रिङ्गन् क्रामति कश्चित्पङ्गु

तर्हि २५ „ × „ „ „

$\frac{५३ \times २५}{६१}$, = २१ वर्षाणि, ८ मासा.,१९ दिनानि, ४० घटिका , $\frac{३०}{६१}$ घटिकाभागाः ।

[1]वर्गप्रकृतौ सूत्रमार्यासप्तकम्—

ह्रस्वमभीष्टमूल तद्वर्ग· प्रकृतिसङ्गुणो युक्तः ।
हीनो वा येन कृतिः स्यात्तस्मात्तत्पदं ज्येष्ठम् ।।७२।।
ह्रस्वज्येष्ठक्षेपा· क्रमशस्तेषामधो न्यसेत्ते तु ।
अन्यान्वैषा न्यासस्तस्य भवेद्भावनानाम् ।। ७३ ।।
वज्राभ्यासो ह्रस्वज्येष्ठयो सयुतिर्भवेद्ध्रस्वम् ।
लघुघात· प्रकृतिहतो ज्येष्ठवधेनान्वितो ज्येष्ठम् ।।७४ ।।

---

१ अत्र वर्गप्रकृतिर्व्याख्यायते—'वर्ग प्रकृतिर्यत्र इति वर्गप्रकृति. । यतोऽस्य गणितस्य यावदादिवर्गप्रकृति । अथवा यावद्वर्गादिषु प्रकृतिभूताद्वर्गादितः गणित प्रवर्तत इति वर्गप्रकृति । गणितेऽत्र यावद्वर्गादिषु योऽङ्क प्रकृतिरूपेण वर्तत स प्रकृतिशब्देन व्यवह्रियते । स चाव्यक्तवर्णगुणक एव । अतोऽत्र मूलसाधनेऽव्यक्तवर्गस्य यो गुण. स एव प्रकृतिशब्देनोच्यते ।

कल्प्यताम् कनिष्ठ = क, आद्यज्येष्ठ. = आज्ये । आद्यकनिष्ठ = आक । द्वितीयकनिष्ठः = द्विक । द्वितीयज्येष्ठः = द्विज्ये । प्रथमक्षेप = प्रक्षे । द्वितीयक्षेप = द्विक्षे । प्रकृतिः = प्र ।

∴ आज्ये$^{2}$ = आक$^{2}$ प्र ± आक्षे

∴ आक्षे = आज्ये$^{2}$ − आक$^{2}$ प्र

एव द्विज्ये$^{2}$ = द्विक$^{2}$ प्र ± द्विक्षे

∴ द्विक्षे = द्विज्ये$^{2}$—द्विक$^{2}$ प्र

∴ आक्षे × द्विक्षे = ( आज्ये$^{2}$—आक$^{2}$ प्र ) ( द्विज्ये$^{2}$–द्विक$^{2}$ प्र )=
आज्ये$^{2}$ द्विज्ये$^{2}$ द्विज्ये आक$^{2}$ प्र द्विक$^{2}$ प्र आज्ये$^{2}$ + द्विक$^{2}$ आक$^{2}$ प्र$^{2}$ क्षेपो येन युक्तो मूलदो भवेत् स एव प्रकृतिगुणितकनिष्ठवर्ग. ।

∴ आज्ये$^{2}$ द्विज्ये$^{2}$ ± २ आक द्विक आज्ये द्विज्ये + आक$^{2}$ द्विक$^{2}$ प्र$^{2}$ ± २ आक द्विक आज्ये द्वि ज्ये—द्विज्ये$^{2}$ आक$^{2}$ प्र–द्विक$^{2}$ आज्ये$^{2}$ प्र = आक्षे × द्विक्षे = ( आज्ये द्विज्ये ± आक द्विक )$^{2}$–प्र { (द्विज्ये आक ± आज्ये द्विक )$^{2}$ } = आक्षे × द्वि क्षे + प्र { ( द्विज्ये आक ± आज्ये द्विक )$^{2}$ } = ( आज्ये द्विज्ये ± आक द्विक )$^{2}$

अत. क्षेपघातक्षेपे ( द्विज्ये आक ± आज्ये द्विक ) इद कनिष्ठम् ।

तथा च ( आज्ये द्विज्ये ± प्र आक द्विक ) इद ज्येष्ठम् ।

∴ वज्राभ्यासो ह्रस्वज्येष्ठयो संयुतिर्भवेद्ध्रस्वमित्यादिकथनमुपपन्नम् ।

क्षिप्त्योर्घात. क्षेप॰ स्याद् वज्राभ्यासयोर्विशेषो वा ।
ह्रस्वं लघ्वोर्घातः प्रकृतिघ्नो ज्येष्ठयोश्च वधः ॥७५॥
तद्विवरं ज्येष्ठपद क्षेपक्षिप्त्योः प्रजायते घातः ।
ईप्सितवर्गविहृतः क्षेपः क्षेपे पदे तदिष्टाप्ते ॥७६॥

---

ईप्सितवर्गविहृत इति । यस्मिन्क्षेपे कनिष्ठज्येष्ठपदे सिद्धे स क्षेपो यदीष्टस्य वर्गेण भक्त सन् क्षेपो भवति, तदागते ते कनिष्ठज्येष्ठपदे इष्टभक्ते सती पदे भवत । यदि चेष्टवर्गेण गुणित. सन्क्षेपो भवति तदा ते कनिष्ठज्येष्ठमूले इष्टगुणिते स्त. । यथा वर्गप्रकृतिलक्षणेन—

$\text{ज्ये}^2 = (\text{प्र} \times \text{क}) + \text{क्षे}$

यदि पक्षयोरिष्टवर्गेण भाजिते तदा

$$\frac{\text{ज्ये}^2}{\text{इ}^2} = \frac{(\text{प्र} \times \text{क}) + \text{क्षे}}{\text{इ}^2}$$

$$= \frac{\text{ज्ये}^2}{\text{इ}^2} = \text{प्र} \left(\frac{\text{क}^2}{\text{इ}^2}\right) + \frac{\text{क्षे}}{\text{इ}^2}$$

$$= \frac{\text{ज्ये}^2}{\text{इ}^2} = \text{प्र} \left(\frac{\text{क}}{\text{इ}}\right)^2 + \frac{\text{क्षे}}{\text{इ}^2}$$

अथवा $\frac{\text{द्वि ज्ये}^2}{\text{इ}^2} = \frac{\text{प्र} \times \text{द्विक} + \text{द्वि क्षे}}{\text{इ}^2}$ –

$$= \frac{\text{द्विज्ये}^2}{\text{इ}^2} = \frac{\text{प्र} \times \text{द्विक}^2}{\text{इ}^2} + \frac{\text{द्विक्षे}}{\text{इ}^2}$$

अत्र यदि $\frac{\text{क}}{\text{इ}} = \text{द्विक}$ । $\frac{\wedge}{\wedge\wedge}$ $\frac{\text{ज्ये}}{\text{इ}} = \text{द्विज्ये}$

तदा $\frac{\text{क्षे}}{\text{इ}^2} = \text{क्षे}' = \text{द्विक्षे}$

अनेनेप्सितवर्गविहृत क्षेप इत्युपपन्नम् ।

एव यदि $\text{प्र} \times \text{आक}^2 + \text{क्षे} = \text{ज्ये}^2$

इत्यत्र $\text{इ}^2$ अनेन गुण्यते तदा गुणिते वा तन्मूले गुणित इत्याद्युपपद्यते ।

इष्टकृतिगुणक इति । यत्र कुत्राप्युद्दिष्टक्षेपे रूपक्षेपजपदाभ्या भावनया पदानेकत्वमायाति तत्र रूपक्षेपजपदसाधनं प्रकारान्तरेण कथयति । इष्टवर्गगुणक ( प्रकृति ) योर्यद्न्तर तेन द्विघ्नमिष्ट विभजेत् । तदा रूपक्षेपे (एकसयुतौ) कनिष्ठ स्यात् । कनिष्ठागतानन्तरं ह्रस्वमभीष्टमूलमित्यादिना कनिष्ठाज्ज्येष्ठ स्यात् । इह कनिष्ठज्येष्ठयोर्भावनावशात्तथेष्टवशादानन्त्यमस्ति ।

गुणिते वा तन्मूले गुणिते मूले तदा भवतः ।
इष्टकृतिगुणकशेषोद्धृतं तदिष्ट द्विसङ्गुणं भवति ॥७७॥
ह्रस्वं मूल च ततो रूपक्षेपेण साधयेज्ज्येष्ठम् ।
तुल्यातुल्यपदाना भावनयाऽनन्तमूलानि ॥७८॥

---

अतिसुगमात्रोपपत्तिर्यथा-इष्ट ह्रस्वमित्यत्रेष्ट कनिष्ठमित्युक्तम् । यदि चेष्टं द्विगुणितं तदा कनिष्ठवर्गश्चतुर्गुण. स्यादेव । पुनर्यदि प्रकृत्या गुणितस्तदा कनिष्ठवर्गप्रकृत्योश्च चतुर्गुणो घात· स्यात् । केन युतोऽयं मूलप्रदो भविष्यतीति विचारणीयम् । "चतुर्गुणस्य घातस्य युतिवर्गस्य चान्तरम् । राश्यन्तरकृतेस्तुल्यम्" इत्यत्र चतुर्गुणितो घातो राश्यन्तरवर्गेण युतो युतिवर्गो भवति । अत्रावश्य मूलप्राप्ति । अत्र कनिष्ठवर्गप्रकृत्योश्चतुर्गुणो घातोऽस्ति । परन्तु कनिष्ठ त्विष्टमेव । अत इष्टवर्गप्रकृत्योश्चतुर्गुणघातोऽयम् । असाविष्टवर्गप्रकृत्यन्तरवर्गेण युतोऽवश्य मूलदो भवेत् । तथा द्विघ्नमिष्ट कनिष्ठम् । तस्मादिष्टवर्गप्रकृत्योरन्तरवर्गतुल्ये क्षेपे ज्येष्ठ पदमपि निष्पद्यते । किन्त्वपेक्षितं च रूपक्षेपे, तदर्थं "ईप्सितवर्गविहृतः क्षेप" इत्यादिनात्रेष्टवर्गप्रकृत्योरन्तरवर्गतुल्यमिष्टं प्रकल्प्य तद्वर्गेण क्षेपे भक्ते रूपमेव स्यात् । कनिष्ठं त्विष्टवर्गप्रकृत्यन्तरेणैव भाज्यम् । प्रकृते कनिष्ठ द्विघ्नमिष्टमस्ति । अत उपपन्नमिष्टकृतिगुणकशेषोद्धृत तदिष्टं द्विसङ्गुणमित्यादि ।

अथवा $ज्ये^{२} = क^{२}\ प्र + क्षे$

इत्यत्र यदि $ज्ये^{२} = (क\ इ + क्षे)^{२}$ कल्प्यते

तदा $क^{२}\ इ^{२} + २\ इ\ क\ क्षे + क्षे^{२} = क^{२}\ प्र + क्षे$

अत्र $क्षे = १$

$\therefore क^{२}\ इ^{२} + २\ इ\ क = क^{२}\ प्र$

क इत्यनेनापवर्तने

$क\ इ^{२} + २\ इ = क\ प्र$ तदा $२\ इ = क\ प्र - क\ इ^{२} = २\ इ = क\ (प्र - इ^{२})$

$\therefore क = \frac{२\ इ}{(प्र - इ^{२})}$ अनेनाप्युपपन्नमिष्टकृतिगुणकशेषोद्धृतमित्यादि ।

२३७४ २३०२ २२०८
वेदाद्रिरामाश्विमिता कराभ्ररामाश्विनो नागखदस्रदस्रा ।
२०९६ १९६९ ४
रसाङ्कपूर्णाश्विमिताः खगाङ्कखगेन्दव कर्कमुखे कुजे द्राक् ॥ २३ ॥
१७७ ३५४ ५२९ ७०४
सप्ताद्रिचन्द्रा युगबाणरामा नन्दाश्वि [६ख] बाणाः कृतपूर्णशैलाः ।
८७२ १०४४ १२१३ १३७४
नेत्राद्रिनागा युगवेदकाष्ठा विश्वाश्विसोमाः कृतसप्तविश्वे ॥ २४ ॥
१५३३ १६८५ १८३१
देवाग्निचन्द्रा शरनागतर्कभुवः कुरामाष्टभुव क्रमात् स्युः ।
१०६९ १०
खगाङ्गनन्देन्दुमिताश्चलाङ्का मृगादिकेन्द्रे क्षितिनन्दनस्य ॥ २५ ॥
२६१ ५०६ ७२४ ९०७
रूपाङ्गपक्षा रसपूर्णबाणा वेदद्विशैला अथ शैलखाङ्का. ।
१०५३ ११६१
कृशानुबाणाभ्रशशाङ्कतुल्याः पीयूषभान्वङ्गकनीलकण्ठाः ॥ २६ ॥
१२३६ १२७८ १२९१ १२८३
रसाग्निसूर्या गजसप्तसूर्याः कुनन्दसूर्या गुणनागसूर्या ।
१२५५ १२०९
बाणेषुसूर्या. [1]बृहतीखसूर्याः कर्कादिके ज्ञस्य चलं फलं स्यात् ॥ २७ ॥
१२१ २४२ ३६४ ४७६
रूपाश्विचन्द्रा यमवेदपक्षा वेदाङ्गरामा रससप्तवेदाः ।
५९० ७०० ८०० ९०२
खनन्दबाणा गगनाभ्रशैला अभ्राभ्रनागा नयनाभ्रनन्दा. ॥ २८ ॥
९९८ १०७५ ११४८
नागाङ्कनन्दा शरसप्तकाष्ठास्तस्बेरमाम्भो[नि]धिचन्द्रचन्द्रा ।
१२०८
नागाभ्रसूर्या मकरादिकेन्द्रे चलाङ्ककाः स्युः खलु पण्डितस्य[2] ॥ २९ ॥
१०८ २१४ ३१५ ४०७
गजाभ्रचन्द्रा युगभूमिदस्रा शरेन्दुरामा मुनिपूर्णवेदा. ।
४८४ ५५२ ६१२ ६५३
वेदाष्टवेदा. करबाणबाणाः करेन्दुतर्का गुणबाणतर्का ॥ ३० ॥
६८० ६९१ ६९० ६७८
[७क]खनागतर्का क्षितिनन्दतर्का खनन्दतर्का गजसप्ततर्काः ।

---

१. बृहती नवाक्षरं छन्दः । तेन नवाङ्का गृहीताः । २. बृहस्पतेः ।

शैघ्र्यं फलं [१]चित्रशिखण्डिसूनो कर्कादिकेन्द्रे सुधियोहनीयम् ॥ ३१ ॥

७४ १४७ २१८ २८८
वेदाद्रय सप्तयुगेन्दवश्च गजेन्दुदस्रा गजनागदस्राः ।
३५६ ४१९ ४८० ५३६
तर्केषुरामा खगसोमवेदाः पूर्णाष्टवेदा रसरामबाणाः ॥ ३२ ॥
५८७ ६२४ ६५७ ६७८
सप्ताष्टबाणा युगदस्रतर्का सप्तेषुतर्का गजसप्ततर्काः ।

चलं फलं चित्रशिखण्डिसूनोर्मृगादिकेन्द्रे सुधियावगम्यम् ॥ ३३ ॥

११२८ १९३६
गजयमशशिसोमास्तर्करागाङ्कसोमा
३३०८ २६५८
गजगगनसुरा [२] स्युर्नागपञ्चाङ्गदस्रा ।
२७६३ २७८४
गुणरसमुनिदस्रा वेदनागाद्रिदस्रा
२७४७ २६६९
मुनियुगमुनिदस्रा नन्दतर्काङ्गदस्रा ॥ ३४ ॥

२५६४ २४४० २३०२
वेदाङ्गबाणद्विमिता. खवेदवेदाश्विनो दस्रखरामदस्राः ।
२१५२
द्विबाणचन्द्राक्षिमिताः सितस्य शैघ्र्यं फलं स्यात् किल कर्कटादौ॥३५॥
१९० ३७८ ५६६ ७५३
खनन्दचन्द्रा गजशैलरामास्तर्काङ्गबाणा गुणबाणशैलाः ।
९४० ११२३ १३०३ १४८२
खवेदनन्दा गुणसूर्यचन्द्रा रामाभ्रविश्वे यमनागशक्राः ॥ ३६ ॥

१६५७ १८२८ १८९१
सप्तेषुतर्केन्दुमिता गजद्विगजेन्दवः सोमनवाष्टसोमाः ।
२१४७
[ना?न]गेन्द्रदस्रा म[?ख]करादिकेन्द्रे सितस्य शैघ्र्यं फलमुक्तमेतत् ॥३७॥
५५ १०८ १६० २०७
पञ्चाशुगा वारणपूर्णचन्द्रा खतर्कचन्द्रा नगपूर्णदस्राः ।
२५१ २९० ३२२ ३४८
चन्द्राशुगाक्षीणि खनन्ददस्रा कराश्विरामा गजवेदरामाः ॥ ३८ ॥

---

१. बृहस्पतेः ।

२. अत्र 'गजगगनजिनाः' इति पाठान्तरं साधु । तदनुसारिणी सङ्ख्या २४०८ ।

२६७　　३७८　　३८२　　३८२

सप्ताङ्गरामा　गजसप्तरामा　कराष्टरामाः　करनागरामाः ।

चलं फलं स्यात् खलु कर्कटादौ केन्द्रे त्रयीमूर्तिसुतस्य[1] चैतत् ॥ ३९ ॥

४४　　८८　　१३१　　१७२

कृतार्णवाः कुञ्जरकुञ्जराश्च भूरामचन्द्रा　करसप्तचन्द्राः ।

२११　　२५०　　२८१　　३१२

भूभूयमाः खाशुगलोचनानि　कुनागपक्षाः　करचन्द्ररामा ॥ ४० ॥

३३८　　३५७　　३७२　　३८०

[2]नागाग्निरामा मुनिबाणरामा नेत्राश्वरामा　गगनाष्टरामा ।

केन्द्रे मृगादौ रविनन्दनस्य चलं फलं खादिफ[लं ? ल]क्रमेण ॥ ४१ ॥

---

१. त्रयीमूर्तिः सूर्यस्तस्य सुतः शनिस्तस्य त्रयीमूर्तिसुतस्य ।

२. एते शीघ्रफलाङ्काः ४५० केन्द्रकलावृद्धया पठिताः सन्ति । ते च केन्द्रस्य भुजवृद्धयनुसारिणः सन्ति । अत्राचार्येण तात्कालिकजीवासंबन्धो नाङ्गीकृतोऽतो वृत्तद्वययोगे परं फलं स्वीकृतम् । एतदेव लल्लकमलाकरभट्टयोरप्यभिमतम् ।

अथ भौमादीनां शीघ्राङ्का :—

| शैघ्र्यम् | | ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| कर्कादौ | मं | ० | ८१४ | १४६४ | १९१२ | २१९१ | २३४४ | २४०९ | २४१३ | २३७४ | २३०७ | २२०८ | २०९६ | १९९९ |
| मृगादौ | म | ० | १७७ | ३५४ | ५२९ | ७०४ | ८७२ | १०४४ | १२१३ | १३७४ | १५३३ | १६८५ | १८३१ | १९९९ |
| कर्कादौ | बु | ० | २६१ | ५०४ | ७२४ | ९०७ | १०५३ | ११६१ | १२३६ | १२७८ | १२९१ | १२८३ | १२५५ | १२०९ |
| मृगादौ | बु | ० | १२१ | २४२ | ३६४ | ४७६ | ५९० | ७०० | ८०० | ९०२ | ९९८ | १०७५ | ११४८ | १२०८ |
| कर्कादौ | गु | ० | १०८ | २१४ | ३१५ | ४०७ | ४८४ | ५५२ | ६१२ | ६५३ | ६८० | ६९१ | ६९० | ६७८ |
| मृगादौ | गु | ० | ७४ | १४७ | २१८ | २८८ | ३५६ | ४१९ | ४८० | ५३६ | ५८७ | ६२४ | ६५७ | ६७८ |
| कर्कादौ | शु | ० | ११२८ | १९३६ | २४०८[1] | २६५८ | २७६३ | २७८४ | २७४७ | २६६९ | २५६४ | २४४० | २३०२ | २१५२ |
| मृगादौ | शु | ० | १९० | ३७८ | ५६६ | ७५३ | ९४० | ११२३ | १३०३ | १४८२ | १६५७ | १८२८ | १९९१ | २१५२[2] |
| कर्कादौ | श | ० | ५५ | १०८ | १६१ | २०७ | २५१ | २९० | ३२२ | ३४८ | ३६७ | ३७८ | ३८२ | ३८२ |
| मृगादौ | श | ० | ४४ | ८८ | १३१ | १७२ | २११ | २५० | २८१ | ३१२ | ३३८ | ३५७ | ३७२ | ३८० |

१. अत्र श्लोकपठिताङ्काः ३३०८ ।
२. अत्र श्लोकपठिताङ्काः २१४७ ।

इदानीं भौमादिग्रहस्पष्टीकरणमाह—

४५०
द्राक्केन्द्र[८ क]दोष्णा खशराब्धिभक्ता कला इताङ्क जयवृद्धिनिघ्नात् ।
४५०
शेषात् खबाणाब्धिफलोनयुक्त. कलादिकं शीघ्रफलं ग्रहाणाम् ॥ ४२ ॥

[1]चलफलभादौ मध्यमे तज्जमान्द-
फलदलमपि दद्यात्तत्र तस्मात्समग्रम् ।
मृदुफलमपि मध्ये मन्दखेटोऽत्र तज्जं
चलमपि मृदुखेटे खेट एवं स्फुटः स्यात् ॥४३॥

२१६००
[2]सूर्यस्य मान्दं ग्रहभुक्तिनिघ्नं खखाङ्गभूनेत्रहृतं कलादि ।
फलं धनर्णं रविवत्प्रदेयं भौमादिकानां गगनेचराणाम् ॥ ४४ ॥

चञ्चलोच्चगतितश्च्युता स्फुटाऽचञ्चला च चलकेन्द्रजा गति ।
४५०
चञ्चलाङ्कविवरेण ताडिता पूर्णमार्गणयुगैर्विभाजिता ॥ ४५ ॥

[3]लब्धमत्र कलिकादिकं हि यत्तेन हीनसहिताऽचये चये ।
मन्दसंस्फुटगतिर्गतिः स्फुटा व्यस्तशोधनविधौ जवोऽनृजुः ॥ ४६ ॥

---

१. फलसंस्कारः सूर्यसिद्धान्तवदेवास्ते ।

२. भुजान्तरसंस्कारोऽयम् ।

३ यदि ४५० कलाभिर्यातैष्यफलाङ्कान्तरसमं गतिफलं लभ्यते तदा शीघ्रकेन्द्रगतिकलाभि: किमिति लब्धमिष्टगतिफलं तन्मन्दस्फुटगतौ संस्कार्यमिति । अत्र गतिफलसाधने स्थुल. पन्था आहत आचार्येण । संस्कारक्रमश्च ग्रहलाघवोक्त एवेति स्पष्ट सर्वम् ।

अथ प्रकारान्तरेण ग्रहाणां स्पष्टीकरणम्

तत्रादौ मन्दफलसाधनम्—

३
भुजेन हीनितं त्रिभं भवेत्तु कोटिसंज्ञकम् ।
३ ३
त्रिभिस्त्रिभिश्च भैर्भवेद्युग्मयुग्मक पदम् ॥ ४७ ॥

२१ २० १९ १७ १५ १२
क्षोणीयमाः पूर्णयमा नवा[ज्वा? ब्जाः] सप्तेन्दव पञ्चभुवोऽश्विचन्द्राः ।
९ ५ २
खगा. शरा द्वौ गुणखण्डकानि गुणं विधित्सेत् किल यस्य तस्य ॥ ४८ ॥

१०
भागा दशाप्ता गतखण्डकानि शेषांशका भोग्यदलेन निघ्ना ।
१०
खचन्द्रभक्ता यदवाप्तमत्र तद् यातखण्डैक्ययुतं गुणः स्यात् ॥ ४९ ॥

१०
[1]खण्डानि संशोध्य दशघ्नशेषमशुद्धहृद् भागमुखं धनुः स्यात् ।
दशघ्नशुद्धोन्मितियुग्धनुर्ज्यें व्यस्ते भवेतां विपरीतखण्डै. ॥ ५० ॥

[८ ख]

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|
| २१ | २० | १९ | १७ | १५ | १२ | ९ | ५ | २ |
| २१ | ४१ | ६० | ७७ | ९२ | १०४ | ११३ | ११८ | १२० |

११०३ ४७७ २०८ ५३७
रामाभ्ररुद्रा मुनिसप्तवेदा गजाभ्रदस्रा नगरामबाणाः ।
४७० १३७१ ३१३
खसप्तवेदाः क्षितिसप्तविश्वे विश्वाग्नयोऽर्कान्मृदुहारकाः स्युः ॥ ५१ ॥

| ग्रहाः | सू | च | म | बु | गु | शु | श |
|---|---|---|---|---|---|---|---|
| मृदुफल-हाराः | ११०३ | ४७७ | २०८ | ५३७ | ४७० | १३७१ | ३१३ |

---

१. भास्करोक्तलघुखण्डवद् वासना स्पष्टा ।

२०

[1]भजेन्नखघ्नीं मृदुकेन्द्रदोर्ज्या स्वहारकैर्मन्दफलं ग्रहाणाम् ।

५४ ६ ७

[2]कोटिज्यका वेदशरैर्विभक्ता भानोर्विधोर्वेदहताऽद्रिभक्ता ॥ ४२ ॥

७ ६०

[3]सौम्यारयोर्ज्यैष्यदलं द्विनिघ्नं शैलेर्हृत देवगुरो खबाणैः ।

१२ १२०

सितस्य सूर्यैरिनजस्य खार्कैर्यद्वा गतेर्मन्दफलं ग्रहाणाम् ॥ ४३ ॥

अथ प्रकारान्तरेण शीघ्रफलानयनम्—

२ ५ ८ १२ १५ १७ १० २०

द्वौ पञ्च नागा रवयोऽत्तचन्द्रा सप्तेन्दवो नन्दभुव कृदस्रा ।

२२ २२ २० ९ १५

[4]स्यादाकृतिर्दस्रयमाः खदस्रा नवाशुकेन्द्रांशशरेन्दुलब्धे ॥ ५४ ॥[5]

---

१. "ये केन्द्रदोर्ज्ये लघुखण्डकोत्थे" इत्यादिभास्करोक्तरविचन्द्रमन्दफलानयनवदस्य प्रकारस्य वासना बोध्या । तयैव रीत्या पूर्वोक्तहारा अप्युपपद्यन्ते ।

२. "तत्कोटिजीवा कृतबाणभक्ता रवेर्विधोर्वेदहताद्रिभक्ता" इति भास्करोक्तानुरूपमेवोक्तमिति, अतो वासनाऽपि तथैव ज्ञेया ।

३. अत्र भौमादिग्रहाणां मन्दगतिफलं भिन्नरीत्या साधितम् । तद्यथा—ज्याखण्डस्य परमत्वे गतिफलपरमत्वं ज्याखण्डस्य ह्रासे गतिफलस्य ह्रास इत्यन्वयव्यतिरेकेण मन्दगतिफलमाचार्योक्तमायाति ।

"ग्लौकेन्द्रभुक्तिर्युगनागशैलाः" इत्यादिरीत्या भौमस्य परमगतिफलं कलादि – ६।३० स्वल्पान्तरतः । इष्टगतिफलम् $= \frac{\text{पगफ} \times \text{भोखं}}{२१} = \frac{१३ \times \text{भोखं}}{२ \times २१} = \frac{१३ \times \text{भोखं} \times २}{२ \times २ \times २१} = \frac{\text{भोखं} \times २}{\frac{४ \times २१}{१३}}$

$= \frac{\text{भोखं} \times २}{७}$ स्वल्पान्तरतः । एवमेवान्येषामपि बोध्यम् ।

४. आकृतिनामा द्वाविंशत्यक्षरात्मकश्छन्दोविशेषः, तेनाकृतिशब्देन द्वाविंशतिर्गृह्यते ।

५. एतानि खण्डानि केवलं शीघ्रकर्णसाधनार्थमेव सन्ति । एतानि तथा साधितानि यत् पूर्वोक्तश्लोकरीत्याऽऽनीतशीघ्रकर्णः कर्किमृगादिकेन्द्रे वास्तविकः स्यात् । अयं नम आचार्यस्य वैशिष्ट्यं द्योतयति ।

१२ ४ १ ७
ज्यार्कांशहीना दलिताऽब्धिभक्ता भुवा हृतागै कुजत फलोना ।

६
त्रिज्या स्वशीघ्राङ्कयुता श्रुति स्यात्केन्द्रं रसोर्ध्वं यदि चक्रशुद्धम् ॥५५॥

३ ५ ७
त्रीण्यद्रिभक्तैष्यदलेन हीन' कर्ण. स्फुटो विद्गुरुसूर्यजानाम् ।

७७ ४३ २२ ८६ १२
सप्ताद्रयस्त्र्यब्धिमिता छिदस्रा' स्यु षड्गजादस्रभुवश्चलाङ्का ॥५६॥[1]

| | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | २ | ५ | ८ | १२ | १५ | १७ | १९ | २१ | २२ | २२ | २० | ९ |
| खण्डैक्यम् | २ | ७ | १५ | २७ | ४२ | ५९ | ७८ | ९९ | १२१ | १४३ | १६३ | १७२ |

| ग्रहाः | म | बु | गु | शु | श |
|---|---|---|---|---|---|
| | १२ | २ | ४ | १ | ७ |
| | ह्व | ह्व | ह्व | ह | ह्व |

| म | बु | गु | शु | श | ग्रहाः |
|---|---|---|---|---|---|
| ७७ | ४३ | २२ | ८६ | १२ | चलाङ्काः |
| | | | | | |

दोर्ज्यका च चलकेन्द्रसंभवा चञ्चलाङ्कगुणिताऽऽशुकर्णहृत् ।

तद्धनुश्चलफल धनाधनं खेचरे क्रियघटा[९ क]दिकेन्द्रतः[2] ॥५७॥

शीघ्रकेन्द्रगतिरत्र ताडिता शीघ्रकामुकविभोग्यजीवया ।

४० ७
पूर्णसागरमितैश्च ताडिता सप्तनिघ्नचलकेन्द्रभाजिता[3] ॥ ५८ ॥

---

१ चलाङ्का अन्त्यफलज्याङ्काः ।

२ "घाताद्भुजज्यान्त्यफलज्ययोर्यं । कर्णोद्धृताद्यत्समभेव" इत्यादिभास्करोक्तशीघ्रफलानयनवदुपपत्तिः । "क्रियघटादिकेन्द्रत." इत्यत्र "क्रियघटादिकेन्द्रगे" इति पाठान्तरम् ।

३. 'कर्णभाजिता' इति पाठान्तरं साधु ।

[1]चञ्चलोच्चगतितो विशोधिता शेषकं स्फुटतरा गतिर्भवेत् ।
व्यस्तशोधनविधौ जवोऽनृजुस्त्वेष साधनपथो रथोद्धतः ॥५९॥

[ इदानीं वक्रारम्भे ग्रहाणां शीघ्रकेन्द्रांशानाह ]—

१६४ १४४ १३० १६३
युगाङ्कचन्द्रैर्युगवेदचन्द्रैः खरामचन्द्रैर्गुणतर्कचन्द्रैः ।
११५
बाणेन्दुचन्द्रैश्चलकेन्द्रभागैर्वै वक्रतां वक्रमुखाः प्रयान्ति ॥६०॥[2]

[इदानीं वक्रत्यागारम्भे ग्रहाणां शीघ्रकेन्द्रांशानाह]—

१९६ २१६ २३० १९७
रसाङ्कभूमी रसचन्द्रनेत्रैः खरामनेत्रैर्नगनन्दभूमि ।
२४५
बाणाब्धिनेत्रैश्चलकेन्द्रभागैरवक्रतां वक्रमुखाः प्रयान्ति ॥ ६१ ॥

---

१ अत्राचार्येण स्पष्टा गतिर्लल्लोक्तस्पष्टगतिसाधनवत्साधिताऽस्ति । तथा चोक्तं लल्लेन—
त्रिज्याहता ग्रहगतिर्मृदुकर्णभक्ता मन्दस्फुटा भवति तद्रहिताशुभुक्तिः ।
त्रिज्याहता स्वचलकर्णहृताशुचापभोग्यज्यया विगुणिता विहृताद्यमौर्व्या ॥
लब्धं त्यजेत्स्वचलतुङ्गगतेः सदैव शेषं स्फुटा भवति च ग्रहभुक्तिरेवम् ।
[स्प० अ० श्लो० ४५]

अतः $\text{स्पग} = \text{शीउग} - \frac{\text{शीकेग} \times \text{त्रि} \times \text{भोखं}}{\text{शीक} \times २२५}$ । अत्राचार्यमते लघुज्यैव पठिताऽस्ति । बृहज्ज्यासाधनमाचार्येण न कृतम् । अतस्त्रिज्या = १२० । आद्यज्या २२५ स्थाने लघुखण्डोत्थाद्यज्या २१ गृहीताऽस्ति । तेनाचार्यमते स्पष्टागतिस्वरूपमिदम्—

$\text{शीउग} - \frac{\text{शीकेग} \times \text{भोखं} \times १२०}{\text{शीक} \times २१} = \text{शीउग} - \frac{\text{शीकेग} \times \text{भोख} \times ४०}{\text{शीक} \times ७}$ इत्याचार्योक्तमुपपन्नम् । स्पष्टगतिसाधनसूत्रे—"सतनिघ्नचलकेन्द्रभाजिता" इति पाठोऽस्ति । स कथमपि सङ्गनि नावहति । तत्र केन्द्रस्थाने कर्णेति पाठ एव साधीयानिति विज्ञा विभावयन्तु ।

२. सौरोक्ता एव शीघ्रकेन्द्रांशाः । ब्राह्मोक्तशीघ्रकेन्द्रांशतो भिन्नाः सन्ति ।

श्रीमद्दिवाकरदैवज्ञाः ।

[1]वक्रं प्रयातो नहि पुष्पवन्तौ वक्रादयो वक्रमपि प्रयान्ति ।

शीघ्रोच्चवन्तो ननु युक्तमेतदह्निप्रहीणः कुटिलत्वमेति ॥ ६२ ॥

[इदानीमुदयास्तयोः शीघ्रकेन्द्रभागानाह]—

२८ १४ १७

भुजङ्गनेत्रैर्युगरात्रिनाथैर्महीध्रभूमिः कुजपूज्य(बृ)मन्दाः ।

३६०

प्रागुद्गमं यान्त्यपरत्र चास्तं तैरेव भागै खरसाग्निशुद्धैः ॥ ६३ ॥[2]

२०५ १८३

चन्द्रात्मभूः पञ्चनखैः कविस्तु रामाष्टभूमि. समुदेति पूर्वे ।

५० २४

खाक्षैर्बुधो वेदकरैः कविश्च समुद्गमं यान्ति[3] हि पश्चिमायाम् ॥ ६४ ॥

३१० ३३६

सोमात्मजः खेन्दुगुणै कविस्तु तर्काग्निरामैः समुपैति पूर्वे ।

१५५ १७७

[१ख]अस्तं प्रतीच्यां शरबाणभूमिर्बुधः कविः सप्तकसप्तभूमिः ॥ ६५ ॥

अवक्रवक्रादिलवाधिकोनाः कलीकृताश्चञ्चलकेन्द्रभागाः ।

द्राक्केन्द्रगत्या विहृता गतैष्यमाप्तैर्दिनैर्वक्रमुखं क्रमेण ॥ ६६ ॥

भौमास्ततः स्यादुदयस्तु तस्माद्वक्रं ततः स्यात्खलु मार्गता च ।

४ १० २ १०

ततोऽस्त एवंक्रमतो हि वेदैर्दिग्भिर्यमाभ्यां खकुभिश्च मासैः ॥६७॥

१ ४। ४ ४।

एवं भुवा साङ्घ्रियुगैर्युगैश्च साङ्घ्र्यब्धिभिर्देवगुरोः शनेस्तु ।

१। ३॥ ४। ३॥

सपादरूपेण गुणैर्युगैश्च दलान्वितैर्वह्निमितैश्च मासैः ॥६८॥

---

१. अत्र वक्रादीना वक्रत्वे दृष्टान्तसङ्गतिर्विचारणीया ।

२ ग्रहलाघववद्वासना स्फुटा ।

३. 'यान्ति' इति बहुवचनप्रयोगोऽसङ्गतस्तेन "तावपरत्र यातः" इति पाठान्तरं साधु ।

दिनैर्भूपूर्वास्तत उद्गमः स्यात्परे ततो वक्रमतः परेऽस्तः ।

३२　३२　३　१६　३　३२

प्रागुद्गमः स्यादृजुता ततोऽस्तो रदै रदैर्वह्निनृपाग्निदन्तैः ॥६६॥

२॥　　८　　३/४ १/४ ३/४

एवं[1] सार्धद्विमास्याऽष्टमासैस्त्रिकुगुणाङ्घ्रिभि. । (२२॥७॥२२॥ दिनसंख्या)

४　८

[2]स्तम्बेरममितैर्मासैर्भृगोः पूर्वास्ततो भवेत् ॥७०॥

[ इदानीं तिथिकरणयोगनक्षत्राणां साधनमाह ]—

१२

[3]सूर्योनचन्द्रस्य लवा विभक्ताः सूर्यैर्भवेयुस्तिथयो गताश्च ।

१२

सूर्याच्च्युतं शेषकमत्र भोग्यं स्याद्भुक्तभोग्या विकला रवीन्द्वोः ॥७१॥

गत्यन्तरेणापहृता विधेया गतागतास्ताः घटिकास्तिथेः स्युः ।

२　　७

गततिथिर्द्विगुणा मुनिशेषिताऽऽदिमदले करणं हि बवादि [तत् ? त.] ।

१

कुसहितं　त्वपरे　शकुनिप्रभृत्यसितभूतदलादिचतुष्टयम् ॥७२॥

८००

सार्केन्दुलिप्ताः शशिनश्च लिप्ताः खखाष्टभक्ता युतिभे गते स्तः ।

हृता इतैष्या विकलाश्च युत्या गत्योस्तु गत्या गतगम्यघट्यः ॥७३॥

[ इदानीं ग्रहाणां राशिसंक्रान्तिमानं भतिथिकरणयोगानां सन्धिमानं चाह ]—

६०

[4]बिम्बं खतर्कैर्गुणितं [१० क] ग्रहस्य भुक्त्या हृतं संक्रमनाडिकाः स्युः ।

सूर्यस्य ताः पुण्यतमा. खगस्य संक्रान्तिगो[5] मिश्रफलं ददाति ॥७४॥

---

१. अत्र ग्रहलाघवे केवल मासद्वयमेव पठितमस्ति ।

२. स्तम्बेरमाः हस्तिनः । गजगतिरित्यष्टाक्षरात्मकं छन्दः । तेन सर्वत्र गजवाचिशब्दैरष्टा गृह्यन्त इति मे वितर्कः ।

३. "भक्ता व्यर्कविधोः" इत्यादिग्रहलाघवोक्तसाधनवत्सर्वं निरवद्यम् ।

४. सिद्धान्तशिरोमण्यनुरूपमेतत् ।

५. "खगः स्वसंक्रान्तिगो" इति पाठान्तरं साधु ।

स्वस्वहारहृता सोमबिम्बस्य च विलिप्तिकाः।
तिथ्यादीनां क्रमात्सन्धिर्विमिश्रफलदो मत. ॥७५॥

[इदानीं सूक्ष्मनक्षत्राणामानयनमाह]—

[1]वदन्ति राधादिति भध्रुवाणि चाध्यर्धभोगानि षडत्र भानि।
षडर्धभोगानि भुजङ्गशक्रसमीररुद्रान्तकवारुणानि ॥७६॥

शेषाणि भानि समभोगकराणि तानि मध्या गतिस्तु शशिन' कथितोऽत्र भोग
सर्वर्क्षभोगकलिकोनितचक्रलिप्ता वैश्वाग्रतोऽत्र विधिभस्य भवेत् प्रभोग' ॥७७॥ (२१६००)

अभीष्टखेटस्य च लिप्तिकाभ्यो दस्रादिभोगानपहाय भानि।
विशुद्धसंख्यानि गतानि शेषमशुद्धभोगात्पतितं तदेष्यम् ॥७८॥

गता[ऽगे ? गते] खाङ्गहते (६०) स्वगत्या भक्ते गतैष्या घटिकाः स्युरित्थम्।
विवाहयात्रादिफलप्रसिद्ध्यै सूक्ष्मर्क्षसिद्धि' कथिता मयैषा ॥७९॥

श्रीमन्नृसिंहात्मजरङ्गनाथविनिर्मिते खेचरसाधनेऽस्मिन्।
सिद्धान्तचूडामणिनामधेये स्पष्टाधिकार परिपूर्तिमागात् ॥८०॥

इति श्रीमद्दैवज्ञनृसिंहसुतदैवज्ञरङ्गनाथविरचिते सिद्धान्तचूडामणौ
स्पष्टग्रहसाधनाधिकारो द्वितीय ॥२॥

---

१. "राधादितिभध्रुवाणि" इत्यत्र राधा (अनुराधा) स्थाने भास्कराचार्येण विशाखानक्षत्रं पठितमस्ति। एतत्सूक्ष्मनक्षत्रानयनं मुनिप्रणीतमस्ति। तथा चोक्तं भास्कराचार्येण वासनाभाष्ये—"इह यन्नक्षत्रानयनं कृतं तत् स्थूलं लोकव्यवहारार्थमात्रं कृतम्। अथ पुलिशवशिष्ठगर्गादिभिर्यद्विवाहयात्रादौ सम्यक् फलसिद्ध्यर्थं कथितं तत् सूक्ष्ममिदानीं प्रवक्ष्ये" इति।